

चौखम्बा

# संस्कृतशिक्षणम्

## व्याकरण-साहित्य-ज्योतिष-दर्शनशास्त्र-शिक्षणसहितम्




लेखक

डॉ. उदय शंकर झा

# संस्कृतशिक्षणम्

( व्याकरण-साहित्य-ज्योतिष-दर्शन-शास्त्रशिक्षण सहितम् )

।। श्रीः ।।

चौखम्बा सुरभारती ग्रन्थमाला
518



# संस्कृतशिक्षणम्

(व्याकरण-साहित्य-ज्योतिष-दर्शनशास्त्र-शिक्षणसहितम्)

लेखक
**डॉ. उदय शंकर झा**
प्रवक्ता-शिक्षाशास्त्र विभाग
कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालय
कामेश्वरनगर-दरभंगा (बिहार)



**चौखम्बा सुरभारती प्रकाशन**
वाराणसी

संस्कृतशिक्षणम्

प्रकाशक :

**चौखम्बा सुरभारती प्रकाशन**

(भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक)

के 37/117 गोपाल मन्दिर लेन, पोस्ट बॉक्स न. 1129

वाराणसी 221001

दूरभाष : (0542) 2335263

e-mail : csp_naveen@yahoo.co.in



संस्करण : 2013

₹ 225

अन्य प्राप्तिस्थान :

**चौखम्बा पब्लिशिंग हाउस**

4697/2 ग्राउण्ड फ्लोर, गली न. 21-ए

अंसारी रोड़, दरियागंज

नई दिल्ली 110002

दूरभाष : (011) 32996391, टेलीफैक्स : 23286537

e-mail : chaukhambapublishinghouse@gmail.com

*

**चौखम्बा संस्कृत प्रतिष्ठान**

38 यू. ए. बंगलो रोड़, जवाहर नगर

पोस्ट बॉक्स न. 2113

दिल्ली 110007

*

**चौखम्बा विद्याभवन**

चौक (बैंक ऑफ बड़ोदा भवन के पीछे)

पोस्ट बॉक्स न. 1069

वाराणसी 221001

# प्रशस्तिवाक्

निखिल-लोकाभिरामस्य भगवतः रामस्य जगज्जनन्याः जानक्याश्च परमानुकम्पया कामेश्वर-सिंह-दरभंगा-संस्कृत- विश्वविद्यालयस्थित- शिक्षाशास्त्रविभागे प्राध्यापक पदं विभूषयता आयुष्मता डॉ. उदय शंकर झा शर्म्मणा प्रभूत-परिश्रमपुरस्सरं प्रणीतः ''संस्कृत-शिक्षणम्'' इति व्यपदेशप्रसिद्धःग्रन्थः प्रकाश्यमेति इति निशम परमप्रमोदम-हमनुभवामि। सरल-सरस-संस्कृतभाषा-निबद्धोऽयं ग्रन्थःशिक्षाशास्त्रमधीयानानां छात्राणा-मध्यापकानाञ्च कृते परमोपयोगीति नास्त्यत्र संशीतिलेशोऽपि। भारतवर्षस्य प्रायः निखिलेष्वपि विश्वविद्यालयेषु शिक्षाशास्त्रस्य अध्ययनमध्यापनञ्च विधीयते। तत्र आधुनिकविश्वविद्यालयेषु महाविद्यालयेषु च यद्यपि अध्ययनाध्यापनयोःप्रश्नोत्तरयोश्च माध्यमं प्रायेण राष्ट्रभाषा (हिन्दी) अङ्गीकृता, किन्तु पारम्परिक-संस्कृत-विश्वविद्यालयेषु, मानितविश्वविद्यालयेषु, विविध-विद्यापीठेषु वा देवभाषा-(संस्कृत) माध्यमेनैव अध्यापनं परीक्षा च सम्पाद्यत इति नास्त्यविदितं विदुषाम्।

यद्यपि शिक्षाशास्त्रवाङ्मयस्य विविधाङ्गान्याधृत्य हिन्दीभाषा-निबद्धानां ग्रन्थानां नास्ति न्यूनता, किन्तु संस्कृतभाषया विरचिताः ग्रन्थाः विरलाः अङ्गुलिगण्या एव नयनपथमुपयान्ति। तेषु कतिपयग्रन्थानां भाषा दुरूहा, केषाञ्चन प्रतिपादनशैली दुष्या, इतरेषाञ्च प्रतिपाद्यविषयदृष्ट्या अपूर्णता दृग्गोचरीभवतीति एकस्य विषय-भाषा-शैलीदृष्ट्या सर्वाङ्गपरिपूर्णस्य, निर्दुष्टस्य परीक्षादृशा छात्रोपकारकस्य लघुकलेवरस्य ग्रन्थस्य महती आवश्यकता चिरकालादनुभूयते स्म छात्रैरध्यापकैश्च। प्रकृतलेखकेन डॉ. उदय शंकर झा शर्म्मणा दीर्धकाल-प्रतीक्षितस्य भाषा-शैली-प्रतिपाद्य-विषयादिदृष्ट्या परिपूर्णस्य, अति-सरल-संस्कृत-निबद्धस्य, ग्रन्थरत्न-स्यास्य प्रणयनं विधाय शिक्षाशास्त्र प्रणयिनां छात्राणां प्राध्यापकानाञ्च महानुपकारो विहित इति परमप्रमोदस्यायं विषयः।

लेखकस्यानेन सत्प्रयासेन न केवलं शिक्षाशास्त्रमधीयानाः छात्राः, अध्यापकाः एव, अपितु जिज्ञासवः सामान्यजनाः, समालोचकाः, अनुसन्धातारश्च अत्यन्तमुपकृताःभविष्यन्ति, संवर्धयिष्यति च ग्रन्थोऽयं शिक्षा-शास्त्रस्य वैभवं सुषमाञ्चेति दृढो मे विश्वासः।

परब्रह्मपरमेश्वरस्य पावन-पादयुग्मयोर्निज-प्रणामाञ्जलिं विनिवेदयन्नहं लेखकस्य दीर्घायुष्यं, निरन्तरमभ्युदयं, नित्यं नूतन-ग्रन्थ-प्रणयनशीलत्वञ्च कामयमानः सभाजयामि तं निजाशीर्वचोभिरिति शमस्तु।

(प्रो० वाचस्पतिशर्मा त्रिपाठी)

संस्कृतदिवसः
16.08.2008

# प्राक्कथनम्

'भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा' इति कथनस्याभिप्रायं स्मारं स्मारं संस्कृतशिक्षणनामकस्य ग्रथस्य प्रणयने प्रवृत्तोऽभूवम्। संस्कृत-ज्ञानमन्तरा-अन्यासां भाषणामवबोधने महत्काठिन्यं संजायते। अतस्तस्य नानाविधग्रन्थानां तद्गतसूक्ष्मविषयाणां सूक्ष्माति-सूक्ष्मज्ञानं कालसापेक्षमिति नाविदितम्। अतः स्वल्पैः कालैः कथमेतेषां सम्यग्-ज्ञानं स्यात् इति मनसि निधायेवास्माकं पूर्वाचार्यैः प्रशिक्षणस्यावश्यकतानुभूता। पुराकाले अरण्ये गुरुभिः साकं शिष्याः गुरुसेवानतत्पराः सन्तः अध्ययनरताः भवन्तिस्म। तस्मिन् काले विद्या-यथा कण्ठस्था भवेत् तथैव यत्नो भवतिस्म। अमरकोष-लघुसिद्धान्त- कौमुदी-तर्कसंग्रहादिग्रन्थाः प्रामुख्येन बालानां कृते अनिवार्याः भवन्तिस्म। किन्त्विदानीं तेषां ग्रन्थगतविषयाणां ज्ञानाय नवा-नवा प्रणाली आविष्कृता वर्त्तते। यस्य विषयस्याध्यापनं कक्षायां प्रस्तुतं भवति तस्मिन् विषये काचन कथा किमप्युदाहरणञ्च अध्यापनात् पूर्वमेव छात्रायाः समक्षं देयं भवति, येनोदाहरणमुखेन विषयाणां ज्ञानं त्वरितमेव संजायेत। अतः शब्दज्ञानापेक्षयार्थ ज्ञानमिदानीं आवश्यकम्। कण्ठस्थाः शब्दाः कण्ठस्थञ्च वाक्यं कदाचिद् विस्मृताऽपि भवति, किन्तु यदि तेषां शब्दानामर्थज्ञानं सुचारुतयाऽभ्यस्तं भवेत् तर्हि निजनिर्मितशब्दावल्यां तेषामुपस्थापनं सुकरं भवति, यद्यपि ग्रन्थकृच्छब्दानां विस्मृतिः कथं न स्यात्। च, तु, वा, हि, क्रमेण शिक्षाप्रणाली, शिक्षणकला च प्रारब्धा वर्त्तते, यया प्रणाल्या कलया वा विषयावबोधने भवति सौकर्यम्। अत एतादृशीं प्रणालीमनुसृत्य अध्यापिताश्छात्राः यदा अध्यापने प्रवृत्ताः भवन्ति, तदा तेषामपि किमपि काठिन्यमध्यापने न भविष्यतीति मनसि निधायैवास्याः कलायाः प्रादुर्भावः संजात इति मन्ये।

अस्यग्रन्थस्य प्रणयने मदृशानामल्पज्ञानां "प्रांशुलभ्ये फले लोभादुद्वाहुरिव वामन" इव गतिः संजाता, किन्तु चिरन्तनोक्तिभिः विविधविषयानाकलय्य गुरुकल्पानां विवुधा वचांसि आशीर्वादांश्चावाप्य यत्कृतं तद् भवद्हस्ते सम्प्रति वर्त्तते। तेषु मुख्यतमाः सन्ति-स्नातकोत्तर-धर्मशास्त्र-पूर्व विभागाध्यक्षाः डॉ. वाचस्पति शर्मत्रिपाठी महोदयाः, येषांआशीर्वचोभि ग्रन्थोऽयं समाप्तिमगात्। अत एतेषां चरणकमलेषु प्रणतिं विनिवेद्य प्रसन्नो

भवामि। सरस्वती विलास संस्कृत महाविद्यालयस्य प्राक्तन प्रधानाचार्याः (सम्प्रति विशेष पदाधिकारिणः परीक्षाविभागीयाः) डॉ. वैद्यनाथ मिश्र भास्कर महोदयाः, येषां विचार-सारल्येन ग्रन्थसारल्यमादधाति। तान् प्रति सदा कृतज्ञतामावहामि। अस्य ग्रन्थस्य प्रणयणार्थं उत्प्रेरक रूपेण ममाग्रजाः पूज्यचरणा प्राक्तन दर्शनविभागाध्यक्षाः डॉ० भगीरथ मिश्र महोदयाः प्राथम्येन प्रणम्याः येषां आशीर्वचोभिः ग्रन्थस्यास्य समाप्तिमगात्, अविस्मरणीय कार्तज्ञं भूयोभूयो विज्ञापयामि। तथा अस्य ग्रन्थस्य निर्माणक्रमे येषां अन्येषां धीमतां विदुषां सुहृदवर्गाणां सहाय्यमवाप्य विषयाणां परिवर्तनं परिवर्द्धनं मया विहितं, तेषु (1) डॉ. बौआनन्द झा, (2) डॉ. रामचन्द्र झा, (3) डॉ. विद्येश्वर झा, (4) डॉ. घनश्याम मिश्रः, (5) डॉ. विनय कुमार मिश्रः, (6) डॉ. नन्दकिशोर चौधरी, अतस्ते सर्वेऽपि धन्यवादार्हाः।

अन्ते-इदमेव निवेदनं मदीयं यन्मम बुद्धिदोषात् कम्प्यूटरजन्य दोषाद् वा यास्त्रुटयः समुपलभ्यन्ते तासां समाधानं पूर्वापरसन्दर्भमनुसृत्य कर्त्तव्यं सुधीभिरिति। यतः-

**जायतेस्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।** इति।।

दीपावली
05-11-2010

विदुषामनुचरः
उदय शंकर झा
**( डॉ. उदय शंकर झा )**

# शुभानुसंशसनम्

शब्दशास्त्रसादरे सानन्दं तितीर्षुकामेन मूलतः व्याकरण प्राध्यापकेन सम्प्रति कामेश्वर सिंह दरभंगा संस्कृत विश्वविद्यालयस्य शिक्षा- शास्त्रविभागे प्राध्यापकपदासीनेन तत्र भवता डॉ. उदय शंकर झा शर्मणा संग्रथितं संस्कृत-शिक्षणविषयकं पुस्तकमाद्यन्तं पठित्वा नितरां मोदमवाप चेतः।

संस्कृतभाषा क्लिष्टतमेति लोकापवादं समूलमुन्मूलयितुं निष्ठावता प्रध्यापकेन सुगमपद्धत्या संस्कृत शिक्षणविषयकं पुस्तकं विरचय्य एकतः संस्कृतं लोकभाषेव सरला सुबोध्या सुपाठ्या चेति प्रमाणयितं चेष्टते तदा अपरत्र शिक्षाशास्त्रविभागे येऽप्यध्ययनरताः शिक्षर्थिनः ते शिक्षा-शास्त्रपरीक्षामुत्तीर्य्य संस्कृताध्यापनविधौ न केवलं भाषाविदां मध्ये मान्याः स्युरपितु प्राथमिक-मध्य-माध्यमिक--महाविद्यालयीयसंस्थासु ये संस्कृताध्यापनरताश्छात्राः तेषामप्यधिकं ज्ञानविज्ञानकौशलं वर्द्धयितुं सत्पयासः स्तुत्यः अनुकरणीयश्च।

भगवती भारती संस्कृतशिक्षारक्षणव्रतधरस्य पुस्तकप्रणेतुः सत्प्रयासं दिक्षु प्रसारयतु यथा संस्कृतभाषा-सम्वर्द्धने इतोऽप्यधिकं जागरुकभावेन अन्यानपि सद्ग्रन्थान् संग्रथितुं वद्धपरिकरःस्यात्। विद्वांसः रचनाकर्त्तुः संस्कृतशिक्षण सरणिं समर्थयन्तु शिक्षार्थिनश्च ग्रन्थ-ज्ञानेन संस्कृतशिक्षणविधौ लाभान्विता भवन्तु इत्येव भूयो भूयः कामना।

तिथि 22. 03. 2009

डॉ० वैद्यनाथ मिश्र भास्कर

# विषयानुक्रमणिका

## साहित्यशास्त्रशिक्षणम् Sahitya

## ज्योतिष-शास्त्र-शिक्षणम् Astrology

卐 卐 卐



# 1

# संस्कृतशिक्षणविधिः

# Teaching of Sanskrit

उदयशङ्करो विप्रःस्वल्पज्ञानयुतोऽपि सन्।
वासुदेवं प्रणम्यादौ मतिमन्तं पितामहम्।।
शिक्षाशास्त्रप्रविष्टानाञ्छात्राणां ज्ञानवृद्धये।
संस्कृतशिक्षणं चक्रे जयकान्तसुतोमुदा।।

## 1. संस्कृतभाषायाः महत्त्वम्।

## The importance of sanskrit language

भाष्यते व्यवहारादिषु प्रयुज्यते इति भाषा, भाषा व्यक्तायां वाचि इति धातोः निष्पन्नः अयं शब्दः। मानवः स्वमनसि विद्यमानाः आलोचनाः भावनाः अनुभूतिश्च अर्थयुक्तैर्ध्वनिभिः संकेतैः, अर्थयुक्तैः लिखितसंकेतैश्च व्यक्तीकरोति। भाषानाम अभिप्रायप्रकटनसाधनम्। (Vehicle of thought) वस्तुतः लोके द्वयोर्मनुष्ययोर्मध्ये परस्परम् अवगाहनाय भावग्रहणाय भावविनिमयाय च भाषां विना न अन्यत् साधनमस्ति। 'भाषणाद् हि भाषा' व्यक्तवाग्रूपेण यस्याः अभिव्यक्तिः क्रियते सा भाषेति कथ्यते। ध्वन्यात्मकशब्दैः विचाराणां प्रकटीकरणमेव भाषा। भाषयैव मानवः मानव इति परिगम्यते। भाषयति या सा भाषा। (Man is man' Because of his speech) व्यक्तवाचं समुच्चारणे इति पाणिनिसूत्रमपि इदमेव दृढी करोति। सन्ति लोके बह्व्यः भाषाः, यासु संस्कृतभाषा अति प्राचीना समृद्धा च। संस्कृतभाषायां ऋग्यजुस्सामाथर्वाणाः इति चत्वारो वेदाः, शिक्षा, व्याकरणं, निरुक्तं, ज्योतिषं, छन्दः, कल्पश्चेति षडङ्गानि, चतुर्दशविद्याः, विज्ञानं, आयुर्वेद आदि ग्रन्थाश्च सन्ति। इयं विद्या भारतीयानां प्रतिष्ठात्मिका, औरसा धननिधयः कामधेनुः च समस्तज्ञानाकारा भारतस्यैक्यप्रदात्री धर्मार्थकाममोक्षप्रदात्री चास्ति। तदारम्भ्य अद्य यावत् याः याः शिक्षाः यानि यानि ज्ञानविज्ञानानि सन्ति, ताः ताः शिक्षाः तानि तानि ज्ञानविज्ञानानि अस्यां भाषायां सन्निहितानि सन्ति। अतः अतिसूक्ष्म भावानां स्पष्टीकरण-विषये संस्कृतं विना नैव समर्थो भवितुमर्हति। भारतीयं सर्वस्वं

विश्वस्य समग्रं तत्त्वं चास्यां सम्बद्धमस्ति। संस्कृतभाषायाः विभागा एवं सन्ति =1. वैदिकभागः 2. शास्त्रभागः 3. लौकिकभागः 4. ज्ञानभागः 5. विज्ञानभागः 6. वैद्यः 7. खगोलः 8. सांकेतिकभागश्चेति।

**( क ) संस्कृतभाषायाः प्रकृतिः**

1. The nature of language

सम् उपसर्गपूर्वक कृञ् धातोः क्त प्रत्यये कृते सति सुडागमे संस्कृत इति शब्दः निष्पन्नो भवति। सम्यक् कृतं संस्कृतम् अर्थात् प्रकृतिप्रत्ययपुरस्सरं कृतमिति हेतोः अस्याः भाषायाः कृते नामैतत् सार्थक्यम् अभवत्। संस्कृतानां भाषा, संस्कृता च सा भाषेति इति द्विधा विग्रहवाक्यं वर्त्तते।

**( ख ) संस्कृतस्य भाषावैज्ञानिक-महत्त्वम्**

2. Linguistic importance of sanskrit.

''वर्णनात्मक-ऐतिहासिक-तुलनात्मकान् अध्ययनानां माध्यमेन भाषायाः प्रकृतेः विकासस्योत्पत्तेःसंरचनायाश्चाध्ययनपूर्वकम् एतेषां समेषां विषयाणां सैद्धान्तिकं निर्धारणमेव भाषाविज्ञानम्।'' अर्थात् ''भाषाविज्ञानं भाषयाः उत्पत्तेः, तस्याःसंरचनायाः, तस्याः विकासस्य तस्याः ह्रासस्य च अध्ययनं क्रियते। मानवः केन प्रकारेण वक्ति? तस्योपभाषायाःविकासः केन प्रकारेण भवति? भाषासु उपभाषासु च केन केन हेतुना कदा कदा च परिवर्तनं अथवा विकासः भवति? केन प्रकारेण काचनापि भाषा विकसिता सति कस्याश्चन स्वतन्त्रायाःभाषायाः स्वरूपं धत्ते? एतेषां समेषां विषयाणां विधिवत् अध्ययनं क्रियते। भाषाविज्ञान नामके विषये शास्त्रेऽस्मिन् शब्दानामुत्पादितः रूपविकासः, वाक्यानां संरचना प्रभृतिनां विषयाणां विवेचनं क्रियते। अनेन प्रकारेण भाषाविज्ञानस्य माध्यमेन कस्याश्चन भाषायाः वैज्ञानिकमध्ययनं क्रियते इति निश्चीयते।

संस्कृतवैदिकवाङ्मये वहूनि रूपाणि प्राप्यन्ते, येषां प्रयोगः सम्प्रति लौकिकसंस्कृते, भाषायां वा नैव दृश्यते। एतस्यामवस्थायां लौकिक-अलौकिकयोः संस्कृतयोः अध्ययनं करोति भाषाविज्ञानम्। भाषावैज्ञानिकानां प्रयोगेणैव सुनिश्चितं जातं यत् संस्कृत-पालि- प्राकृतानां भाषाणां मूलम् एकमेव आस्ते। संस्कृतसाहित्यस्य वैज्ञानिकम् अध्ययनं करोति भाषाविज्ञानम्। भाषाविज्ञानस्य सम्बन्धः सर्वेषां मानवानां भाषाभिः सममस्ति। इत्थं भाषाविज्ञाने ध्वनेः, ध्वनि-उच्चारणोपयोगिनां स्वरयन्त्रमुखजिह्वादि-अङ्गानां, प्रकृति-प्रत्ययादीनां, संज्ञा-सर्वनाम-क्रिया-विशेषणादीनां, नामाख्यातोपसर्गनिपातानां, पदपदार्थविषयकानां विकारादीनां, विकारमूलककारकानाम् अन्येषां विविधविध-विषयाणाञ्च अध्ययनं क्रियते।

पाणिनीय शिक्षायाम्-(श्लोक-संख्या-षट्तःदशपर्यन्तम्) वर्णानां विभागः पञ्चधा कृतं स्यात् ।यथा-(1) स्वरतः, (2) कालतः, (3) स्थानात्, (4) आभ्यन्तरप्रयत्नात्, (5) वाह्य-प्रयत्नात्। संस्कृतभाषा-विषयक-वर्णोत्पत्ति-सिद्धान्तस्य अतीव वैज्ञानिकं निरूपणं कृतम्।

संस्कृतभाषायाः भाषाविज्ञानिक-वर्गीकरणं-संस्कृतभाषायाः वैज्ञानिकमध्ययनमेव

भाषाविज्ञानमित्यभिधीयते। इदानीं भाषाविज्ञानस्य पञ्चैव प्रकारास्समुपलब्धाःसन्ति। प्रकाराः संक्षेपेण अत्र प्रस्तूयन्ते।

**( 1 ) ऐतिहासिकं भाषाविज्ञानम्**—अस्मिन् भाषाविज्ञाने भाषायाः विकासस्य-अध्ययनं क्रियते। ऐतिहासिक भाषावैज्ञानिकाः इदमपि प्रतिपादयन्ति यत् संस्कृत-पालि-प्राकृतानां भाषाणाम् एकमेव मूलमास्ते।

**( 2 ) प्रायोगिकं भाषाविज्ञानम्**—अन्यस्याः भाषायाःशिक्षा केन प्रकारेण प्रदेया? अनुवादःकेन प्रकारेण करणीयः? उच्चारणस्य दोषा केन प्रकारेण अपाकरणीयाः? इत्यादीनां प्रभृतीनां विषयाणां विचारः अत्र क्रियते।

**( 3 ) संरचनात्मकं भाषाविज्ञानम्**-भाषायां प्रयुक्तानां सर्वेषां तत्त्वानां पारस्परिके विशिष्टे सन्दर्भेऽध्ययनं क्रियते।

**( 4 ) वर्णानात्मकं भाषाविज्ञानम्**- विश्लेषणात्मकमध्ययनं वर्णनातमकं च करोति भाषाविज्ञानम्। एतादृशीनामपि भाषाणामध्ययनं वर्णनात्मकेन भाषाविज्ञानेन क्रियते। एतादृशी व्याहारमात्राश्रिता संस्कृतभाषा अतीतकालविशेषे कीदृश्यासीत्?तस्यां कति ध्वनयः आसन्? पदानां रचना कीदृश्यासीत्?वाक्यानि कीदृशान्यासन्?इत्यादीकानां विषयाणामध्ययनं वर्णनात्मकं भाषाविज्ञानं करोति।

**( 5 ) तुलनात्मकं भाषाविज्ञानम्**-एकाधिकानां भाषाणां तुलनात्मकमध्ययनं विभिन्नान् कालानाश्रित्य क्रियते।

## भाषाविज्ञानस्याङ्गानि

अस्मिन् अध्ययने ध्वनीनामुच्चारणस्य, अक्षराणां शब्दानां पदानां वाक्यानां च संरचनायाः विवेचनं क्रियते।

**( 1 ) ध्वनिविज्ञान**-सम्पूर्णा भाषा ध्वन्याश्रिता भवति। यथा-(क) स्वरयन्त्रम्, (ख) मुखम्, (ग) जिह्वा, (घ) ताल्वादिकं च। तदनन्तरं ध्वनीनामुच्चाणस्थानस्य उच्चारणप्रयत्नस्य दृष्ट्यापि वर्गीकरणं क्रियते।

**( 2 ) पदविज्ञानम्**-पदपदार्थ-निरुपयता महर्षिणा पाणिनिनाऽभिहितम्- "सुप्तिङन्तंपदम्"। अस्मिन् पद विज्ञाने नानाविधानां पदानामध्ययनं क्रियते। यथा-संज्ञा, सर्वनाम, क्रिया, क्रिया- विशेषणादिकानां, धातुरूपाणां, शब्दरूपाणां च। पदानि एव भाषायाः मूलभूतानि सन्ति।

**( 3 ) वाक्यविज्ञानम्**-अनेकेषां सार्थकानाम् अन्वितानाञ्च पदानां समूहो वाक्यमित्यभिधीयते। योगयता, आकांक्षा, आसतिश्च निरूपनं क्रियते। अत्र वाक्यानाम् ऐतिहासिकं तुलनात्मकमध्ययनमपि प्रस्तूयते।

**( 4 ) अर्थविज्ञानम्**-शब्दार्थयोः शब्दविदः अभेद-सम्बन्धं स्वीकुर्वन्ति। अर्थविज्ञानं

भाषाविज्ञानस्यातीव महत्त्वपूर्णमङ्गं वर्तते। शब्दानाम् अर्थपरिवर्तनानि तेषामर्थ-परिवर्तनानां कारणानि प्रभृतयो विषयाः अर्थविज्ञानस्य विषयाः सन्ति।

## भाषायां वर्गीकरणम्

सम्प्रति अस्मिन् संसारे त्रीणि सहस्त्राणि भाषाः प्रचलन्ति।एतासां सर्वासा भाषाणां द्विधा वर्गीकरणं कृतमस्ति।

(1) आकृतिमूलकम्-वाक्याणां पदानाञ्च अध्ययनं क्रियते।

(2) पारिवारिकं वर्गीकरणम्-भाषायाः पारिवारिकं वर्गीकरणमतीव वैज्ञानिकमस्ति। वर्गीकरणेऽस्मिन् रचनातत्त्वम्, अर्थतत्त्वञ्च समानरूपेण आलोच्यते।ध्वनिः, पदरचना, वाक्यरचना, अर्थः, शब्दसम्पत्तिः, स्थानसान्निध्यं च एतेषु षट्सु विषयेषु साम्ये सति भाषायाम् एकः परिवारः भवति।

**(ग) भारतीयभाषाषु संस्कृतस्य स्थानम्।**

3 Place of sanskrit language among indian languages.

सर्वासां भारतीयभाषाणां कृते संस्कृतभाषा जननीति, भारतीयभाषासु संस्कृतस्य प्रभावः अस्तीति संस्कृतछायास्सन्तीति। त्रिवेणीसङ्गमे सरस्वती नदी अन्तर्लीना यथास्ति तथैव संस्कृतभाषा सर्वासु भारतीयभाषासु अन्तर्लीना इति सर्वे स्वीकुर्वन्ति। संस्कृतभाषायाः प्रभावःअत्यधिक अस्तीति ताभ्यः भाषाभ्यः ज्ञायते। संस्कृत-साहित्य तत्सम्बद्धा-गाथाः कथाः भारतीयप्रादेशिकभाषासु अनूदिताः। न केवल उत्तरभारतभाषासु अपि च दक्षिण-भारतप्रादेशिकभाषासु तमिलभाषां विना अवशिष्टासु भाषासु 80% अथवा 90% पदानि संस्कृतभाषा सम्बद्धान्येव। अतः सर्वा प्रादेशिकभाषाः संस्कृतभाषा समुत्पन्ना इति निश्चप्रचं वक्तुं शक्यते, संस्कृतभाषायाः महत्त्वं सुदीर्घमस्ति। संस्कृतवाङ्मये अनेकानि शास्त्राणि सन्ति, सर्वमेतत् संस्कृतभाषाया:महत्त्वमावेदयति।

विश्वस्य समस्त-भाषाणाम् उद्गमः संस्कृततः ग्रीकतः लैटिनतः मन्यते। संस्कृतम् अनेक भाषाणां जन्मदात्रि वर्तते। भाषाविकासक्रमे संस्कृतं प्राचीना आर्यभाषा अस्ति। इयम् एव संस्कृतभाषा आधुनिक्र-आर्यभाषारूपेण विकसितम् अभवत्।

**(घ) संस्कृतस्य सांस्कृतिक-महत्त्वम्।**

4 Cultural importance of sanskrit.

''भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा'', सम् इत्युपसर्गपूर्वक कृञ्धातोः 'स्त्रियां क्तिन्' प्रत्यये सति 'संस्कृतिः' इति शब्दः निष्पन्नो भवति। संस्कृतिमूलं संस्कृतम्। साहित्यं संस्कृतिवाहकमस्ति। एषा संस्कृतिः न केवलं भारतदेशस्य अपि तु समग्रविश्वस्य मुकुटयमानाऽस्ति।

**सत्य अहिंसादि गुणैः श्रेष्ठा विश्वबन्धुत्वशिक्षिका।**
**विश्वशान्ति सुखाधात्री भारतीया हि संस्कृतिः।।**

**संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाःकलाः।**
**संस्कृते सकलं ज्ञानं संस्कृते किन्न विद्यते।।**

संस्कृतं भारतीयसंस्कृतेःआत्मा। संस्कृतभाषाया माध्यमेन भारतीय-संस्कृतिःसुप्रतिष्ठिता अस्ति। बालकस्य जननादारभ्य क्रियमाणाः जातकर्म-नामकरण-अन्नप्राशनादिषोडशसंस्काराः अनया एव भाषया विधीयन्ते। पूजापाठः, यज्ञयागादिक्रियाश्च अस्यां भाषायामेव प्रचलन्ति।

संस्करणं परिष्करणं च एतत् आत्मनो संस्कृतिः इत्यभिधीयते। अस्माकं देशस्य विशिष्ट-पुरुषाणां विचाराः, वेशभूषाः, कार्याणि, आचाराः, यथा=तिलक धारणम्, शिखासंस्थापनम्, अस्माकं संस्कृतौ अन्तर्भवन्ति। संस्कृतिः संस्कृताश्रया, यथा उक्तं कपिलेन-

**संस्कृतं संस्कृतेर्मूलं ज्ञान-विज्ञानवारिधिः।**
**वेद तत्त्वार्थसंजुष्टं लोकालोकवरं शिवम्।।**

अतः वक्तुं शक्यते यत् संस्कृतिः संस्कृतं अनयोर्मध्ये घनिष्ठतरः सम्बन्धः अस्ति। संस्कृतेः संरक्षणाय संस्कृतभाषा अनिवार्या। अस्माकं सभ्यता-संस्कृतिश्च संस्कृतग्रन्थेष्वेव दरीदृश्यते। संस्कृतेन सह संस्कृतेः सम्बन्धः यदि विच्छिन्नो भवति, तर्हि भारतीयसंस्कृतेः संरक्षणं न भवत्येव। अत एवोक्तम्-

**संस्कृतेन सुसम्पन्नं भारतं भारतमुच्यते।**
**संस्कृतेन विना देशः केवलं चेण्डियोच्यते।।**

**( ड़ ) संस्कृतभाषायाः ऐतिहासिक-महत्त्वम्।**

5. Historical importance of sanskrit languages.

चिन्तनस्य विचारविनिमयस्य च प्रबलमाध्यमरूपेण भाषायाः योगदानं विज्ञैः सम्मन्यन्ते। मानवसभ्यतायाः, संस्कृतेश्च विकासे भाषायाः स्थानं महत्त्वपूर्णं वर्त्तते। कस्यापि जनस्य बौद्धिकः, मानसिकः, सामाजिकः, राजनैतिकः, सांस्कृतिकश्च विकासः तस्याः भाषायाः, साहित्यस्य च समृद्धिमाश्रयन्ति। व्यक्तित्वस्य विकासे भाषा सहायिका भवति। भाषायाः विभिन्नानि रूपाणि भवन्ति। तत्र मातृभाषा सर्वाधिकप्रभावशालिनी, प्रबला च, यस्याः प्रभावः वक्तेः मूलप्रकृतौ पालनपोषणयोश्च प्रगाढ़ो भवति। लोके प्राचीनतमा भाषा भवति संस्कृतम्। भारतीयानां विश्वासानुसारं सृष्टिकर्तुः ब्रह्मणः मुखात् वेदमयी संस्कृतवाणी निस्ससार-

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।**

ऋग्वेदः प्राचीनतमा रचना विद्यते। मैक्समूलरमतानुसारं ऋग्वेदस्य रचनाकालः 4000 (क्रि०) खृष्ट्र पूर्वं, एवं बालगंगाधरतिलकस्य मते 6000 खृष्ट्र पूर्वं, तथा केचन पाश्चात्याः, भारतीयाश्च विद्वांसः 2500 खृष्ट्र पूर्व इत्यपि मन्यन्ते। यद्यप्यत्र मतभेदाः सन्ति तथापि ऋग्वेदः विश्वस्य प्रचीनतमो ग्रन्थः इत्यत्र मतभेदो नास्ति। संस्कृत-साहित्येतिहासे (1) **वैदिक-संस्कृतसाहित्यम् (2) लौकिक-संस्कृतसाहित्यम्** इति भागद्वयमुपलभ्यते।

वैदिकसंस्कृतस्य स्वरुपं वेदेषु तस्मिन् काले रचितेषु अन्येषु ग्रन्थेषु चोपलभ्यते। लौकिकसंस्कृतं प्रायः पाणिनीयव्याकरण-नियमानुसारं भवति। लौकिकसंस्कृते काव्यानि, पुराणानि, धर्मशास्त्रम्, अलंकारग्रन्थाः, कोशाः, गणितं, ज्योतिषम् इत्यादयोऽनेके विषयाः उपलभ्यन्ते। प्राचीनकाले संस्कृतं न केवलं साहित्यिकभाषा अपितु साधारणजनानां व्यावहारिकी भाषाप्यासीत्। कालान्तरे उत्पन्नाः स्थानीया भाषा साहित्येन च अत्यन्तं प्रभाविताः अभवन्। पाणिन्यादयो महर्षयः सूत्रसाहित्यस्य प्रणयनमकुर्वन्। धर्मस्य संरक्षणेन प्रोत्साहनेन च संस्कृतं देवभाषा पदमलभत्।

धर्मार्थकाममोक्षाणाम् उपदेशसमन्वितम्।
पूर्ववृत्तं कथायुक्तम् इतिहासं प्रचक्षते।।

पुराणेषु, उपनिषत्सु, रामायण-महाभारतमहाभागवतादिमहाकाव्येषु बौद्ध-जैन-संस्कृतग्रन्थेषु प्राचीनेतिहासः परिनिष्ठतः। कौटिल्यअर्थशास्त्रे, मनुस्मृत्यादिग्रन्थेषु इतिहासःसप्रमाणिको वर्त्तते। प्रचीनकालेषु शिलालेखेषु संस्कृतस्य उपलभ्यमानत्वात् अस्याः प्राचीनत्वं, राजकीयत्वं, व्यावहारिकत्वञ्च प्रमाणितं भवति।

**(च) आधुनिकभारते संस्कृताध्यापनस्य महत्त्वम्।**

6. The importance of sanskrit teaching in modern indian.

संस्कृतभाषा परिनिष्ठिता, दोषरहिता सरला गम्भीरा यथार्था वैज्ञानिकी चास्ति। आधुनिकभारते संस्कृताध्यापनस्य महत्त्वं बहुविधम्। महत्त्वं विना काश्चिदपि भाषाशिक्षयाः उद्देश्यं पूर्णं न जायते। इयं संस्कृतभाषा हिमालयपर्वततः विन्ध्याचलपर्वतपर्यन्तं विचार विनमयस्य भाषा आसीत्। सम्प्रति युगेऽस्मिन् संस्कृतभाषा शिक्षणस्य किं महत्त्वम् अस्ति? काश्च उपयोगिता वर्तते? यथा क्रमेण-

**1. वसुधैव-कुटुम्बकं इति भावना-विकासार्थंसंस्कृताध्यापनम्:—**संस्कृत-भाषायां वसुधैवकुटुम्ब-भावना-सम्बद्धाः श्लोकाः बहवः सन्ति। वैदिककालात् आरभ्य आधुनिक-संस्कृतकालपर्यन्तं सर्वत्र एतादृशाः कौटुम्बिकी भावनाः विलसन्त्येव। संस्कृतभाषां विना विश्वे इतरभाषासु कुत्रापि ईदृशीलोकोत्तरभावनाः न परिदृश्यते। उदारचेताः विश्वमेव कुटुम्बमिव भावयन्ति। संस्कृतभाषायाः विश्वबन्धुत्वभावना एषैव वर्त्तते। समाजे विश्वे यानि भूतानि सन्ति, तानि आत्मवत् भावयन्तु। विद्यमानाः सर्वे सुखिनः स्युः, सर्वे निरोगिणः भवन्तु, कोऽपि दुःखं न प्राप्नुयात्। विश्वे अथवा ब्रह्माण्डे ये प्राणिनः सन्ति ते सुखिनः भवन्तु, यथा-

अयं निजः परोवेति गणनालघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम्।।
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखमाप्नुयात्।।

**2. भारतीयभाषायाः संरक्षणार्थं संस्कृताध्यापनस्य महत्त्वम्:—**सर्वासां भारतीयभाषाणां कृते संस्कृतभाषा जननीति, प्रादेशिकभाषायाः संरक्षणार्थं वृद्ध्यर्थं संस्कृतभाषाज्ञानमावश्यकम्।

८०-९०: पदानि संस्कृतभाषासम्बद्धानि एव, अतःसर्वाःभारतीय-प्रादेशिकआर्यभाषाः संस्कृतभाषया समुत्पन्ना इति निश्चप्रचं वक्तुं शक्यते। अतः संस्कृत-भाषायां सार्वभौमिकता वर्त्तते। मानवपरिवारवत् भाषापरिवारे अपि परिवारान्तर्गतभाषाणां शब्दावलि पदरचना सम्बन्धिसमादृश्यं दृश्यते। भारतीयसंविधाने पञ्चत्रिंशत् अध्याये संस्कृत-हिन्दी-मैथिली-असमिया-वंगला-बोडों-डोगरी-गुजराती-कश्मीरी-कोंकणी-मणिपुरी-मराठी-नेपाली-उड़िया-पञ्जावी-संथाली-सिन्धी-उर्दू इति च अष्यादश भाषाः भारोपीय-परिवारान्तर्गतासु मान्याः सन्ति। संस्कृतं सर्वासां इण्डोयोरोपियन-भाषाणां जननी अस्ति।

**3. शैक्षिकविकासः–भाषा-साहित्य-व्याकरणादि-ज्ञानार्थंसंस्कृताध्यापनस्य महत्त्वम्:**—संस्कृतस्य साहियं व्यापकं साहित्यं वर्तते। नूतनपदानां अर्थज्ञानम्, संस्कृतपदानां पर्याय-पदानां च ज्ञानसम्पादनम्, कर्तरि कर्मणि प्रयोगे परिवर्तनज्ञानम्, शब्दानां व्युत्पत्तिज्ञानम्, अन्वेषण-योजनायाः ज्ञानसम्पादनम्। साहित्यग्रन्थानां विस्तृततया पठनम्। कवितारचनायां दक्षता, साहित्यस्पर्धासु भागग्रहणम्, निवन्धरचनम्, रसभेद-शैलीभेदानां च ज्ञानसम्पादनम्। सन्धिगतपदानां योजनं विभाजनं च, विग्रह-समास-ज्ञानसम्पादनम्। प्रकृति-प्रत्ययोरन्तर-ज्ञापनम्, कृत्तद्धित-लकारार्थ-ज्ञानम्, नाम, सर्वनाम-अव्यय-उपसर्ग-वचन-लिंग-विभक्त्यादीनां ज्ञापनम्। अज् झलां च स्वरूप-ज्ञानम्, आत्मने-परस्मै-उभय-पदानां च ज्ञानम्। कालादीनां तद्भेदानां च विवरणम्। क्रियाणां ज्ञानसम्पादनम्। एतानि सर्वाणि संस्कृत-भाषामवलम्ब्य एव सम्यक् ज्ञातुं शक्यते। यथा–

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।**<br>
**व्यसनेन च मूर्खाणां निद्रया कलहेन च।।**<br>
**सङ्गीतसाहित्यकलाविहीनः साक्षात्पशुःपुच्छविषाणहीनः।**<br>
**तृणन्न खादन्नपि जीवमानःतद्भागधेयं परमं पशूनाम्।।**

संस्कृतस्य साहित्यं सुसम्बद्धं वर्त्तते। गद्य-पद्य-चम्पू-नाटकादि विविध-साहित्यरूपेण उपलभ्यते। एतदतिरिच्य साहित्य-ज्योतिष-गणित-दर्शन-नीति-इतिहासादिविषयेषु सहस्रशः ग्रन्थान् व्यरचयन्। संस्कृत-काव्यशास्त्र-विषयिणो ग्रन्थाः भूरिशोऽनूदिताः। संस्कृतसाहित्ये पञ्च-महाकाव्यानि अतिप्रसिद्धानि:—(1) रघुवंशः (2) कुमारसम्भवः (3) मेघदूतम् (4) किरातार्जुनीयम् (5) शिशुपालबधम् नैषधम् गद्यकाव्यानि-कादम्बरी, हर्षचरितम्, वासवदत्ता इत्यादीनि। नाटकानि-अभिज्ञानशाकुन्तलम्, उत्तररामचरितम्, मृच्छकटिकम् इत्यादीनि।

**4. बौद्धिकविकासं आध्यात्मिकनैतिकज्ञानार्थं संस्कृताध्यापनस्य महत्त्वम्:**— संस्कृतभाषायाः शिक्षणं शिक्षार्थीनां बौद्धिकविकासस्य आधारः भवितुं शक्नोति। ज्ञानविज्ञान दृष्ट्या संस्कृतस्य साहित्यम् अत्यन्तं समृद्धं वर्तते। मानवहृदयेषु यावत् नैतिकताया विकासः न सम्भवति तावत् समाजस्य प्रगतिः न भवति। आत्मा वा अरे द्रष्टव्यः, श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यो वा। आत्मज्ञानजन्यशक्तिरेव शिक्षायाः सारभूतं तत्त्वम् इति। अतएवोच्यते 'सा विद्या या विमुक्तये" विद्ययाऽमृतमश्नुते' 'विद्यया विन्दतेऽमृतम्' इति। संस्कृताध्यापनेन

बौद्धिक-आध्यात्मिक-नैतिक-विकासः सम्भवति। संस्कृतादतिरिक्त न कुत्रापि नैतिकतायाः विवेचनं लभ्यते। अतः मानवस्य नैतिकवृद्ध्यर्थं संस्कृतभाषासाहित्यस्य महत् योगदानमस्ति।

1. सृष्टिकर्तुः महत्त्वज्ञापनम्।
2. सर्वे वेदांशसम्भूता इति भावोत्पादनम्।
3. वैदिक-लौकिक-ग्रन्थेषु भक्तिमार्गप्रकारकथनम्।
4. देव-जीवमध्ये यथार्थज्ञानयोः परस्पर-वैरुध्यकथनम्।
5. आध्यात्मिकं नैतिकं ज्ञाननिवेदनम्।
6. पुण्य-पाप-विवेचनं तु संस्कृतभाषा ज्ञानेनैव संभवति।
7. संस्कृतभाषा एव मनुष्यं मनुष्यः निर्मीयते।

**5. चरित्रनिर्माणे संस्कृताध्यापनस्य महत्त्वम्ः—**उत्तमचरित्रस्य महत्त्वपूर्णं स्थानं वर्त्तते। चरित्रहीनता मानवजीवनं क्लिष्टतायां पातयति। चरित्रवान् व्यक्तिः समाजसेवकः आचरणवान् आदरणीयःच भवति। एतदर्थं चरित्रनिर्माणं परमावश्यकमस्ति। चरित्रनिर्माणे संस्कृताध्यापनस्य महत्त्वपूर्णं स्थानं वर्त्तते। शिक्षया एव आत्मनः साक्षत्कारो भवति। शिक्षया जन्मजातशक्तीनां विकासो भवति। व्यक्तेः सर्वाङ्गीणविकासो भवति। सामाजिक भावनायाः विकासो भवति। सम्पूर्णव्यक्तित्वस्य विकासस्तु चरित्रनिर्माणेन सम्भवति। अतः चारित्रिकबल-संवर्धनमपि संस्कृताध्यापनेन अध्ययनेन च सम्भवति। यथा कथितः—

**मातृवत्परभार्याश्च परद्रव्याणि लोष्टवत्।**
**आत्मवत्सर्वभूतानि यः पश्यति स पण्डितः।।**
**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।**

**6. मानसिकविकासःआनन्दानुभूतिःरसानुभूतिश्च संस्कृताध्यापनस्य महत्त्वम्ः—** शब्दार्थ-चमत्कृतश्लोकानां गद्यखण्डानां च आनन्दानुभूति-सम्पादनम्। गद्यपद्येषु वाच्यतया व्यंग्यतया विद्यमानस्य भावग्रहणे आनन्दानुभूतिं-सम्पादनम्। रमणीय श्लोकानां गद्यखण्डानां च कण्ठस्थीकरणम्। रमणीयसुभाषित सूक्तिः लोकोक्तिः प्रहेलिकानां कण्ठे कृत्वा सन्दर्भानुरूपं प्रयोगकरणम्। कवितारचनासु रसभेद-ज्ञानम्, पाठ्यांशेषु तन्मयत्व सम्पादनम्। अलंकारविशिष्टता-ग्रहणम्, ध्वनिज्ञानसम्पादनम्, शैलीभेदं प्रदर्श्य रस परिवर्तनम्। मनोविनोदस्य अपि उत्तमं साधनं वर्त्तते। संस्कृते काव्यसाहित्यं, सुभाषितानि सूक्तयः, हास्यकथाः, इत्यादीनां सर्वेषां भण्डारगारं संस्कृते विद्यमानं वर्त्तते। येन अध्ययनेन सह पर्याप्तं मनोरंजनम् अपि भवितुं शक्यते। यथा नीतिकारःकथ्यते-

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।**
**व्यसनेन च मूर्खाणां निद्रया कलहेन वा।।**

बुद्धिमान् जनानां समय-संस्कृतकाव्यशास्त्रद्वारा मनोरञ्जनं कृत्वा व्यतीतो भवति। तथा

मूर्खजना:स्वकालं व्यसने निद्रयां कलहे च व्यतीतः कुर्वन्ति। हितोपदेशः पञ्चतन्त्रम् इत्यादि ग्रन्थानां कथा माध्यमेन अध्ययनेन सह मनोरञ्जनमपि भवति। अतः आधुनिक-भारते अपि मानसिकविकासः, आनन्दानुभूतिः, रसानुभूतिसंवर्धनाय संस्कृताध्यापनस्यावश्यकता महत्त्वपूर्णाऽस्ति।

**7. आत्मानुशासन Discipline संस्थापनार्थसंस्कृताध्यापनस्य महत्त्वम्:**—यदि छात्राणां अधिकं स्वतन्त्रता प्रदीयते चेत् ते अध्यापकानां शिरांस्युपविश्य अननुशासनरताः भवेयुरिति। कक्षायां नियन्त्रीभावेन सैनिकानुशासनं दण्डनात्मकम् अनुशासनं वा स्थापयामः तर्हि छात्राः भीरवः संशयग्रस्ताश्च भवेयुः। अतः आत्मानुशासनं स्थापनीयम्, शिक्षणे सामर्थ्यं, असाधारणपांडित्यं उत्तमव्यक्तित्वम्, आदर्शचरितम् इत्यादीनां गुणानां माध्यमेन कक्षायां आत्मानुशासनम् स्थापनीयम्। ईदृशमनुशासनम् उत्तमोत्तमम्। नियमानां अधिकाराणां प्रति आज्ञाकारिता एव अनुशासनम्। आंग्ले Discipline शब्दस्य उत्पत्तिः Disciple शब्दतः भवति। यस्यार्थः वर्त्तते –''छात्रः'' शिष्यः शिक्षकस्यानुगामी वा, यदि ''व्यवस्था'' साधनमस्ति तर्हि ''अनुशासनं'' साध्यमस्ति ।शासनस्यानुकरणमेव अनुशासनम्। सम्यक् शिक्षणमेव छात्रेषु आत्मविश्वासं संवर्धयति, आत्मविश्वासेन आत्मानुशासनं दृढी भवति। अतः आधुनिक-भारते आत्मानुशासन-संवर्धनार्थं संस्कृताध्यापनस्य महत्त्वं वर्त्तते।

**8. वैज्ञानिकभाषा रूपे संस्कृताध्यापनस्य महत्त्वम्-**

> **वैज्ञानिकाश्च कपिलः कणादःसुश्रुतस्तथा।**
> **चरको भास्कराचार्यो वराहमिहिरः सुधीः।।**
> **नागार्जुनो भरद्वाजः आर्यभट्टो वसुर्बुधः।**
> **ध्येयो वेंकटरामश्च विज्ञा रामानुजादयः।।**

संस्कृत-साहित्ये भौतिक-विज्ञानस्य प्रवर्त्तकः ऋषिवरः कणादः आसीत्। रसायनशास्त्रस्य वर्णनमपि संस्कृत-साहित्ये वर्त्तते। नागार्जुनेन 'रस रत्नाकर' इत्यस्मिन् ग्रन्थे गंधकस्य शोधनविधेः वर्णनं कृतमस्ति। आयुर्वेदशास्त्रे विभिन्नौषधीनां प्रयोगस्य वर्णनं लभ्यते। कौटिल्यस्यार्थशास्त्रं राजनीत्याः प्रमुखः ग्रन्थो वर्त्तते। संस्कृतसाहित्ये विभिन्नानां यंत्राणां प्रयोगो समुपलभ्यते। कौटिलस्य अर्थशास्त्रेऽपि यंत्राणां वर्णनं लभ्यते। रामस्य पुष्पकविमानस्यवर्णनमपि रामायणे प्राप्यते। भारद्वाजेन 'सर्वस्य 'नामक रचना विरचिता या च भौतिकविज्ञानस्य एका रचना वर्त्तते। संगणक-यन्त्रम् एवं गतिशीलोपकरणमस्ति येन केषुचित् निमेषु गणनाः गणितीय प्रक्रियाश्च कर्त्तुं शक्यते। अतएव संगणकयन्त्रं नियमानाम् अनुसरणकर्ता कथ्यते। एतस्या ज्ञानसञ्चारविधिक्रान्तेः कश्चनान्तरङ्गः सम्बन्धः संस्कृत- भाषयाऽपि सह सहसैव समुपलभ्यत यदा अमरीकीयेन वैज्ञानिकेन 'नासां' NASA स्थले कार्यरतेन रिक ब्रिग्स RICK BRIGGS इत्याख्येन समुद्घोषितं यत् संस्कृतभाषा खलु विश्वभाषासु कम्प्यूटर विधेः कृते सर्वाधिकमुपयुक्ताऽनुकूला चेति।

**उपसंहारः**—संस्कृतभाषा वैज्ञानिकभाषा वर्तते। संस्कृतस्य व्याकरणं मनोवैज्ञानिकं विश्वप्रसिद्धञ्च वर्तते। मस्तिष्कयन्त्रस्य कृते बहुपयोगी अनुकूला च वर्तते। ज्ञानं, विज्ञानं, समाजशास्त्रं, दर्शनं, चिकित्साशास्त्रं, गणितं, ज्योतिषम् इत्यादयः सर्वे सामाजिकाः राजनैतिकाः वैज्ञानिकाः ग्रन्थाः संस्कृतभाषायां सन्ति। अस्माकं जीवने जन्मतः मृत्यु पर्यन्तं षोडश- संस्काराः संस्कृतभाषायामेव सम्पन्नो भवन्ति। ''विद्वान् सर्वत्र पूज्यते'' ''विद्वांसः एव लोकेऽस्मिन् चक्षुष्मन्तः प्रकीर्तिताः'' ''विद्याविहीनः पशुः'' अध्ययनेन कार्यानुभवेन च ज्ञानानुभवं प्राप्यते। ज्ञानानुभवसंवर्धनार्थं आधुनिकभारते संस्कृताध्यापनस्य महत्त्वम् अत्यधिकं वर्त्तते। आदर्शव्यक्तित्वम्, चरितम्, आत्मानुशासनम्, अनुभूतिं, ज्ञानार्थं, भारतीय भाषा-संरक्षणार्थं-राष्ट्रीय-अन्ताराष्ट्रीय-ऐक्यता-संवर्धनार्थं सर्वकल्याणार्थम्, परोपकारार्थं संस्कृति-संरक्षणार्थं च संस्कृताध्यापनमावश्यकमुपयोगिञ्च वर्त्तते आधुनिकभारते।

**( छ ) संस्कृतशिक्षणस्य समस्या।**

7. Problems of sanskrit teaching.

शिशवःप्रधानतया अनुकरणशीला भवन्ति। मातृभाषां विना अन्यां यां कामपि भाषां प्रायः अनुकरणेनैव शिक्षन्ति। संस्कृतभाषाशिक्षणस्य परमं प्रयोजनं भावग्रहण-भावव्यक्ती- करणं वर्तन्ते। संस्कृत-माध्यमेन संस्कृतशिक्षणम् एकमात्रः उपायो मार्गो वा वर्तते संस्कृत शिक्षणस्य समस्या समाधानाय। संस्कृतशिक्षणस्य उत्तरदायित्वं सुमहदस्ति। इदानी प्रायः सर्वाःभाषाःअनुवादपद्धत्या अध्याप्यन्ते। संस्कृतभाषाऽपि अनुवादपद्धत्या अध्याप्यते। संस्कृतशिक्षणावसरे संस्कृतशिक्षकाणां समक्षं अद्य बहूनि-काठिन्यानि सन्ति।

**यथा प्रमुखाःसमस्या**

(1) संस्कृतशिक्षणार्थमुपयुक्तवातावरणस्याभावोऽस्ति।

(2) कुशल-प्रशिक्षित-अध्यापकानामभावः।

(3) संस्कृतपाठशालासु विद्यालयेषु च दृश्यश्रव्योपकरणानाम् अभावो दृश्यते।

(4) प्रशिक्षणमहाविद्यालयेषु आधुनिकतमानामुपकरणानाम् अभावोऽस्ति।

(5) संस्कृतपाठ्यक्रमेषु वैज्ञानिकता दृष्ट्या परिष्कारः अपेक्षितोऽस्ति।

(6) अभिभावकाः छात्रगणाश्चेत्युभयेऽपि संस्कृतविषयं प्रति उदाशीनता।

(7) संस्कृत-पत्रपत्रिकाणामभावो अस्ति।

(8) नीविकोपार्जनस्य समस्या प्रमुखाः।

(9) अनिवार्यसंस्कृतभाषा शिक्षणस्याभावः।

(10) सर्वकाराणां संस्कृतविषयं प्रति उदाशीनता।

(11) संस्कृत-माध्यमेन संस्कृतशिक्षणस्याभावः।

**(ज) संस्कृताध्यापकः।**

8. Sanskrit teacher.

मानवस्य युक्तायुक्तविवेचनं ज्ञानं आवश्यकम्। अहिंसा, सत्यम्, अक्रोधः, त्यागः, शान्तिः, क्षमा, तेजः, धैर्यम्, इत्यादि गुणाः प्रत्येकमानवस्य कृते आवश्यकम्। अधोलक्षितानि वृत्ति–सम्बन्धानि तानि यथा–

1. स्वीयाध्यापकपदे गौरवप्रदर्शनम्।
2. अध्याप्यमानविषयेषु निपुणता।
3. सहनशीलता।
4. बोधनेसामर्थ्यम्।
5. समभावः।
6. अनुशासनप्रियः।
7. समयस्फूर्तिः।
8. आत्मसम्मानम्।
9. अहम्भाववर्जनम्।
10. परोपकारभावयुक्तः।
11. अध्ययनासक्तिः।
12. समीचीनाविमर्शशक्तिः।
13. छात्रेषुतादात्म्यभावः।
14. सदाचरणशीलता।

प्रज्ज्वलन् एको दीपः सामान्यविषयपरिज्ञानेन साकं प्रतिविषये च समुचितं ज्ञानमपि अध्यापकस्य भूषणं वर्त्तते। बोधनसमये प्राचीनशिक्षणविधयः, आधुनिक शिक्षणविधयः, एतयोः समन्वयं कृत्वा बोधनीयम्। छात्राणां शारीरिकविकासं मानसिक–अभिवृद्धिं बुद्धिं व्यक्तित्वं वैयक्तिकभेदांश्च विज्ञाय तदनुगुणम् अध्यापनीयम्। ''अयं निजः, अयं परः'', इति भावना कदापि न प्रदर्शनीया। ''परोपकारार्थमिदं शरीरम्'', ''स्वभाव एवैष परोपकारिणाम्', ''परोपकारः पुण्याय पापाय परपीडनम्'', ''स्वाध्यायान्मा प्रमद'', इत्यादि अनुकरणीयम्। अर्थात् विषयाणाम् पुनरावर्तनम्, स्वाध्यायः आजीवनं करणीयः। संस्कृतसाहित्याध्यापनसमये कुलं मतं वर्णं इत्यादिकं संकुचितभावना त्याज्या। समीचीनं विमर्शनं करणीयम्। संस्कृताध्यापकेषु सौहार्द्रता आवश्यकी, वस्तुतः संस्कृतभाषा, आस्तिक्य भावना, अनयोर्मध्ये अन्तरमेव नास्ति। भारतीय संस्कृतेः प्रसारणं संस्कृताध्यापकस्य प्रमुखकर्तव्यम् अस्ति। संस्कृताध्यापकेन संस्कृत–छात्रसंख्या वर्धने प्रयत्नो विधेयः। तदर्थं छात्राणां आत्मसात्करणमावश्यकम्। ''कामः क्रोधस्तथालोभः तस्मादेतत् त्रयं त्यजेत्'' **''सत्यं वद धर्मं चर''**''संघे शक्तिः कलौयुगे ''उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः''** उपरिनिर्दिष्यनि सर्वाणि लक्षणानि संस्कृताध्यापकाय आवश्यकानि। एतेषां आत्मसात्करणेन संस्कृतभाषायाः प्रसारः प्रचारश्च अधिकः संभवति। अध्यापकानां जीवनमपि भव्यं भवेत्। देशस्य प्रगतिः अपि शीध्रगत्या भवेत्।

卐 卐 卐

# 2

# संस्कृतशिक्षणस्योद्देश्यानि

# Objectives of Sanskrit Teaching

## ( क ) प्राथमिक-माध्यमिक-उच्चमाध्यमिकपरम्परागतस्तरेषु-संस्कृतशिक्षणस्योद्देश्यानि।

### 1. Objectives of sanskrit teaching at different levels-Primary, Secondary, Higher secondary and traditional levels.

समग्रभारते संस्कृतम् अध्यापनीयम् अस्ति। केषुचित् प्रदेशेषु तृतीयभाषारूपेण [3 rd-Language] केषुचित् प्रदेशेषु प्रथमभाषा रूपेण [Main Language] च अध्याप्यमाना अस्ति। प्रथमभाषायां तृतीयभाषायाञ्च प्राय: सामान्योद्देश्यानि एवं रीत्या भवन्ति। विद्यालयेषु महाविद्यालयेषु च विषयाणामध्यापनं निश्चितोद्देश्यानामाधारेण भवति। संस्कृतन्तु भारतीय-संस्कृतेराधारभूतं, माध्यमञ्च। भारतीयसंस्कृते:, सभ्यतायाश्च उन्नते: कारणं संस्कृतमेव भवति। अत: आङ्गलभाषा मातृभाषा शिक्षणापेक्षया संस्कृतशिक्षणस्य उद्देश्यानि महत्त्वपूर्णानि भवन्ति। संस्कृतं सर्वासामार्यभाषाणां जननी, द्राविडभाषाया: पोषिणी च। अत: संस्कृतशिक्षणस्योद्देश्यानि अन्यभारतीयभाषाणां शिक्षणस्य उद्देश्येभ्य: विशिष्टानि भवन्ति। संस्कृतभाषाया: रक्षणेनैव भारतीया संस्कृति: सुरक्षिता भवति।

दिशानिर्देशकरणमुद्देश्यम्, उत् उपसर्गपूर्वकं दिश् धातो:कर्मणि ण्यत् प्रत्ययस्य कृते उद्देश्यं सिद्ध्यति। यस्य अर्थो भवति-दिशानिर्देश-करणम् इति। दिशां दर्शयन्ति लक्ष्यं प्रति प्रेरयन्ति च। संस्कृतशिक्षाया: उद्देश्यानि कालदेशपरिस्थितिवशात् परिवर्तमानानि सन्ति।

शिक्षणोद्देश्यस्य अन्तर्गता: त्रयो मुख्यबिन्दव: सन्ति-

1. दिशा,
2. व्यवस्थितपरिवर्तनम्,
3. क्रिया। अत: उद्देश्यानां निर्धारणं विवेकेन करणीयम्।

## (क) संस्कृतशिक्षणस्योद्देश्यानां निर्धारणसमये ब्लूमस्य ध्येयाः बिन्दवः

**1. ज्ञानात्मकपक्षः—(Cognitive Domain)**

(क) विशिष्टतथ्यानां ज्ञानम्। (ख) विशिष्टतथ्यानाम् अधिगमोपायानां ज्ञानम्। (ग) मान्यतानां परम्पराणाञ्च ज्ञानम्। (घ) प्रक्रियाणां घटनानाञ्च गतिविधेर्ज्ञानम्। (ङ) विधीनां प्रविधीनाञ्च ज्ञानम्। (च) यत्किञ्चित् विषयान्तर्गतानां वर्गीकरणानां श्रेणीनाञ्च ज्ञानम्। (छ) सिद्धान्तानां सामान्यीकरणस्य च ज्ञानम्। (ज) ज्ञानात्मकशैक्षिकोद्देश्यानां वर्गीकरणम्-1. ज्ञानम्, 2. बोधः, 3. प्रयोगः, 4. विश्लेषणम्, 5. संश्लेषणम्, 6. मूल्याङ्कनम्।

**2. भावात्मकपक्षः—(Affective Domain)**

अस्मिन् क्षेत्रे अभिवृत्ति-मूल्य-रुचि-प्रशंसा-सम्बन्धोद्देश्यानि सम्मिलितानि भवन्ति। अध्यापकस्य कर्त्तव्यमिदं यत् सः भावात्मकोद्देश्येन छात्राणां भावात्मकपक्षस्य, रुचीनां, संवेगानां, मनोवृत्तीनां स्थायीभावानाञ्च अधिकाधिकं विकासं कुर्यात्। एतस्य निम्नलिखितवर्गाः सन्ति-

1. **ग्रहणम्**-ग्रहणकरणस्य सम्बन्धः छात्राणां संवेदनशीलतया भवति।

2. **अनुक्रिया**-अस्यान्तर्गते छात्रः प्रेरितः सन् नवीनज्ञानं सक्रियरूपेण गृहणाति।

3. **सन्तोषः**—उचितभावेन सह भाषणस्य क्षमता विचाराणां क्रमबद्धतादयः।

4. **अनुमूलनम्**-अनुमूलनेन छात्रः परिस्थितिपरिवर्तने सति स्वव्यवहारे स्थिरभावस्य प्रदर्शनं करोति।

5. **चिन्तनम्**-अत्र शिक्षकः मूल्यस्य महत्त्वं दर्शयन् छात्रेभ्यः उचितनिर्देशनं प्रददाति।

6. **व्यवस्था**-प्राप्तमूल्यानां व्यवस्था ते क्रमेण कुर्वन्ति।

**3. मनोगत्यात्मकपक्षः**

अयं गामकक्रियासु शारीरिकक्रियासु च अधिकबलं ददाति। अस्य षड्वर्गाः सन्ति।

1. उद्दीपनम्, 2. कार्यकरणम्, 3. नियन्त्रणम्, 4. समायोजनम्, 5. स्वाभावीकरणम्, 6. स्वभावः।

## (ख) प्राथमिकस्तरेषु संस्कृतशिक्षणस्योद्देश्यानि

1. संस्कृतभाषायाम् अभिरूच्युत्पादनम्, आसक्ति-संवर्धनम्।
2. संस्कृतभाषायां वर्णमालाध्यापनं संयुक्ताक्षराणां परिचयप्रदानम्।
3. संस्कृतसुभाषितानां गद्यपाठानां पठने च नैपुण्यसम्पादनम्।
4. सरलसुभाषितानां कण्ठस्थीकरणे प्रेरणादानम्, भावं मातृभाषायां कथनम्।
5. मुद्रितगद्यखण्डानां पद्यानाञ्च पठने लेखने च नैपुण्यसम्पादनम्।
6. पाठयांशे समागतानां शब्दानां धातूनाञ्च लिङ्ग-वचन-विभक्ति-पुरुषाणां परिचयप्रदानम्।
7. संस्कृतकवीनां विषये प्राथमिक-परिचयसम्पादनम्।
8. सरलसंस्कृते भाषणस्य क्षमता।

9. संस्कृतात् मातृभाषायां, मातृभाषातः संस्कृते च अनुवादक्षमता।
10. श्रुत्वा, दृष्ट्वा च संस्कृतवाक्यानां लेखनस्य क्षमता।

### ( ग ) माध्यमिकस्तरेषु संस्कृतशिक्षणस्योद्देश्यानि

1. संस्कृतभाषायाम् अभिरूच्युत्पादनम्।
2. श्लोकानां वाक्यानां च पठने स्पष्टोच्चारणे कौशलसम्पादनम्।
3. संस्कृतभाषायाः सरल-कठिन-श्लोकानां गति-यति-लय-भावाभिनयपुरस्सरं पठने दक्षतोत्पादनम्, मालिनी-शिखरिणी, इन्द्रवज्रा, उपेन्द्रवज्रा, इत्यादीनां छन्दसां मध्ये विद्यमान भेदावगाहनसम्पादनम्।
4. संस्कृतभाषायाः सरलसाहित्येन सह परिचयसम्पादनम्।
5. भावग्रहण-भावप्रकटनयोः सामर्थ्यसम्पादनम्।
6. सरल-कठिन-गद्यपद्ययोः विभिन्नशैलीनां परिचयसम्पादनम्।
7. विभिन्न-कविभिर्विरचित-गद्यपद्ययोः मध्ये तुलनात्मकज्ञानसम्पादनम्।
8. आध्यात्मिकज्ञानेन साकं लौकिकज्ञानसम्पादनम्।
9. महत्त्वपूर्णसंस्कृतश्लोकानां गद्यखण्डानाञ्च कण्ठस्थीकरणे प्रेरणाप्रदानम्।
10. संस्कृतसाहित्ये विद्यमानानि सरलानि वाक्यानि परिच्छेदानि च मातृभाषायां, मातृभाषायां विद्यमानानि सरलानि परिच्छेदानि वाक्यानि च संस्कृतभाषायां अनुवाद करणम्।
11. सामान्यालङ्कार-व्याकरणादीनां परिचयसम्पादनम्।
12. कल्पनाशक्तेः सर्जनात्मकशक्तेश्च संवर्धनम्।
13. रसानुभूतेः सम्पादनम्।
14. छन्दशास्त्रे प्रथमिकज्ञान-सम्पादनम्।

### ( घ ) उन्नतस्तरेषु संस्कृतशिक्षणस्योद्देश्यानि

1. संस्कृतसाहित्ये विशेषाभिरूचि संवर्धनम्।
2. भावग्रहण भावप्रकटनयोः ज्ञानसम्पादनम्।
3. छन्दसम्बद्धज्ञानसंवर्धनम्, सरलकठिनवृत्तानां अनुस्मरणे योग्यतायाः सम्पादनम्।
4. संस्कृतभाषायां विद्यमानयोः गद्यपद्ययोः प्रधानशैलीनां परिचयप्रदानम्।
5. रसानुभूतेः सम्पादनम्।
6. रस-ध्वन्यलंकार भेदानाञ्च ज्ञापनम्।
7. अभिधा-लक्षणा-व्यञ्जनादीनां विषये विशेषज्ञानसम्पादनम्।
8. स्वयं कवितारचनायां निबन्धरचनायाञ्च प्रेरणादानम्।
9. विशेषाध्यात्मिकज्ञानेन साकं विशेष्य-लौकिकज्ञानसम्पादनम्।
10. सद्विमर्शनशक्तेस्संवर्धनम्।
11. अनुसन्धानप्रक्रियायां नैपुण्यसम्पादनम्।

12. अलङ्कारशास्त्रेषु नैपुण्यसम्पादनम्।
13. संस्कृतसाहित्ये विद्यमानानां महत्त्वपूर्णानाम् अङ्गानां मातृभाषायाम् एवमेव परिचितभाषासु च अनुवादकरणे नैपुण्यसम्पादनम्।
14. संस्कृतभाषायां भाषणाय प्रेरणादानम्।
15. कविमनोगताभिप्रायानां अवगाहने योग्यतोत्पादनम्।
16. प्रतिशास्त्रसम्बद्धानां लक्षणग्रन्थानां विषये प्राथमिक ज्ञानसम्पादनम्।
17. रचना-कल्पना-सर्जनात्मकशक्तीनां संवर्धनम्।

## (ङ) परम्परागतस्तरेषु संस्कृतशिक्षणस्योद्देश्यानि

वैदिककाले वेदाभ्यासे वेद-स्वीकरणं विचारो, अभ्यासः, जपः, शिष्येभ्यो वेदानां दानञ्चेत्यादीनां पञ्चक्रियाणां समावेशो भवति स्म। प्राचीनकाले शिक्षायाः मुख्योद्देश्यं भवति पुरुषार्थ चतुष्टय सम्पादनम्। उपनयन-संस्कारान्तरं बटुः अन्तेवासी भूत्वा द्वादशन् वर्षं यावत् गुरूकुले उषित्वा वेदवेदाङ्गादीनि पठति स्म। परम्परागतस्तरेषु संस्कृतशिक्षा पाठशालासु, आश्रमेषु, मठेषु गुरूकुलेषु, विद्यापीठेषु च भवन्ति स्म। वैदिककालिक्याःशिक्षायाः अवलोकनेन ज्ञायते यत् केचन शिक्षणविधयः अतीव प्रचलिताः आसन्। एतेषु अधीतिः, बोधः, आचरणं, प्रसारश्च प्रमुखाः सन्ति। केवलमेक एव अध्यापकः सर्वान् अंशान् पाठयति स्म। यथा-

1. सम्प्रदायः, सभ्यता, संस्कृतिः, देशभक्तिः, आस्तिक्यभावना इत्यादीनां प्रधानतया सम्पादनम्।
2. चतुर्णां पुरुषार्थानां सम्पादनम्।
3. सच्चरित्र्य- सम्पादनम्।
4. समस्तज्ञानं हृदयगंमकरणम्।
5. शुद्धोच्चारणम्।
6. 'कण्ठस्था तु या विद्या' अस्या मूलश्रोतःस्मरणशक्तेःवर्द्धनम्।
7. प्रतिभाशाली-ज्ञानी समाजोपयोगि-व्यक्तिनां निर्माणम्।
8. आत्मसंयम, मौलिक-चिन्तनं, तर्कशक्तिः इत्यादीनां गुणानां वर्धनम्।
9. स्वाध्यायं प्रति अभिरुच्युत्पादनम्।
10. शास्त्रार्थ-प्रशिक्षणम्।
11. संस्कृतशास्त्राणां गभीराध्ययनम्।

## (च) निर्देशात्मक-उद्देश्यानि

1. जीवनमूल्यानां प्राप्ति करणम्।
2. रचनाक्षेत्रे विभिन्नरूपाणां ज्ञानम्।
3. भाषायाः शुद्धवाचनम्।
4. भाषायाः शुद्धलेखनम्।

5. सरलशब्देषु भावाभिव्यक्तिकरणम्।
6. अर्थग्रहणस्य योगयताप्रदानकरणम्।
7. भाषाशिक्षणे साहित्यशिक्षणे च रुचि-उत्पादनम्।

## (छ) व्यवहारिकोद्देश्यानि

1. भाषाभिव्यक्तिकरणम्,
2. जीवनमूल्यानां प्राप्तिकरणम्,
3. साहित्यं प्रति संवेदनशीला-अभिरुचिकरणम्,
4. पाठ्येतरसहगामिप्रवृत्तीनाम् अभिवृत्तीनां विकासकरणम्,
5. शुद्धवाचनस्य शुद्धलेखनस्य च क्षमता विकासकरणम्

## (ज) उपसंहारः

प्राथमिकस्तरेषु छात्राणां औसत-आयुः=7-11 वर्षाणि मन्यते। माध्यमिक स्तरेषु छात्राणां औसत-आयुः=11-14 वर्षाणि मन्यते। उच्चमाध्यमिक स्तरेषु=15-18 वर्षाणि औसतआयुः स्वीक्रियते। भावाभिव्यक्ति-भावग्रहण-क्षमतानुकूलं-विभिन्नकौशलानां ज्ञानं सम्पादनीयम्। संस्कृतभाषायाः परिचयात्मकं ज्ञानं संस्कृतसाहित्यस्य विभिन्नविद्यानां च ज्ञानमपेक्षितं वर्त्तते। भावानुकूलम् आदर्शवाचनम्। छात्रैः अनुकरण-वाचनम्। उच्चारणस्य स्पष्टीकरणम्। शब्दार्थस्पष्टीकरणम्। श्लोकानां अन्वयः। पद्यांशानां गद्यांशानां वा सरलसंस्कृते सारस्य भावस्य वा कथनम्। प्रश्नोत्तरे अवबोधनकार्यम्। संस्कृते गतिविधयः। अनुप्रयोगरूपेण कक्षाकार्यम्। संस्कृतमयवातावरणस्य निर्माणम्।

## (झ) संस्कृतशिक्षणस्य विशिष्टता कक्षातः पूर्वं परं वा।

2 Quality of sanskrit teaching–Pre-class, In-class and after-class.

संस्कृतमय-वातावरणस्य निर्माणमेव संस्कृतशिक्षणस्य प्रमुखाविशिष्टता वर्तते। संस्कृत-शिक्षणं रुचिकरं सुग्राह्यम् आकर्षकंञ्च कारयितुं दृश्यश्रव्यसाधनैःसह पाठ्यसहगामि-क्रियाणामपि महत्त्वपूर्णं स्थानमस्ति। पाठ्यसहगामिक्रियाणामायोजनेन छात्राः सक्रियाः भवन्ति। अवकाशस्य क्षणानां सदुपयोगो भवन्ति। तेषु रचनात्मक-शक्तेःविकासो भवति। छात्रेषु नेतृत्व-गुणानाम् उत्तरदायित्वस्य भावनायाश्च विकासो भवति। विद्यालये कक्षायां अनुशासन-स्थापनार्थं सहायको भवति। विशिष्टताक्रमे कक्षातःपूर्वं परं वा **अधोलिखितानामवलम्बनीयम्-**

1. ईश-वन्दना-
2. प्रहेलिकाः।
3. भाषणस्पर्धा।
4. भाषाक्रीडाः-शारीरिकविकासे सहायकक्रियाः।

5. सांस्कृतिक-कार्यक्रमः।
6. अन्त्याक्षरीप्रतियोगिता।
7. नैतिकगुणानां विकासार्थं कार्यक्रमः।
8. सामाजिक-आवश्यकतानां पूर्त्तौ सहायकक्रियाः।
9. मनोवैज्ञानिक-आवश्यकतानां पूर्त्तौ सहायक क्रियाः।
10. नागरिकतायाः प्रशिक्षणम्।
11. विशिष्टरुचीनां विकासः।
12. अवकाशस्य क्षणानां सदुपयोगः।
13. अनुशासन स्थापने सहायिका क्रियाः।

卐 卐 卐

# 3

# पाठ्यक्रमे संस्कृतस्य स्थानम्

# Place of Sanskrit in Curriculum

## (क) आधुनिकभारते सामान्य-विद्यालय-व्यवस्थायां विविध-प्रथमिक-माध्यमिक-उच्चमाध्यमिकस्तरेषु संस्कृतस्य स्थानम्।

1.The place of sanskrit at Primary , Secondry, Higher secondary levels of general school system in modern indian.

"वाण्येकासमलङ्करोति पुरूषं या संस्कृताधार्यते" इत्यादिभिवचोभि ज्ञायते यत् संस्कृतभाषाया:महत्त्वमद्वितीयमिति। संस्कृतस्य स्थानं वर्तमानशिक्षाप्रणाल्यां पाठ्यक्रमे वा कीदृशमिति विषयं विचारनीय:।

### (1) प्राथमिक स्तरेषु संस्कृतस्य स्थानम्-

आधुनिकप्राथमिकस्तरेषु संस्कृतस्य शिक्षणं मातृभाषायां क्षेत्रीयभाषायाञ्च भवति। अस्मिन् स्तरे संस्कृतमवश्यमेव पाठयितव्यम् इति संस्कृतज्ञ:स्वीकुर्वन्ति। संस्कृताऽऽयोग:— (1956-1957) एतदुपरि बलं प्रदत्तं यत् विद्यालयेषु संस्कृतशिक्षणम् अनिवार्यरूपेण कर्त्तव्यम्। पाठ्यसहगामिक्रियासु संस्कृतशिक्षांया: प्रभाव: अवश्यमेव स्थापनीय: येन छात्राणां नैतिकमूल्यानां विकास: स्यात्। यथा-

1. प्रात: कालिनप्रार्थनायां संस्कृतश्लोकानां मन्त्राणाञ्चउच्चारणं कर्त्तव्यम्।
2. संस्कृतभाषायां लघुकथा: श्रावणीया:।
3. शुद्धोच्चारणस्य हेतो: लयसहित श्लोकानां गानं व्यक्तिगतं सामूहिकञ्च कारयितव्यम्।
4. शब्दभण्डारबृद्धिकरणम्।
5. मातृभाषायां पुस्तकस्थ तत्त्वानि उपदेष्टव्यानि।
6. सरल सुबोधश्लोकानां कण्ठस्थीकर्त्तव्य:।
7. पाठस्था: कतिपयशब्दरूपाणि च स्मारयितव्यानि।
8. अभ्यासमाध्यमेन व्याकरणनियमान् पाठितव्य:।

9. व्यवहारेषु समागतायो:पशुपक्षिणो:फलशकयोश्च तदन्यवस्तूनाञ्च सचित्रं नाम संस्कृतेन उपदेष्टव्यम्।

**( 2 ) माध्यमिकस्तरेषु संस्कृतस्य स्थानम्-**

अधुना प्राय: दशं कक्षापर्यनतमेव संस्कृतं सर्वेषु विद्यालयेषु अनिवार्य: वर्तते। माध्यमिकशिक्षाया: स्तरस्योन्नयनाय निर्मितेन आयोगेन द्विभाषासूत्रं प्रस्तुतम्। अस्य सूत्रस्य द्वयो:विकल्पयो: शास्त्रीयभाषाया:अपि स्थानम् आसीत्। वैकल्पिक रूपेण क्षेत्रीयभाषाया: स्थाने संस्कृतस्य स्थानं राज्यसर्वकाराणामनुशंसात: पाठ्यते। केन्द्रीय माध्यमिकशिक्षा परिषदा एवं परामर्शदातृ समित्या (1988) सम्बद्धेषु विद्यालयेषु संस्कृतभाषा षष्ठकक्ष्यात: अष्टमकक्ष्यापर्यन्तं तृतीयभाषात्वेन नवमदशमकक्षयोश्च सा द्वितीयभाषात्वेन पाठ्यते स्म। तृतीयभाषात्वेन का: भाषा: पाठनीया इति विचारप्रसङ्गे संविधानस्य अष्टमी अनुसूची आश्रिता। संविधानस्य अष्टमानुसूच्यां स्वीकृतासु भाषासु केवलं संस्कृतं त्रिभाषासूत्रसूचीत:, तेन कारणेन संस्कृतं वैकल्पिक विषयत्वेन पाठ्यते। राममूर्ति आयोगेनापि (1990) शास्त्रीय भाषाया: अध्ययनाध्यापनोपरि महत्त्वं प्रदत्तम्। संस्कृतस्य विधिवत् शिक्षणस्य संरक्षणस्य संवर्धनस्य च विकासाय प्रयासानाम् आवश्यकता अस्ति।

**( 3 ) उच्चमाध्यमिकस्तरेषु संस्कृतस्य स्थानम्-**

अस्मिन् स्तरे संस्कृतभाषाया: वैकल्पिकरूपेण स्थानं वर्तते। उच्चमाध्यमिकस्तरे ''वैकल्पिकविषयचयनप्रक्रिया'' कारणात् संस्कृतमिदं वैकल्पिकविषयरूपेण पाठ्यते। राममूर्ति आयोगेन(1990) तमे वर्षे शास्त्रीयभाषाया:अध्ययन-अध्यापनोपरि महत्त्वं प्रदत्तम्। तेऽपि स्वीकुर्वन्ति यत् भारतीयसंस्कृते: संरक्षणाय संवर्धनाय च पाठ्यक्रमेषु संस्कृतस्य स्थानम् अवश्यमेव प्रदात्तव्यम्। विश्वविद्यालयाऽऽयोग: (राधाकृष्णनायोग: 1948-1949) अन्तरस्नातक पाठ्यक्रमे संस्कृतस्य स्थानम् अवश्यमेव भविष्यति। यतो हि संस्कृतभाषा साहित्यञ्च अस्माकं सांस्कृतिकोत्तराधिकारोऽस्ति। यस्मिन् साहित्ये अनुसन्धानस्य विस्तृतं क्षेत्रमस्ति। यथा-

1. उचमाध्यमिकस्तरे संस्कृतम् अनिवार्यरूपेण वैकल्पिकरूपेण च निर्धारयितुं शक्यते।
2. साहित्यं प्रति संवेदनशीला अभिरुचिकरणम्।
3. छात्राणां मनसि संस्कृतं प्रति भावाभिव्यक्ति: भवितुं शक्यते।
4. अन्वेषणकार्येषु दक्षतोत्पादनम्।
5. चतुर्विधिकौशलेषु दक्षतोत्पादनम्।

### ( ख ) परम्परागत-संस्कृत-पाठशालायां संस्कृतस्य स्थानम्।

### 2. The place of sanskrit at traditional sanskrit pathashalas.

**अमृतं मधुरं सम्यक् संस्कृतं हि ततोऽधिकम्।**
**देवभोग्यमिदं यस्मात् देवभाषेति कीर्त्यते।।**

पुरा संस्कृतभाषा व्यवहारभाषा, साहित्यकभाषा च आसीत्। अद्यतनेषु दिनेषु संस्कृत भाषायाः व्यवहारे विना समाजे कार्यं सिद्धति। संस्कृताऽऽयोगस्य प्रतिवेदनेऽपि उल्लिखितं वर्तते यत् भारतीयसभ्यता वैदिककालादारभ्य चतुस्सहस्रवर्षाणि यावत् संस्कृतभाषयैव स्वाभिव्यक्तिं प्रदर्शितवती। भारते भाषमाणा:सर्वे:भाषाः संस्कृतरूपीवृक्षस्य लताः सन्तीति कथने नास्ति लेशोऽपि संदेहः। संस्कृतभाषाविषये संस्कृतायोगेन याः संस्तुतयः कृताः ताः महत्त्वपूर्णाः। सम्प्रतिसम्पूर्ण देशे प्राच्य-प्राथमिक-माध्यमिक-विद्यालयेषु संस्कृतमहाविद्यालयेषु विश्वविद्यालयेषु संस्कृतसंस्थानादिषु च अनिवार्यतया प्रधानभाषा रूपेण संस्कृत-शास्त्रशिक्षणं भवति। अस्माकं देशे बहवः संस्कृतविद्वांसः पण्डिताः छात्राः पुरोहिताः सन्ति, एते प्रतिदिनं संस्कृतं संस्कृतभाषामाध्यमेन पाठयन्ति, पूजां च कुर्वन्ति। गर्भादानादारभ्य अन्त्येष्टिक्रिया पर्यन्तं मानवस्य ये ये वैदिक-कार्यकलापाः भवन्ति ते ते संस्कृतभाषा- माध्यमेनैव प्रचलन्ति। संस्कृतः अनेक भारतीय-आर्य-भाषाणां जननी अस्ति। इदानीं दैनिकजीवने परम्परागत-संस्कृत-पाठशालायां संस्कृतस्य स्थानं प्रमुखतया वर्तते।

**(ग) संस्कृतस्य स्थाननिर्धारणे विभिन्न-आयोगस्य क्रमिक संक्षिप्त-प्रतिवेदनम्**

1. राधाकृष्ण आयोगः (1948-1949) विश्वविद्यालयाऽऽयोगः। संस्कृतभाषायाः कृते समुचितं स्थानं स्यात्।
2. माध्यमिकशिक्षाऽयोगः (मुदालियरायोगः 1952-1953) विद्यालयानां पाठ्यक्रमे संस्कृतभाषापि संयोज्या।
3. संस्कृताऽऽयोगः (1956-1957) भारतसर्वकारेण सुनीतिकुमारचटर्जिमहोदयस्य अध्यक्षतायां एकादशसदस्यीयः संस्कृतायोग:नियुक्तः। संस्कृतभाषा संरक्षणाय संवर्धनाय विकासाय च प्रतिवेदितः आयोगः 1957 तमे वर्षे।
4. संस्कृताऽऽयोगस्य प्रतिवेदनमनुश्रित्य वाराणस्याम् 1958 तमे वर्षे सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य स्थापना अभूत्।
5. शिक्षाऽऽयोग:(कोठारी आयोगः 1964-1966) 1964 खिष्टाब्दे जुलाई मासे चतुर्दश दिनांके विश्वविद्यालयानुदानायोगस्य प्रधानाचार्यस्य प्रो० डी. एस. कोठारी महाभागस्य अध्यक्षतायां शिक्षाऽऽयोगस्य नियुक्तिः अभवत्। आयोगः संस्कृतशास्त्रशिक्षणस्यमहत्त्वं स्वीकृत्य राष्ट्रियशिक्षाप्रणाल्यां संस्कृतं विशिष्टं स्थानं धारयति इत्युक्तवान्।
6. राष्ट्रीयशिक्षानीत्यां संस्कृतस्य स्थानम्-(1968) खिष्टाब्दे नवशिक्षानीतौ-1986 खिष्टाब्दस्य राष्ट्रियशिक्षानीत्या प्रावधानानि आवर्त्तितानि। ते यथा-
    1. विश्वविद्यालयस्तरे तत्त्वाध्ययनस्य संस्कृतस्य अध्ययनं अनुसंधानं च कारयितव्यम्।
    2. संस्कृतग्रन्थानाम् अन्यभाषासु अनुवादः कारणीयः।
    3. भारते संस्कृत-पाली-प्राकृत अन्यशास्त्रीयभाषासु च सम्बन्धःयोजनीयः।
    4. 1986तमे वर्षे राष्ट्रीयशिक्षानीतेः विभिन्नेषु विषयेषु गवेषणाकार्यार्थं संस्कृतस्य स्थानं प्रदत्तम्।

5. 14 अक्टूबर 1978 तमे वर्षे राष्ट्रीयसंस्कृतशिक्षासम्मेलने उद्घाटनभाषणे उपराष्ट्रपति वी. डी. जत्तीमहोदयेन संस्कृतस्य महत्त्व-विषये उक्तं यत् "संस्कृतं भारते पुरातनविचारानां सम्वाहिका शैक्षणिक-सांस्कृतिक-परम्परानां संरक्षिका अस्ति।"
6. 1988 ईसवी वर्षे मार्चमासे केन्द्रीयशिक्षापरामर्शदातृसमित्याऽपि संस्कृतस्य स्थानं प्रदत्तः। संस्कृतेन सह 'क्लासिकल' इति शब्दं संयोज्य त्रिभाषासूत्रसूचीतः।
7. 1989 मार्चमासस्य सप्तदशदिवसे (17/3/1989) सर्वोच्चन्यायालयः संस्कृतस्य उचितं स्थानं प्रदत्तः।
8. राममूर्ति आयोगः(1990) शास्त्रीयभाषायाःअध्ययन-अध्यापनोपरि महत्त्वं प्रदत्तम्। वर्तमानकालेऽपि संस्कृतस्य विविध-पाठ्यक्रमःसम्यग्रूपेण प्रचलन्ति।

## (घ) त्रिभाषासूत्रेषु संस्कृतस्य स्थानम्।

## 4. The place of sanskrit in Tri - lingual system.

त्रिभाषासूत्रान्तर्गते विद्यालयेषु त्रीणां भाषाणां शिक्षणम् अनिवार्यं स्वीकृतम्। त्रिषु भाषासु-1. मातृभाषा अथवा क्षेत्रीयभाषा, 2. हिन्दी, 3. आंग्लभाषा च सन्ति। सर्वैः राज्यैःइमं सिद्धान्तं स्वीकृतम्। उत्तरभारतस्य हिन्दीभाषी प्रान्तेषु तृतीयाभाषांरुपे संस्कृतभाषायाः अध्ययनं प्रचलने अभवत् केन्द्रीयविद्यालयेषु अपि कक्षा षष्ठीतः अष्टमी कक्षा तावत् संस्कृतम् अनिवार्यरूपेण स्वीकृतम्। नवमीकक्षातः दशमीकक्षा तावत् ऐच्छिकविषयरूपेण च स्वीकृतम्।

1988 तमे वर्षे केन्द्रीय-शिक्षा-सलाहकार-वोर्ड, संस्कृते कुठाराघातः कृतवान्। अनेन अनुशंसा कृतम् यत् त्रिभाषासूत्रान्तर्गतं संस्कृतस्य शिक्षणं न भवेत् अर्थात् स्वतन्त्र- विषयरूपे संस्कृतस्य शिक्षणं समाप्तं भवेत्। संस्कृतं हिन्दी ''ए'' इत्यनेन सह संगठितं भवेत्। हिन्दीभाषाप्रदेशेषु हिन्दीभाषया सह संस्कृतं योजने 20प्रतिशताः अङ्काः निश्चिताः स्युः। अनेन नियमानुसारेण संस्कृतशिक्षणं हिन्दीभाषीप्रदेशेषु हिन्दीविषयेन सह केवलं विंशतिः प्रतिशताङ्कभारस्य एव आसीत्।

**संशोधितत्रिभाषासूत्रे संस्कृतस्य स्थितिः**

(1) प्राथमिकविद्यालयस्तरः—(कक्षा प्रथमातः पञ्चमीपर्यन्तम्) सामान्यविद्यालयेषु संस्कृतशिक्षणं न भवति। संस्कृतं प्राथमिकविद्यालयेषु कक्षातृतीयतः एकस्मिन् विषयरुपे च संस्कृतस्य प्रावधानम् अस्ति।

(2) उच्चप्राथमिकःस्तरः—(कक्षाषष्टीतः अष्टमी पर्यन्तम्) सामान्यशिक्षायाः विद्यालयेषु तृतीयाभाषारूपेण सरलसंस्कृतस्य शिक्षणं भवति। संस्कृतविद्यालयेषु च संस्कृतस्य अध्ययनम् एकस्मिन् प्रमुखविषयरूपे भवति।

(3) माध्यमिकः स्तरः—(कक्षानवमीतःदशमी पर्यन्तम्) सामान्यशिक्षणस्य विद्यालयेषु संस्कृतस्य तृतीयाभाषारूपे अध्ययनं प्रचलति। संस्कृतविद्यालयेषु च द्वितीया भाषारूपे (प्रमुखा भाषारुपे) संस्कृतस्य अध्ययनं प्रचलति।।

(4) उच्चमाध्यमिकस्तर:—केन्द्रीयशिक्षावोर्डसंस्कृतस्य वैकल्पिकविषयरूपे स्वतन्त्रविषयरूपे प्रचलति। प्रादेशिकसर्वकारोऽपि उच्चमाध्यमिकस्तरे संस्कृताध्ययनं वैकल्पिकविषयरूपे प्रचलति।

## (ङ) संस्कृतशिक्षायोगः, पाठ्यक्रमः, त्रिभाषा-सूत्रं एवं तेषामुद्देश्यानि च

5. Sanskrit commision, curriculum,
Tri- lingual system and its objectives.

### (क) संस्कृताऽऽयोगः—(1956-1957)

जनतायाः लोकसभायाश्च अनुरोधे केन्द्रीयसर्वकारेण अक्टूबर मासस्य प्रथमदिनाङ्के 1956 तमे वर्षे संस्कृताऽऽयोगः सङ्घटितः। भारतस्य सुप्रसिद्धशिक्षाविदः स्व0 डॉ. सुनीति कुमार चटर्जि महोदयस्य अध्यक्षायां नवसदस्यात्मका:आयोग:निर्धारितः। संस्कृतस्य दीव्यता विकासाय, संवर्द्धनाय, भारतीयसंस्कृति:संरक्षणाय, प्रचीनसंस्कृतशास्त्रसंरक्षणाय, भारतीयभाषा संवर्द्धनाय, संस्कृताऽऽयोग:—(1956-57) गठनस्योद्देश्यानि निर्धारिताः। अस्य आयोगस्य विद्वद्भिः सम्पूर्णदेशे प्रचलितायाः पारम्परिक्याः आधुनिक्याश्चेति द्विविधायाः अपि संस्कृतशिक्षायाः प्रत्यक्षज्ञानं प्राप्तं तथा च साक्ष्याणि स्वप्रश्नावल्याश्चोत्तराणि, स्वपरिपक्वज्ञानानुभवविचारैः समन्वयदृभिः तैः अक्टूबरमासे 1957 तमे वर्षे स्वीयं सम्पूर्णप्रतिवेदनं प्रस्तुतम्। द्वादशाध्यायाना-मस्मिन्प्रतिवेदने सम्मानितसदस्यैः संस्कृतशिक्षायाः संवर्द्धनार्थं सम्मतयः प्रदत्ताः। यस्य प्रतिवेदनस्य प्रकाशनं उत्तरप्रदेश संस्कृत अकादमी, प्रकाशक:सम्पूर्णानन्द संस्कृतविश्वविद्यालय, वाराणसी 1979, प्रथमसंस्करणं द्रष्टव्यम्।

**संस्कृताऽऽयोगस्य प्रतिवेदनस्य मूलभावः**

(1) माध्यमिकविद्यालयेषु अनिवार्यसंस्कृतशिक्षा।
(2) त्रिभाषासूत्रस्य स्थाने भाषासूत्रम् (मातृभाषा-आङ्ग्लभाषा-संस्कृतम्)
(3) पारम्परिक-शास्त्रसंरक्षणार्थं संस्कृतविश्वविद्यालयः, संस्कृतपरिषदः, संस्कृतसंस्थानम्, विद्यापीठः इत्यादीनां विकासः।
(4) आधुनिक-परम्परागत प्रणाल्योरेकीकरणम्।
(5) संस्कृतेभ्यः, भारतीयभाषाभ्यः, तदन्यसम्बद्धविषयेभ्यः पाठ्यक्रमे समरूपेण स्थानं प्रदेयम्।
(6) संस्कृतशिक्षणार्थं विशेषविधयः अन्वेषणीयः।
(7) संस्कृतशिक्षणस्य कोशलात्मकविकासः।
(8) संस्कृतशोधकार्यम्।
(9) संस्कृतपाण्डुलिपीनां संग्रहणं प्रकाशनञ्च।

**संस्कृतं जनप्रियकर्तुं परामर्शः**

(1) व्यक्तिगतकक्षाणामायोजनम्।

(2) अध्ययनसमूहानां निर्माणम्।

(3) व्यक्तिगतपरीक्षाव्यवस्था।

(4) संस्कृतशिक्षणविधीनां सरलीकरणम्।

(5) संस्कृतसङ्घ-सम्मेलन-सभादीनाम् आयोजनम्।

(6) संस्कृते वाद-विवादः।

(7) संस्कृतसाहित्यस्य सङ्गीतात्मकपाठः।

अन्ते आयोगस्य कथनमस्ति यत् केन्द्रीयप्रादेशिकसर्वकाराभ्यां तेषां प्रतिवेदने ध्यानं प्रदेयम्, यतो हि प्रतिवेदने प्रदत्ता प्रत्येकं संस्तुतिः संस्कृतस्य कस्यापि भागस्य समुन्नयनाय विद्यते।

### (ख) संस्कृतपाठ्यक्रमः

पाठ्यक्रमः एकः मार्गः यो छात्रेषु स्वोद्देश्यानां प्राप्त्यर्थम् आवश्यकमस्ति। पाठ्यक्रमस्य अर्थः—लेटिन भाषायाः 'कुरेरी Currere' शब्दात् अभवत्। यस्य अर्थः अस्ति-'लक्ष्यं प्रति गमनस्य धावन मार्गम्' Rece course इति। विद्यालयनियन्त्रणे स्थितस्य शिक्षार्थिनः समस्तानुभवाःपाठ्यक्रमान्तर्गताः भवन्ति। विभिन्नाध्ययन-सङ्घटित-क्रिया-पाठ्यक्रम-पाठ्यक्रमेतरक्रिया-विद्यालयीय-सामाजिकजीवन-विद्यालयीय-वातावरणादीनि सर्वाणि पाठ्यक्रमे स्वस्वस्थानं लभन्ते। छात्राणां सर्वाङ्गीण-विकासाय विद्यालयस्य सम्पूर्णजीवनमेव पाठ्यक्रमो भवति। यः छात्राणां जीवनस्य सर्वान् पक्षान् प्रभावयति तेषां सन्तुलितविकासे साहाय्यं भवति। पाठ्यक्रमे संस्कृतभाषायाःस्थानं कीदृशं भवेत्? इदं चिन्तनम् आवश्यकम् अस्ति यत् 'संस्कृतम्' न केवलमेका भाषा एव वर्तते अपि तु संस्कृतं तु भारतीयपरम्परा-सभ्यतयोश्च प्रतीकमस्ति। अतः देशस्य सर्वेषु विद्यालयेषु महाविद्यालयेषु च संस्कृतशिक्षायाःसमुचिता व्यवस्था स्यात्।

### संस्कृतपाठ्यक्रमस्य प्रकाराः

संस्कृताध्ययनस्य दृष्ट्या भारतवर्षे प्रायशः द्वयोः पाठ्यक्रमयोः व्यवस्था अस्ति।

#### (1) शास्त्रीयविद्यालय-महाविद्यालयेषु च

प्रथमा(प्रवेशिका)-मध्यमा(उपाध्यायः) शास्त्री(स्नातकः) प्रविधिःपाठ्यक्रमःयः साहित्ये व्याकरणे दर्शने आयुर्वेदे ज्योतिषे धर्मशास्त्रे आचार्यः इति उपाधिं प्रददाति तान् पाठ्यक्रमे अवश्यः सम्मिलितः भवेत्। विशिष्टदक्षताप्राप्त्यर्थं प्रवीणता-प्राप्त्यर्थञ्च अनुसन्धानकार्येषु विशेषावधानस्य आवश्यकता अस्ति। विद्यावारिधि (पी-एच. डी) इति विद्यावाचस्पति (डी. लिट्) इत्यादि-उपाधीनां प्राप्त्यर्थं छात्रेभ्यः आर्थिकसहायता उपलब्धं भवेत्।

#### (2) आधुनिकविद्यालय-महाविद्यालयेषु च

षष्ठकक्षातः संस्कृतस्याध्ययनं मातृभाषायां क्षेत्रीयभाषायाञ्च भवति।

## पाठ्यक्रमनिर्माणस्य प्रमुखसिद्धान्ताः

**( 1 ) बालक्रेन्द्रीयतायाःसिद्धान्तः**

पाठ्यक्रमनिर्माणस्य अयं महत्त्वपूर्णः सिद्धान्तः वर्तते। अस्मिन् सिद्धान्ते बालकानां रुचीनाम् आवश्यकतानां मनोवृतीनां क्षमतानां योग्यतानाम् अधिकं महत्त्वं वर्तते। राष्ट्रीयशिक्षानीति ( 1986 ) अनुसारं बाल-केन्द्रित पाठ्यक्रमस्य संस्तुतिः कृतम्।

**( 2 ) रचनात्मकशक्तेः उपयोगितायाः सिद्धान्तः**

पाठ्यक्रमे साहित्य ललितकला-शिल्प-विज्ञान-इत्यादिविषयां पाठ्यक्रमे महत्त्वपूर्णं स्थानं दातव्यम्। छात्रेषु सृजनात्मकशक्तेः वर्धनार्थं व्यावसायिकविषयानां प्रायोगिकविषयानाञ्च सम्मिलितं करणीयम्।

**( 3 ) उपयोगितायाःसिद्धान्तः**

पाठ्यक्रमनिर्माणस्य निर्माणं वर्तमानजीवने भावीजीवने च जीवनोपयोगी विषयानां क्रियाणां च आधारे कर्तव्यम्।

**( 4 ) परिवर्तनशीलतायाः सिद्धान्तः**

पाठ्यक्रमः परिवर्तनशीलः भवितव्यम्। पाठ्यक्रमःप्रत्येकं वातावरणस्य अनुकूलं भवेत्। विषयाध्यापकोऽपि अध्यापनसमये प्रकरणे स्थानीयोदाहरणानि दातुं शक्नोति।

**( 5 ) विविधतायाःसिद्धान्तः**

एकस्याम् एव कक्षायां विभिन्न-योग्यता-अभिवृत्ति- अभिरुचियुक्ताःछात्राः भवन्ति। पाठ्यक्रमे सर्वस्तरीयछात्राणाम् अनुरूपं विषयेषु क्रियासु च विविधता अपि भवितव्यम्।

**( 6 ) सहसम्बन्धस्य सिद्धान्तः**

पाठ्यक्रमे निर्धारिताः विषयाः परस्परः सहसम्बन्धिता भवितव्याः। विषयेषु सह-सम्बन्धेन बालकज्ञानस्य समग्ररूपेण परिचितः भवति।

**( 7 ) क्रीडाविधिः सिद्धान्तः**

क्रीडाविधिद्वारा अधिगमः आनन्ददायि स्थायि च भवति। एतासु क्रीडाविधिसु 'मान्टेसरी" किंडरगार्डन' 'प्रोजेक्ट' इति प्रमुखाः सन्ति। पाठ्यक्रमनिर्माणे क्रीडाक्रियासु अधिगमक्रियासु च समन्वयं स्थापितव्यम्।

**( 8 ) वैयक्तिकानुरूपतायाःसिद्धान्तः**

पाठ्यक्रमः बालकस्य वैयक्तिक-आवश्यकतानाम् अनुरुपं भवितव्यम्। पाठ्यक्रमः बालकस्य आयु-अनुरुपं, मानसिक-विकासनुरूपञ्च अपि भवेत्।

**( 9 ) सामाजिकानुरुपतायाः सिद्धान्तः**

पाठ्यक्रमः बालकस्य सामाजिकावश्यकतानाम् अनुरूपम् अपि भवितव्यम्। पाठ्यक्रमः छात्रेपु राष्ट्रीयतां धर्मनिरपेक्षतां जनतन्त्रतात्मकदृष्टिकोणं उत्पन्नकरणे सहायकः भवेत्।

**( 10 ) अनुभवानां पूर्णतायाः सिद्धान्तः**

पाठ्यक्रमस्य अन्तर्गते मानवजातेः अनुभवानां सम्पूर्णतया निहितःभवति। पाठ्यक्रमे सैद्धान्तिकविपयैः सह मानवस्य अनुभवानाम् अपि उचितं स्थानं भवेत्। यान् छात्रः क्रीडाक्षेत्रे, कक्षाकक्षे, पुस्तकालये, प्रयोगशालायां, शिक्षकानां सम्पर्केण प्राप्नोति। अतः पाठ्यक्रमे अनुभवानां सम्पूर्णता अपि आवश्यकी वर्तते।

## संस्कृतपाठ्यक्रमस्य रचनासमये धातव्याः बिन्दवः

1. पाठ्यक्रमः पूर्वकक्षास्तरतःआगामिस्तरस्य भवेत्।
2. छात्राणां स्तरस्य रुचेर्वा पूर्णरूपेण स्थानं स्यात्।
3. पाठ्यक्रमःस्वतः पूर्णः भवेत् यथा-उच्चारणं वाचनं शब्दावली, रचनाकार्यं, अनुवादं भापातत्वं शब्दरूपं धातुरूपं इत्यादीनां स्पष्टः उल्लेखःभवेत्।
4. पाठ्यक्रमे कथा कविता, संवादः, गद्यम्, पद्यम्, रचना, एकांकी भवेयुः।
5. पाठ्यक्रमे सामाजिक-नैतिक-सांस्कृतिक-आध्यात्मिक-वातावरणेन सह सम्बन्धिः यथार्थवादे च आधारितः भवेत्।
6. माध्यमिक-उच्चमाध्यमिक-स्तरयोः मातृभाषायाः संस्कृतस्य च समन्वितः पाठ्यक्रमोऽपि निर्धारयितुं शक्यते।
7. राष्ट्रियशिक्षानीतीनां निर्धारणसमये संस्कृतं प्रति विशिष्टं ध्यानं देयम्।

**( ग ) त्रिभाषासूत्रम्**

त्रिभाषासूत्रान्तर्गते विद्यालयेपु त्रीणां भाषाणां शिक्षणम् अनिवार्यं स्वीकृतम्। त्रिपु भाषासु-1. मातृभाषा अथवा क्षेत्रीयभाषा, 2. हिन्दी, 3. आंग्लभाषा च सन्ति। सर्वैः राज्यैःइमं सिद्धान्तं स्वीकृतम्।

## ( च ) माध्यमिक-स्तरेषु संस्कृत-पाठ्यक्रमं पाठ्यपुस्तकानि च।

6. Sanskrit curriculum and text book in secondary level.

अद्यतनशिक्षाप्रणाल्यां पाठ्यपुस्तकस्य स्थानमत्यन्तं महत्त्वपूर्णं वर्त्तते। शिक्षणस्य केन्द्रबिन्दुरस्ति पाठ्यपुस्तकम्। पाठ्यपुस्तकस्य मुख्योद्देश्यानि वाचनं, लेखनं, व्याकरण-शिक्षणम् गहनाध्ययनञ्च भवन्ति। एतदतिरिक्ततया द्रुतपाठपुस्तकान्यपि पाठ्यक्रमे निर्धारितानि भवन्ति। एतेषामुद्देश्यं विस्तृताध्ययनं भवति। भाषाशिक्षणे पाठ्यपुस्तकानाम् अवलम्बनम् आवश्यकं भवति। यतः छात्राणां विषयवस्तुना साकं भाषायाः स्वरूपमपि बोधनीयं भवति। शैक्षणिकस्तरे सर्वत्र समरूपतां सम्पादयितुञ्च पाठ्यपुस्तकस्य प्रयोगो आवश्यकः। पाठ्यपुस्तकं

पाठ्यविषयाणां, व्याकरणस्य च अध्ययनेन, अभ्यासैश्च अर्जितस्य ज्ञानस्य स्थायित्वं विधातुं प्रमुखं साधनं भवति। पाठ्यपुस्तकं वर्तमानशिक्षायाः आधारशिला वर्त्तते।

**( क ) पाठ्यपुस्तकानामावश्यकता**

1. पाठ्यपुस्तकानां प्रयोगेण पाठानां पठने पाठने च सहायता भवति।
2. अधीतानां पाठानां स्मरणाय प्रबलं साधनं भवति।
3. ज्ञानोपार्जनाय पाठ्यपुस्तकस्य साह्यमपेक्षितं भवति।
4. छात्राणां गृहकार्यकरणे सौविध्यं भवति।
5. पाठ्यपुस्तकं भाषाशिक्षणस्य साधनं भवति, न तु साध्यम्।
6. भाषाशिक्षणस्य विशिष्टोद्देश्यानां प्राप्तौ सहायकं भवति।

**( ख ) पाठ्यपुस्तकस्य उद्देश्यानि**

1. बालकाणां ज्ञानस्य सीमायाः विस्तारः।
2. व्यावहारिकज्ञानस्य सम्पादनाय प्रेरणा।
3. छात्राणां कल्पनाशक्तेः विकासः।
4. विविधविषयाणां, विभिन्नशैलीनाञ्च परिचयः।
5. छात्रेषु स्वाध्यायं प्रति रुच्युत्पादनम्।
6. संस्कृतपाठ्यपुस्तकस्य मुख्योद्देश्यं तावत् सांस्कृतिक लक्ष्याणां पूरणम्।

**( ग ) संस्कृतपाठ्यपुस्तकानां प्रकाराः**

1. सूक्ष्माध्ययनस्य पुस्तकानि–सूक्ष्माध्ययनस्य पुस्तकानामध्ययनं गम्भीररूपेण भवति। एतेषामुद्देश्यं बालकानां शब्दभण्डारस्य वर्धनं, भाषाज्ञानस्य वर्धनं, सूक्तीनां लोकोक्तीनाञ्च परिचयः, विभिन्नप्रसङ्गानां स्पष्टज्ञानञ्च भवति। एतेषामध्ययनेन बालकानां ज्ञानं वर्धते। लेखकानां कवीनाञ्च विचाराः ज्ञायन्ते। यथा–गद्य–पद्य–व्याकरण–अनुवादादि सम्बद्धानि पुस्तकानि।

2. विस्तृताध्ययनस्य पुस्तकानि–विस्तृताध्ययनस्य पाठ्यपुस्तकानां प्रयोगः द्रुतपाठस्य कृते भवति। अत्र सरलभाषायाः प्रयोगो भवति। एतेषामुद्देश्यं छात्राणां शीघ्रवाचनस्याभ्यासो भवति।

## ( छ ) माध्यमिक-स्तरेषु आदर्शपाठ्यपुस्तकस्य विकासः तेषां वाह्य-आन्तरिक-गुणानि च।

## 7. Development of ideal text book for secondary level-its external and internal qualities.

**पाठ्यपुस्तकनिर्माणस्य सिद्धान्ताः**–सत्पाठपुस्तकस्य केचन् विशिष्टताः भवन्ति। एते विशेषाः पाठ्यपुस्तकनिर्माणे सहायकाः भवन्ति। तेषां पक्षद्वयं दृश्यते–

(क) आन्तरिकपक्षः, (ख) बाह्यपक्ष इति।

**( घ ) आन्तरिकपक्षस्य सिद्धान्ताः**

**1. सोद्देश्यता**–प्रत्येकं पाठ्यपुस्तकं कैश्चित् निश्चितैः उद्देश्यैः निर्मीयते। तेषामुद्देश्यानां सम्पादनं तत्र स्यात्।

**2. स्तरानुगुणता**–पाठ्यपुस्तके सञ्चिता सामग्री छात्राणां शारीरिक मानसिकस्तरानुगुणं भवेत्। किशोरावस्थायां छात्राः कथावर्णने, प्रकृतिवर्णने, यात्रावर्णने, जीवितचरित्रेषु च आसक्ताः भवन्ति। अतः तादृशविषयाः तेषां पाठ्यपुस्तके भवेयुः।

**3. व्यावहारिकता**–पाठ्यविषयाः छात्राणां परिसरेण, जीवनेन च सम्बद्धाः स्युः।

**4. रोचकता**–पाठ्यसामग्री बालानां रुच्यनुसारं भवेत्। उच्चस्तरे सामाजिकाः, वैज्ञानिकाश्च विषयाः स्युः। हास्यकथाः बालानां मनोविनोदाय भवेयुः।

**5. विषयवैविध्यम्**–पाठ्यपुस्तके विषयाणां वैविध्यं सम्पादनीयम्। गद्यं, पद्यं, नाटकं, निबन्धाः, सम्भाषणम् इत्यादिसाहित्यप्रकाराः भवेयुः।

**6. आदर्शवादः**—बालकानां जीवने उन्नतादर्शानां नैतिकतायाश्च उत्पादनाय अनुकूलाः विषयाः भवेयुः।

**7. आधुनिकविषयाणां समावेशः**—आधुनिककाले नवीनविषयेषु संस्कृतस्य उपयोगं ज्ञापयितुम् आधुनिकविषयाणामपि समावेशः आवश्यकः। वैज्ञानिकाविष्काराः, प्रजातन्त्रं, पंचायतनं, नगरपालिका, नेतृणां जीवनचरित्राणि च पाठ्यपुस्तके समाविशेयुः।

**8. उपयुक्तता**–पाठ्यपुस्तके समाविष्टाः विषयाः छात्राणां दैनिकव्यवहारे, जीवने च उपयुक्ताः स्युः।

**9. व्यवस्थितक्रमः**— पाठ्यपुस्तकस्य सामग्री व्यवस्थिता स्यात्। पाठ्यपुस्तके ऋतुभिः, उत्सवैश्च सम्बद्धाः पाठाः तत्तत्समये पाठिताः भवेयुः।

**10. अभ्यासः**—पाठ्यपुस्तके प्रत्येकं पाठस्य अन्ते अभ्यासकार्यम् अवश्यं दातव्यम्। **यथा**– शब्दार्थः, वाक्यप्रयोगः, व्याकरणकार्यम्, रिक्तस्थानानां पूरणम्, गद्यांशानां, पद्यांशानाञ्च व्याख्या, अनुवादः, अन्यप्रश्नाः अभ्यासार्थं स्युः।

**11. भाषाधिकारवर्धनम्**– पाठ्यपुस्तकस्य भाषा बालानां योग्यतानुसारं स्यात्। शब्दानां चयनं, वाक्यानां योजना, सूक्तीनां सङ्ग्रहश्च बालानां भाषाधिकारं वर्धयन्ति।

**( ङ ) बाह्यपक्षस्य सिद्धान्ताः**

**1. आकारः**–पाठ्यपुस्तकानामाकारः आवश्यकतानुसारम् अल्पो वा अधिको वा स्यात्।

**2. सम्पादनम्**–प्राथमिकस्तरे, माध्यमिकस्तरे, उच्चस्तरे च संस्कृतशिक्षणाय प्रायः संस्कृतसङ्ग्रहाणां प्रयोगः क्रियते। अतः एतेषां सम्पादनं सश्रद्धं कर्तव्यम्।

**3. चित्राणि**–चित्राणि विषयानां स्पष्टीकरणे सहायकानि भवन्ति। पाठ्यपुस्तकानामुपयोगस्य वर्धनाय चित्राणि भवेयुः।

**4. मुद्रणम्**–पाठ्यपुस्तकस्य मुद्रणं शुद्धं स्यात्। शीर्षकाणां कृते भिन्नप्रकाराणि मुद्राक्षराणि उपयुज्येरन्। पदानां वाक्यानां च मध्ये उचितं व्यवधानं स्यात्।

**5. नाम**–पाठ्यपुस्तकस्य बाह्यगुणेषु नाम्नोऽपि प्रभावो वर्त्तते। पाठ्यपुस्तकस्य नाम सरलं, संक्षिप्तं, स्पष्टम्, आकर्षकञ्च भवेत्।

**6. आवरणम्**–पुस्तकस्य बन्धनं सुदृढं, बाह्यावरणमाकर्षकञ्च स्यात्। मुखपुटे रागरञ्जितानि चित्राणि छात्राणां प्रसादकानि स्युः। उच्चस्तरे कलात्मकानि चित्राणि भवेयुः।

**7. मूल्यम्**–पाठ्यपुस्तकस्य मूल्यमुचितं स्यात्।

संस्कृतपाठ्यपुस्तकस्य प्रयोगे संस्कृताध्यापकाः संस्कृतशिक्षणे मार्गदर्शकरूपेण कार्यं कुर्वन्तु। पाठ्यपुस्तकस्य दिशानिर्देशानुसारं बालकान् संस्कृतं पाठयन्तु। पाठ्यपुस्तकं पठितुं छात्रान् प्रेरयेयुः।

卐 卐 卐

# 4

# भाषाशिक्षणस्य कौशलानि

# Language Teaching Skills

## (क) कौशलानां प्रकाराः।

## Types of Skills

भाषा कापि भवतु, तस्याः अध्यापनाय सामान्योद्देश्यानि अवश्यं भवति। उद्देश्यं विना कोऽपि किमपि न करोति। भाषाध्ययनाय अध्यापनाय च उद्देश्यानि आवश्यकानि भवन्ति। सामान्योद्देश्यानि, विशिष्टोद्देश्यानि द्विधा विभक्तानि सन्ति। संस्कृतभाषायाः अध्यापनाय अपेक्षिताः लक्षिताधिगमविशेषाः स्पष्टीकरणानि च अत्र विविच्यन्ते। प्रायः छात्राणां कृते श्रवण-भाषण-लेखन-पठनेति चतुर्विधेषु कौशलेषु दक्षतायाः सम्पादनमेव भाषायाः प्रधानानि उद्देश्यानि सन्ति। एतानि चत्वारि कौशलान्येव भाषायाः सामान्योद्देश्यानि सन्ति। एतैर्लिखिताधिगमविशेषैः भाषायामधिकारं सम्पाद्य तस्यां सम्यक्तया व्यवहर्तुं प्रयत्नः विधेयः अध्यापकेन। एवं चतुर्विधेषु कौशलेषु नैपुण्य-सम्पादनं भाषायाः सांकेतिकं प्रयोजनम् वर्तते। भाषा भावोद्वेगौ प्रेरणा चमत्कारः सम्भाषणे नैपुण्यं जनयति। अनन्तरं साहित्यमुत्पादयति। ततः परम् तथ्यम् तेन हृदयनैर्मल्यं सिध्यति। फलतः सर्जनात्मकशक्तिः समुत्पन्ना भवितुमर्हति। एवमुद्दीपनप्रयोजन सम्पादनमेव अध्यापकस्य कर्त्तव्यं वर्तते। प्रशिक्षणस्तरे विशिष्टभाषाध्यापने शिक्षाशास्त्रिभिः इमे लक्षिताधिगम-विशेषा स्वीकृता। ते यथा-

1. ज्ञानात्मक-लक्षिताधिगमविशेषाः।
2. अवगाहनात्मक-लक्षिताधिगमविशेषाः।
3. अनुप्रयोगात्मक-लक्षिताधिगमविशेषाः।
4. विश्लेषणात्मक-लक्षिताधिगमविशेषाः।
5. संश्लेषणात्मक-लक्षिताधिगमविशेषाः।
6. मूल्याङ्कनात्मक- लक्षिताधिगमविशेषाः।

संस्कृतेऽपि इमे लक्षिताधिगमविशेषाः स्वीकृता एव। संस्कृतभाषायां विद्यमाना प्रधानलक्षिताधिगमविशेषाः तेषां स्पष्टीकरणानि च अत्र प्रस्तूयन्ते-चतुर्विध-कौशलानि तानि यथाः—

1. श्रवणकौशलम्,
2. भाषणकौशलम्,
3. पठनकौशलम्,
4. लेखनकौशलम्

इति। मूलतः विचारग्रहणं विचाराभिव्यक्तिरित्येतत् द्वयं कस्याऽपि भाषायाः शिक्षणस्य प्रधानमुद्देश्यं भवति। भाषितस्य श्रवणेन, लिखितस्य वाचनेन, विचारग्रहणं सिध्यति। तथा भाषणेन लेखनेन च विचाराभिव्यक्तिः क्रियते। एवमेतेषां चतुर्णामुद्देश्यानां साधनाय विभिन्नाः क्रियाः भवन्ति विभिन्नेषु स्तरेषु। स्तरानुगुणमुद्देश्यानां विवेचनमत्र विचारितम्।

**(1) श्रवणकौशलम्:—(Listening Skill)**

भाषायाः प्राथमिकं कौशलमिदम्। इदं कौशलमपि कश्चन लक्षिताधिगमविशेषः। भाषायां अयमेवाद्यः लक्षिताधिगमविशेषः। अधोलिखितान्नि स्पष्टीकरणानि आवश्यकानि सन्ति।

**श्रवणकौशलस्य साधनानि**—1. गुरुमुखम्, 2. परिवारसदस्याः, 3. आकाशवाणी, 4. दूरवाणी, 5. दूरदर्शनम्, 6. ध्वनिमुद्रणयन्त्रम्, 7. संगणकयन्त्रम्, 8. ध्वनिविस्तारकयन्त्रम्, इत्यादयः।

वाचिक क्रियायाः वर्णरुपमेव लेखनम्। ध्वनिरुपे विद्यमानं भाषांशं लिपिरुपे अवतारणमेव लेखनमित्युच्यते। वाग्-रूप-भाषायाःस्थिररूपप्रदानमेव लेखनम्। लेखनमाधृत्यतत्तद्व्यक्तीनां जीवनपद्धतिं ज्ञातुं शक्नुमः। भाषायाः रुपद्वयमस्ति मौखिकं लिखितञ्चेति। वर्णात्मकशब्दै भावानामभिव्यक्तिः मौखिकं रुपं भवति। एतेषां वर्णानां रेखात्मकसङ्केतैः लिपिरूपेण निबन्धनं भाषायाः लिखितं रुपं भवति। मौखिक रुपं तात्कालिकं भवति। लिखितस्तु स्थायी भवति। मौखिकन्तु प्रत्यक्षं विद्यमानान् जनानेव बोधयति। लिखितन्तु देशान्तरे कालान्तरे च विद्यमानानपि जनान् बोधयति। अतः स्पष्टं सुन्दरञ्च अक्षराणां लेखनं भाषाध्ययनस्य प्रमुखमङ्गं भवति।

**(2) भाषणकौशलम्:—(Speaking Skill)**

इदं कौशलं छात्राणां द्वितीयो लक्षिताधिगमविशेषः। वाग्-रूपं भावप्रकटनमेव भाषणम्। परिसरप्रभावेण, आधारेण वा भाषणशक्तिः जायते, वर्धते च। यतो हि श्रवणकौशलानन्तरमस्य कौशलस्य प्राधान्यमस्ति। एतत् सम्पादयितुं अधोलिखितानि स्पष्टीकरणानि सामान्योद्देश्यानि वा आश्रयणीयानि सन्ति।

इदं कौशलं छात्राणां द्वितीयो लक्षिताधिगमविशेषः। वाग्-रूपं भावप्रकटनमेव भाषणम्। परिसरप्रभावेण, आधारेण वा भाषणशक्तिः जायते, वर्धते च। यतो हि श्रवणकौशलानन्तरमस्य

कौशलस्य प्राधान्यमस्ति। एतत् सम्पादयितुं अधोलिखितानि स्पष्टीकरणानि सामान्योद्देश्यानि वा आश्रयणीयानि सन्ति।

**भाषणकौशलोद्देश्यानि:—**

1. अचां हलाञ्च स्पष्टतया भाषणम्।
2. अल्पप्राण महाप्राणयो: भेदं प्रदर्श्य भाषणम्।
3. व ब न ण श ष स इत्यादीनामुच्चारणे तारतम्यत्वं यथा जानन्ति तथा भाषणम्।
4. समवेगेन भाषणं स्यात्।
5. भाषणं सन्दर्भोचितं यथा स्यात् तथा सम्पादनम्।
6. अविच्छिन्नं भाषणं यथास्यात् तथा सम्पादनम्।
7. गद्यपद्ययो: गत्यनुगुणं भाषणम्।
8. विना सभाकम्पं सधैर्य भाषयितुं अवकाश-प्रकल्पनम्।
9. रसानुगुणं भाषणे आरोहावरोह-क्रमसम्पादनम्।
10. भावानुगुणं समुचितभाषाया: उपयोजनम्।
11. पर्याप्तकण्ठस्वरेण भाषणसम्पादनम्।
12. आदिमध्यान्तारनुगुणं भाषणकौशलसम्पादनम्।
13. श्रोतृणां यथा भाव आगतो भवति तथा भाषणदाने प्रेरणादानम्।
14. विरामार्धविराम-अनुगुणं भाषणम्।
15. विभिन्नभाषाभाषिण: विदुषां सर्वे भावावगाहने यथा दक्षा भवेयु: तथा भाषितुं अवकाश-प्रकल्पनम्।

उपर्युक्तानि उद्देश्यानि परिपाल्य य: भाषणं करोति स: न केवलं श्रोताकर्षकभाषणे अपि तु पठनकौशलेऽपि दक्षो भवेत्। वाचनं लिखिताक्षराणां भाषण-रूपं भवति। अत: भाषणकौशलं विना भाषाज्ञानं अपरिपक्वं अपूर्णञ्च भवति। अर्थ पूर्वकमुच्चारणमपि भाषणकौशलस्य विशिष्टता वर्त्तते।

**(3) पठनकौशलम्:—(Reading Skill)**

संस्कृताध्यापकेन दृष्टौ स्थापनीयं अन्यत् कौशलमस्ति पठनमिति। पठ्-व्यक्तायां वाचि इत्यस्मात् धातो: निष्पन्नस्य पठन इति शब्दस्य अर्थग्रहणपूर्वकं स्पष्टरूपं वाचनम् इत्यर्थ:।

**लौकिकानां हि साधूनामर्थं वागनुवर्त्तते।**
**ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति।।**

उत्तररामचरिते कथित श्लोकेन ज्ञायते यत्-पठने प्रथमं शब्द, तस्मात् अर्थ: अन्वेष्यो भवति। छात्रा: श्रवणापेक्षया, पठनेन अधिकं ज्ञानं समुपार्जयन्ति। सस्वरं पठनं मौनपठनं चेति द्विविधं पठनकौशलम्। सस्वरवाचने स्वरयन्त्रस्य मुखस्य उपयोगात् परिश्रम: अधिको भवति। मौनवाचनस्याभ्यास: छात्राणामत्यन्तमावश्यकम्, तेन च निष्प्रयासं, दीर्घकालं विस्तृतवाचनं

कर्तुं शक्यते। किञ्च अल्पेन कालेन बहु अध्येतुं शक्यते। सस्वरवाचनं सर्वथा अर्थज्ञान-पूर्वकं स्यात्। प्रारम्भिकस्तरे शुद्धवाचनस्य महत्त्वमधिकं भवति। मौखिकभावाभिव्यक्तेः साधनत्वेन वाचनस्य मूल्यं भवति। सभायां भाषणस्याभ्यासः सस्वर-वाचनद्वारा प्राप्तुं शक्यते। सस्वरवाचनस्य समुचिताभ्यासान्तरमेव छात्राः मौनवाचनाय प्रेरणीयाः। प्रारम्भिकदशायां अध्यापित पाठभागस्य मौनवाचनाय अर्थग्रहणाय च छात्राः आदेष्टव्याः।

**(4) लेखनकौशलम् (Writing Skill)**

वाचिक क्रियायाः वर्णरूपमेव लेखनम्। ध्वनिरूपे विद्यमानं भाषांशं लिपिरूपे अवतारणमेव लेखनमित्युच्यते। वाग्-रूप-भाषाया:स्थिररूपप्रदानमेव लेखनम्। लेखनमाधृत्यतत्तद्व्यक्तीनां जीवनपद्धतिं ज्ञातुं शक्नुमः। भाषायाः रुपद्वयमस्ति मौखिकं लिखितञ्चेति। वर्णात्मकशब्दै भावानामभिव्यक्तिः मौखिकं रुपं भवति। एतेषां वर्णानां रेखात्मकसङ्केतैः लिपिरूपेण निबन्धनं भाषायाः लिखितं रुपं भवति। मौखिक रुपं तात्कालिकं भवति। लिखितस्तु स्थायी भवति। मौखिकन्तु प्रत्यक्षं विद्यमानान् जनानेव बोधयति। लिखितन्तु देशान्तरे कालान्तरे च विद्यमानानपि जनान् बोधयति। अतः स्पष्टं सुन्दरञ्च अक्षराणां लेखनं भाषाध्ययनस्य प्रमुखमङ्गं भवति।

**(ख) श्रवण-पठनयोः ग्रहणशीलता।**

Acceptance - Listening Reading.

अखिलभूमण्डले यत्र कुत्रापि निवसन्तः जनाः राजनेतारः शिक्षकाः वा 'शिक्षा' इति शब्दस्य प्रयोगं कुर्वन्ति। कौशले कुशलता भवति पठनशिक्षणक्षेत्रे तस्यशिक्षणस्य महत्त्वं अधिकं वर्तते यस्य सम्पादनं विभिन्नकौशलैः क्रियते। एतैः कौशलैः शिक्षणस्य विकासः भवति। कौशलसम्पन्नाध्यापकः छात्रेषु कुशलताम् उत्पादयितुं समर्थो भवति।

**श्रवणस्य ग्रहणशीलता अधोलिखितानि सन्ति। यथा–**

1. अच् हल् वर्णानां मध्ये भेदज्ञानम्।
2. आभ्यन्तर-बाह्य-प्रयत्नयोर्मध्ये भेदज्ञानम्। यथा-वर्णानां मुखात् बहिः निष्क्रमणात् पूर्वमेव मुखे यः यत्नो भवति, सो आभ्यन्तरः एवं च वर्णानां मुखात् वर्णनिष्क्रमणसमये यः यत्नो भवति सः बाह्यः।
3. अल्पप्राण-महाप्राणयोर्मध्ये भेद-स्पष्टीकरणम्।
4. ऋ लृ वर्णयोः विलक्षण-उच्चारणानुस्मरणम्।
5. पञ्चपु वर्गेपु विद्यमानानां अनुनासिकाननुनासिकवर्णानां उच्चारणभेदज्ञानप्रदर्शनम्।
6. श प स ज्ञ इति वर्णानामुच्चारणे ध्वनि भेदानुस्मरणम्।
7. क्ष क्श स्ट श्च च्च च्छ सदृश संयुक्ताक्षराणामुच्चारणे ध्वनिभेदस्मरणम्।
8. गद्यपद्ययोः पठने भेदज्ञापनम्।
9. विरामार्धविरामयोः भेदश्रावणम्।
10. प्रगटनम् आज्ञाप्रश्न आश्चर्यार्थकसूचक-वाक्यान्तेपु विद्यमानानां ध्वनिभेदानां श्रावणम्।

11. विविधभाषाप्रभावेण व्यवह्रियमणानां वर्णभेद-श्रावणम्।
12. उदात्तानुदात्तस्वरित-भेद-ज्ञापनम्।
13. ह्रस्व-दीर्घ-प्लुत-भेद-श्रावणम्।
14. जिह्वामूलीयोपध्मानीययो: भेद-ज्ञापनम्।
15. श्रवणकौशलवर्धनाय प्रथमिकस्तरे-शिशुगीतानि, अभिनयगीतानि, हास्य-वीर-अद्भुत-रसात्मका: कथाश्च श्रावणीयानि। माध्यमिकस्तरे-करुण-वीर-हास्यरसोपेता: कथा: श्रावयितुं शक्नोति, शिक्षक:। उच्चस्तरे-नवरसोपेतानां गीतानां, कथानां, श्लोकानां च श्रवणं कारणीयम्। भाषणसामर्थ्यसमुपार्जनाय श्रवणकौशलानि आवश्यकानि भवन्ति।

    एतानि श्रवणकौशलस्योद्देश्यानि-सरलं शुद्धञ्च संस्कृतं वक्तुं समर्था भवेयु: छात्रा:, एवं च सरले शुद्धे च संस्कृते स्वीयान् विचारान् लिखितुं प्रभवेयु:।

**पठनकौशलस्य ग्रहणशीलता अधोलिखितानि सन्ति। यथा-**

1. ध्वनिलिप्यो: स्पष्ट: सम्बन्ध: यथा स्यात् तथा पठनम्।
2. अर्थावगाहनपूर्वकं पठनाय अवकाश-प्रकल्पनम्।
3. कक्षोचितस्वरेण पठनम्।
4. अविच्छिन्नतया पठनम्।
5. विविधभाषागत चिह्नानि, उदात्तानुदात्तस्वरितानुगुणं पठनकौशल सम्पादनम्।
6. गद्यपद्ययोर्गतिमनुसृत्य पठनम्।
7. आङ्गिकाभिनयस्यापेक्षया वाचिकाभिनयस्य प्राधान्यं प्रदाय पठनम्।
8. व्याघ्री यथा हरेत पुत्रान् दंष्ट्राभ्यां न च पीडयेत्

भीतापतन-भेदाभ्यां तद्वद्वर्णान्प्रयोजयेत्। अर्थात्-येन प्रकारेण पतनभेदाभ्यां भीता व्याघ्री सावधानतया स्वपुत्रान् द्रंष्ट्राभ्यां धृत्वान्यत्र नयति तथैव वर्णानामुच्चारणे जागरूकतया भाव्यम्। न च तत्र शैथिल्यंव्याघातं वा कुर्यात्। उच्चारित वर्णानां कृते सदैव सावधानो भवेत्।

एतानि स्पष्टीकरणानि मनसि निधाय य: पठति, स: पठनकौशले दक्षो भवेत्। एवं स: श्रोताकृष्ट: भवेत्।

**पठन ( वाचन ) शिक्षणविधि:**—वाचनशिक्षणे प्रधानत: त्रयो विधय: सन्तीति। ते च-

**1. वर्णमालाविधि:**—अस्मिन् विधौ वर्णमालायां येन क्रमेण वर्णा: पाठ्यन्ते स्वरा:, व्यञ्जनानि च तेषां बोधनानन्तरं संयुक्ताक्षराणां, पदानां, वाक्यानाञ्च शिक्षणं क्रमश: क्रियते। संस्कृतवर्णमाला वैज्ञानिकी भवति। अत्र स्वरा:, व्यञ्जनानि च यथा लिख्यन्ते, तथैव पठ्यन्ते। अत: वर्णमालाशिक्षणेन स्वरयन्त्रस्य नियमितं प्रशिक्षणं भवति।

**2. शब्दशिक्षणविधि:**—सार्थकशब्दानां शिक्षणं क्रियते। छात्र: प्रथमं शब्दान् एव उच्चरति। विदुषां सम्मतोऽयं विधि:।

**3. वाक्यशिक्षणविधि:**—अयं विधि: सर्वोत्तम: मनोवैज्ञानिक: स्यात्। भाषायां वाक्यमेव

अर्थबोधिका अन्वितिर्भवति। शब्दाः वर्णाश्च तद्घटकाः भवन्ति। वैयाकरणाः अपि अखण्डवाक्य स्फोटमेव अर्थबोधकं मन्यन्ते। अतश्चायं विधिः छात्राणामासक्तिकरो भवति।

### (ग) लिखित-मौखिक-अभिव्यक्तिः।
### Expression- Speaking, Writing.

वाचिकक्रियायाः वर्णरूपमेव लेखनम्। प्रारम्भे क्रमशः ध्वनिस्वरूपम्, अक्षरस्वरूपम्, उच्चारणस्वरूपं च सम्यक् ज्ञात्वा तत्पश्चात् लेखनाभ्यासः मौखिक-अभिव्यक्तिश्च करणीयः। ध्वनिलेखनमेव लेखनम्। भाषायाः सहजरूपं मौखिक-अभिव्यक्तिं, तत्प्रतिबिम्बरूपं लेखनम्।

**लिखित-मौखिक-अभिव्यक्तये: निम्नांकित उद्देश्यानि प्रयोजनानि च भवन्ति। यथा-**

1. भावः साक्षात् प्रकटीकृत्य लेखापनम्।
2. अक्षराः व्यवधानयुता यथा भवति तथा प्रयत्नकरणम्।
3. लेखनं रमणीयतया वर्णक्रमदोषरहितं यथा स्यात् तथा लेखापनम्।
4. वाक्यनिर्माणं भावश्चानायासेन लेखापनम्।
5. पदानि समुचितरीत्या लिखितुं अवकाशप्रकल्पनम्।
6. अप्रस्तुतविषयाः विना लेखनं यथा स्यात् तथा प्रयत्नकरणम्।
7. एकस्य केन्द्रभावं विप्रियमानानि वाक्यानि एकस्मिन्नेव परिच्छेदे स्थापनम्।
8. संक्षेपकरणे संक्षिप्य विस्तारकरणसमये विस्तृततया च लेखनम्।
9. पठितुं उत्साहजन्यं स्यात् लेखनम्।
10. सूक्तयः, प्रहेलिकाः, सुभाषितानि, राष्ट्रियाः, न्यायाश्च सन्दर्भानुगुणं लेखनम्।
11. विविधभाषागतचिह्नान्यनुसृत्य लेखनं स्यात्।
12. विषयाः क्रमपद्धत्या लिखिताः स्युः।
13. कथन-वर्णन-सर्जनात्मकशक्तीनां उपयुक्तकरा अंशाः लेखने स्युः।
14. विमर्शनात्मक-निर्णयात्मक-रचनाश्च स्युः।
15. कुलमत-सामरस्यं राष्ट्रिय-समैक्यता नैतिकभावनाश्च रचनायां स्युः।
16. पठनासक्तिः जायते।
17. भावाविष्कारणशक्तिः वर्धते।

**लिखित-मौखिक-अभिव्यक्तये: निम्नोक्ताः विधयः क्रमेण आश्रयितुं शक्यन्ते। यथा-**

**1. माण्टसरीविधिः—**माण्टसरीमहोदया लेखनशिक्षणे नेत्रयोः, कर्णयोः, हस्तयोश्च प्रशिक्षणे बलमादधाति। प्रथमं काष्ठे फलके वा निर्मितेषु वृहदक्षरेषु छात्रैः आँगुल्याः सञ्चालनस्य अभ्यासः कर्तव्यः। ततः परं तेषु एव अक्षरेषु पेन्सीललेखन्याःआवर्तनं कर्तव्यम्। एवं छात्राः अक्षराणां स्वरूपेण परिचिता सन्तः लेखनं शिक्षन्ते।

**2. रूपरेखानुकरणविधिः—**शिक्षकः फलके, पुस्तिकायां वा अक्षराणां रूपानुसारं बिन्दून्

स्थापयति। छात्राः पेन्सिललेखन्या एतान् बिन्दून् योजयन्तः लेखनं शिक्षन्ते। एवं पदानि, वाक्यानि च लिख्यन्ते। अधुना एतादृश्यः मुद्रिताः लेखनपुस्तिकाः आपणे उपलभ्यन्ते।

**3. स्वतन्त्रनुकरणविधिः**—शिक्षकः फलके, पुस्तिकायां वा अक्षराणि लिखति। छात्राः तानि अक्षराणि दृष्ट्वा तेषामधः तथैव लिखन्ति। उच्चमाध्यमिकस्तरे अयं विधिरुपयुज्यते।

**4. जेकाटाँट् विधिः**—अध्यापकः छात्रैः ज्ञातचरान् शब्दान् श्यामफलके लिखित्वा वाचयति। छात्रेभ्यः स्वपुस्तिकायां लिखितुमादिशति। छात्रैः लिखितान् शब्दान् संशोधयति। ततः परं पूर्वलिखितं दृष्ट्वा स्वयं तान् शब्दान् स्मृत्वा लिखितुं प्रेरयति। एवं शब्दानां वाक्यानाञ्च लेखनं शिक्ष्यते। सुलेखस्य अभ्यासाय निम्नोक्ताः त्रयः विधयः प्रधानतया उपयुज्यन्ते।

**अनुलेखः, प्रतिलेखः, श्रुतलेखश्च**

**1. अनुलेखः**—अनुकरणलेखनमित्यर्थः। अनुलेखशब्दे अनु इत्युपसर्गः अनुकरणार्थः। सुलेखस्याभ्यासाय अनुलेखः उत्तमं साधनं भवति। शिक्षकः श्यामपट्टे, छात्राणां पुस्तिकासु वा सुन्दराण्यक्षराणि लिखति। छात्राः तदनुसृत्य बहुवारं लिखन्ति।

**2. प्रतिलेखः**—पाठ्यपुस्तकात्, अन्यस्मात् पुस्तकाद्वा प्रतिदिनं कञ्चित् भागं स्वलेखनपुस्तिकायां लिखितुं शिक्षकेन बालकाः निर्दिश्यन्ते। बालकानां प्रतिलेखस्य संशोधनं कृत्वा शिक्षकः वामपार्श्वे रिक्तभागे आवश्यकाः सूचनाः लिखेत्। एवं अभ्यासेन बालकानां सुलेखः सिध्यति।

**3. श्रुतलेखः**—लेखनस्य अभ्यासाय श्रुतलेखोऽपि प्रमुखं साधनं भवति। श्रुतलेखद्वारा सुन्दरलेखनस्याभ्यासः, शीघ्रलेखनस्यापि अभ्यासः, शुद्धलेखनस्याभ्यासश्च भवन्ति। श्रुतलेखेन छात्राणां स्मरणशक्तिर्वर्धते। श्रुतलेखे शिक्षकः प्रथमं सम्पूर्णांशं शुद्धोच्चारणपूर्वकं पठित्वा बालकान् श्रावयेत्। द्वितीयवाचने लिखितुमादेष्टव्याः। बालकानां लेखनात् परं पुनः शिक्षकः तृतीयवाचनं संशोधनार्थं कुर्यात्। अन्ते शिक्षकः बालकानां श्रुतलेखं संशोध्य सामान्यदोषान् छात्राणां समक्षे स्पष्टीकुर्यात्।

एवमेतादृशेषु स्पष्टीकरणेषु यः निष्णातो भवति सः लेखनकौशले दक्षः भवेत्। एवमेव उत्तमः रचयिता, उत्तमलेखकः, कविश्च भवितुमर्हति।

ज्ञानम्–चतुर्विधकौशलानन्तरं ज्ञानम् इति लक्षिताधिगमस्य कृते प्राधान्यमस्ति। ज्ञानं पुनः त्रिधा विभक्तुं शक्यते।–1. विषयज्ञानम्, 2. भाषाज्ञानम्, 3. साहित्यज्ञानम्

**1. विषय ज्ञानम्ः—**

1. संस्कृतपाठ्यपुस्तकेषु विद्यमानाः पाठाः।
2. कविजीवनेतिहासादीनां विवरणम्,–व्यासः, वाल्मीकिः, भास, श्रीहर्ष इत्यादयः।
3. पाठ्यभाग–सम्बन्धानां पूर्वगाथानां विशेषाणाञ्च विवरणम्।

**2. भाषाज्ञानम्ः—**

1. नूतनपदानां अर्थज्ञानम्, अनुप्रयोगज्ञानसम्पादनञ्च।

2. संस्कृतशब्दस्य व्युत्पत्तिज्ञानम्।
3. संस्कृतपदानां प्राकृतपदानां देशीय पदानाञ्च ज्ञानम्।
4. विविधपदानां विविधप्रत्यययोजनेन अर्थेषु समागतानां परिवर्त्तनानां ज्ञापनम्।
5. कर्तरि प्रयोगः कर्मणि प्रयोगे कथं परिवर्तनं भवतीति तद् ज्ञान सम्पादनम्।
6. पदस्य विभिन्नार्थेषु सन्दर्भोचितार्थज्ञानसम्पादनम्।
7. सन्धि-समास-कारकादि-ज्ञान-सम्पादनम्।

**3. साहित्यज्ञानम्:—**

वाङ्मयमनन्तमस्ति, कस्मिन् ग्रन्थे किं लिखितम्? के च अंशा ग्राह्याः? के च न ग्राह्याः? विरामसमये किं करणीयम्? इत्यादीनां प्रश्नानां कृते समाधानमस्ति साहित्यज्ञान-सम्पादनमेवेति। वाङ्मये: रुचिः सम्पादनीया। लक्ष्य साधने अधोनिर्दिष्यानि स्पष्टीकरणानि आवश्यकानि सन्ति। यथा-

1. साहित्यग्रन्थानां विस्तृतपठनम्।
2. साहित्यस्पर्धासु भागग्रहणम्।
3. पाठ्यमानस्य पाठस्य आद्यन्तं कथा-सन्दर्भ-ज्ञापनम्।
4. कवितारचनायां दक्षता सम्पादनम्।
5. साहित्य-सभासु ज्ञानसम्पादनम्।
6. प्रसिद्धकवीनां ग्रन्थपठने आसक्तिः संवर्धनम्।
7. कवितासु विद्यमानानां रसभेदानां शैलीभेदानाञ्च ज्ञानसम्पादनम्।
8. संस्कृति-सम्प्रदाय-ज्ञानं सम्पाद्य तयोर्विषये गौरवभावप्रदर्शनम्।
9. इतर भाषासु विद्यमानं साहित्यज्ञानसम्पादनम्।
10. कविसम्मेलने भागग्रहणम्।
11. निबन्धा, कथा, रूपक, पद्यादि-लेखने दक्षतोत्पादनम्।

**( घ ) शाब्दिक-व्यावहारिक-सांस्कृतिक-अभिव्यक्तिः।**

Cultural expression - word oriented, Action oriented.

लक्षिताधिगमविशेषाः अर्थात् लक्ष्यसाधनेषु अष्ट-ज्ञानसम्बन्धानि सोपानानि ज्ञानमपि आवश्यकम् वर्त्तते। ते अधोलिखिता:—

**1. व्याकरणज्ञानम्:—**भाषाज्ञानानि व्याकरणसम्बद्धतत्त्वानि अवधेयानि। व्याकरणं भाषायाः संस्कारं सम्पादयति। प्रकृत-प्रत्ययविभागेन शब्दानां व्युत्पत्तिरत्र ज्ञायते। बृहद् रूपेण वर्ण, शब्द, वाक्य, लिङ्ग विवेचनमेवं च सन्धि-समास-कारक-विभक्ति-प्रत्ययादि-ज्ञानमावश्यकं वर्त्तते।

**2. आध्यात्मिकज्ञानम्:—**संस्कृतभाषा-आध्यात्मिकता च अनयोर्मध्ये परस्परं घनिष्ठ-सम्बन्धोऽस्ति। आध्यात्मिकज्ञानसम्पादनाय संस्कृतसाहित्यादिग्रन्थान् अध्येतव्याः।

**3. आनन्दानुभूतिः**—छात्रेषु आनन्दानुभूतिसम्पादनम्। रमणीयान् श्लोकान् गद्यखण्डान् च कण्ठस्थीकरणे प्रेरणादानम्।

**4. रसानुभूतिः**—काव्यजगत् रसमयमस्ति, गद्यपद्येषु ये रसाः आगच्छन्ति तेषां रसानुभूतिरावश्यकी, रसानुभूतिर्नास्ति चेत् विशिष्टसंस्कृत श्लोकपठनं व्यर्थमेव काव्य-रस-अलंकार-ध्वनिज्ञान-शैली-भेदादि-ज्ञानसम्पादनम्।

**5. अवगाहनं**—भाषायामवगाहनं इति लक्षिताधिगमविशेषाः प्रधानोऽस्ति। अध्याप्यमानमधीतञ्च सर्वमवगाहनयुतं यदा भवति तदैव पाठाः स्पष्टाः भवेयुः। सम्बद्ध-उदाहरणानि साम्यभेदसारांशग्रहणम् लक्ष्यलक्षणयोस्समन्वयादि-ज्ञानसम्पादनम्।

**6. भाषान्तरीकरणसामर्थ्यम्ः**—अद्यतनेषु दिनेषु छात्राः अनेकभाषाणामध्ययनं कुर्वन्ति। संस्कृतछात्रास्तु इतरछात्राणामपेक्षया एकां भाषां अतिरिक्ततयाध्ययनं कुर्वन्ति। एतादृशेषु समयेषु कदाचित् प्रयत्नेन द्वयोर्भाषयोर्मध्ये अनुवादोऽपि करणीयो भवति। प्रत्येकभाषायाः मूलभावस्य च पूर्णतः संरक्षणम्।

**7. भाषेतरांशानां ज्ञानम्ः**—संस्कृते गद्य-पद्य-रूपक- व्याकरण-सम्बद्धाः पाठाः आसन्। भाषासु छात्राणां सर्वाङ्गीणविकासाय भाषेतरांशा योजिताः। सर्वाङ्गीणविकास-सम्पादनम्। आधुनिकविज्ञान प्राविधिकांशयोः मौलिकस्वरूपबोधनम्।

**8. संस्कृति सम्प्रदाय-ज्ञानम्ः**—संस्कृतिः सम्प्रदायःएतौ द्वौ प्रत्येकभाषायाञ्च स्तः। संस्कृतविषये एतयोः द्वयोः महत् प्रामुख्यमस्ति। संस्कृतिमूलं संस्कृतम् इति।

## (ङ) कौशलात्मक-ज्ञानम्।
## Understanding of Skills

मूलतः विचारग्रहणं विचाराभिव्यक्तिरित्येतत् द्वयं कस्याऽपि भाषायाः शिक्षणस्य प्रधानमुद्देश्यं भवति। भाषितस्य श्रवणेन, लिखितस्य वाचनेन, विचार ग्रहणं सिध्यति। तथा भाषणेन लेखनेन च विचाराभिव्यक्तिः क्रियते। एवमेतेषां चतुर्णामुद्देश्यानां साधनाय विभिन्नाः क्रियाः भवन्ति विभिन्नेषु स्तरेषु। स्तरानुगुणमुद्देश्यानां विवेचनमत्र विचारितम्।

भाषाधिगमस्य स्वाभाविकःमनोवैज्ञानिकश्च क्रमः वर्तते-श्रवणं, भाषणं पठनं, लेखनञ्च। छात्रान् विद्यालयस्य विविधकार्यक्रमैः परिचितान् कृत्वा तेषां रुचिःविकासनीया येन छात्राः समावस्थायाः छात्रैः सह परस्परं कार्यकरणं निर्देशानां पालनञ्च शिक्षेरन्। यथा-

1. श ष स ज्ञ इति वर्णानामुच्चारणे ध्वनि भेदानुस्मरणम्।
2. क्ष क्श स्ट श्च च्च च्छ सदृश संयुक्ताक्षराणामुच्चारणे ध्वनिभेद स्मरणम्।
3. भाषणं सन्दर्भोचितं यथा स्यात् तथा सम्पादनम्।
4. गद्यपद्ययोः पठने भेदज्ञापनम्।
5. विना सभाकम्पं सधैर्य भाषयितुं अवकाश-प्रकल्पनम्।
6. विरामार्धविरामयोः भेदश्रावणम्।

7. समवेगेन भाषणं स्यात्।
8. ध्वनिलिप्योः स्पष्टः सम्बन्धः यथा स्यात् तथा पठनम्।
9. अर्थावगाहनपूर्वकं पठनाय अवकाश-प्रकल्पनम्।
10. अविच्छिन्नं भाषणं यथास्यात् तथा सम्पादनम्।
11. गद्यपद्ययोः गत्यनुगुणं भाषणम्।
12. रसानुगुणं भाषणे आरोहावरोह-क्रमसम्पादनम्।
13. भावानुगुणं समुचितभाषायाः उपयोजनम्।
14. पर्याप्तकण्ठस्वरेण भाषणसम्पादनम्।
15. आदिमध्यान्तारनुगुणं भाषण कौशलसम्पादनम्।
16. श्रोतृणां यथा भाव आगतो भवति तथा भाषणदाने प्रेरणादानम्।
17. विरामार्धविराम-अनुगुणं भाषणम्।

**चतुर्विधिकौशलानां परस्परसम्बन्धः**

एतानि चत्वारि कौशलानि परस्पराश्रितानि। भावविनिमयात्मकस्य भाषायाः प्रधानोद्देश्यस्य श्रवण-भाषण-पठन-लेखनानि मूलभूतानि। श्रवणात् भाषणं, भाषणात् पठनं, पठनात् लेखनं कठिनमिति विमर्शकाणामभिप्रायः। लेखनस्य पठनम् आधारम्। श्रवणस्य-भाषणपठन-लेखनानि। भाषणस्य श्रवणपठनलेखनानि। पठनस्य-श्रवणभाषण लेखनानि। लेखनस्य-श्रवणभाषणपठनानि आधारभूतानि।

अतः कौशलचतुष्कमेतत् अन्तस्सम्बद्धम्, परस्पराश्रितं च वर्तते। शिक्षकः, छात्राणां कृते चतुर्विधकौशलानां प्राधान्यम्, आवश्यकतां च संबोध्य तान् चतुर्ष्वपि एतेषु कौशलेषु समकुशलतां सम्पादने प्रेरयेत्।

## (च) कौशलाणामनुप्रयोगः।

## Application of Skills

शिक्षकःशिक्षार्थी पाठ्यवस्तु चेति। अध्यापकः शिक्षार्थी पाठ्यवस्तुनः ज्ञानं प्रददाति। शिक्षक-छात्रयोःमध्ये अन्तः क्रिया भवति, यया छात्रः अधिगच्छति। अध्यापकः अस्य अधिगमस्य कृतं नूतनवैज्ञानिकविधीनाम् उपयोगं करोति। विभिन्नकौशलानाम् आधारेण छात्रान् पाठयति। कौशलानां माध्यमेन ज्ञानसम्पादनं व्यवस्थितं च भवति। कौशले कुशलता भवति पठनशिक्षणक्षेत्रे तस्यशिक्षणस्य महत्त्वं अधिकं वर्तते यस्य सम्पादनं विभिन्नकौशलैः क्रियते। एतेः कौशलैः शिक्षणस्य विकासः भवति। कौशलसम्पन्नाध्यापकः छात्रेषु कुशलताम् उत्पादयितुं समर्थो भवति। शिक्षणकोशलं सा विशिष्यनुदेशनप्रक्रिया भवति या अध्यापकेन निर्दिष्टोद्देश्यानां प्राप्त्यर्थं कक्षाशिक्षणे प्रयुज्यते। शिक्षणकौशलार्थं अध्यापकानां कृते शिक्षणबिन्दूनां व्यवस्थितनिर्धारणेन साकं विचारप्रकटनं छात्राणां पूर्वज्ञानमावश्यकं भवति।

**यथा-प्रमुखानि कौशलानि–**

**1. प्रश्नोत्तरकौशलम्**–अध्यापन-प्रक्रियायां प्रश्नानामुत्तरानाञ्च विशिष्टस्थानं भवति। प्रश्नैः अध्यापकःविषयवस्तुस्पष्टीकरणस्य प्रयासं करोति। प्रश्नेः एव अध्यापने बालकाणां ग्राह्यतायाः अवबोधनस्य च ज्ञानं भवितुमर्हति। अध्यापनस्य साफल्यं न्यूनाधिकरूपेण प्रश्नकरणस्य कुशलतायाः उपरि निर्भरं भवति। स्मृत्यात्मकप्रश्नाः, विचारात्मकप्रश्नाः, निबन्धात्मकप्रश्नाः, लघूत्तरात्मकप्रश्नाः, वस्तुनिष्ठप्रश्नाःइति प्रमुख-प्रश्नानां प्रकाराणि।

**2. व्याख्याकौशलम्**–शिष्याः श्रवण-मनन-निदिध्यासनं च कृत्वा स्वशंकानां समाधानं कुर्वन्ति। व्याख्यानकौशलं प्रायः सर्वेष्वपि पाठेषु प्रयुज्यते।

**3. दृष्टान्तकौशलम्**–अध्यापनप्रक्रियायामुदाहरणसहितदृष्यन्तकौशलस्य महत्त्वपूर्णं स्थानं वर्तते। प्रासंगिकदृष्यान्तः, तुलनात्मकदृष्यान्तः, रोचकदृष्यान्तश्च प्रमुखाः।

### (छ) लेखनकौशलस्य सिद्धान्तः–

मात्रा, अनुस्वारः, मकारः, हस्वः, दीर्घः, विसर्गः, ऊष्म, अल्पप्राण,
महाप्राण, यकार, जकार, वकार, इत्यादयः।

Rules or principles of writing skills–Matra, Anuswara, Makara, Hraswa, Dirgha, Visarga, Ooshmana, Alpaprana, Mahaprana, Yakara-Jakara, Vakara-Bakara etc.

प्रारम्भे ध्वनिस्वरूपम्, अक्षरस्वरूपम्, उच्चारणस्वरूपं च सम्यक् ज्ञात्वा तत्पश्चात् लेखनाभ्यासः करणीयः। भाषाकौशलेषु कठिनतमं कौशलं लेखनम्। पठने लिपिस्वरूपं विज्ञाय उच्चारयितुं शक्यते। किन्तु लेखने आभ्यां द्वाभ्यां क्रियाभ्यां सह आकृतीनामनुसारं हस्तयोः प्रसरणं, सहनेन सावधानेन तत्तदाकृतीनां लेखनं च विधेयं भवति।

**(क) मात्रा**

वर्णान् पंचसु विभागेषु–स्वर, काल, स्थान, बाह्याभ्यन्तरप्रयत्नौ प्रतिपादयति। येषु कालतः मात्राज्ञानमेव महत्त्वपूर्णाः वर्त्तते। ह्रस्व-दीर्घ-प्लुत इति विवेचनमेव मात्राख्ये प्रतिष्ठितः। अत्र–

**एक मात्रे भवेत् ह्रस्वो द्विमात्रे दीर्घ उच्यते,**
**त्रिमात्रस्तु प्लुतो ज्ञेयो व्यंजनं चार्ध मात्रिकम्।**

एतेन स्पष्टं भवति यत् वर्णानां स्वरोच्चारण कालो लक्ष्यते तथा च मात्रिक-द्विमात्रिक-त्रिमात्रिकाणां क्रमिक ह्रस्व-दीर्घ-प्लुतानां ज्ञानं भवति। निषेधकालपरिमित-अकारतः लृकार पर्यन्तं स्वराः ह्रस्व संज्ञकं भवति। तैः द्विगुणित कालपरिमित आकारतः औकार पर्यन्तं दीर्घसंज्ञकं भवति, एवं निषेधाकालत्रय परिमित प्लुत संज्ञको भवति। मात्रोच्चारणविषये पाणिनीयशिक्षायाम्–

**चाषस्तु वदने मात्रां द्विमात्रं चैव वायसः,**
**शिखी रौति त्रिमात्रंतु नकुलस्त्वर्द्ध मात्रकम्।**

अर्थात् नीलकण्ठनामकः पक्षिविशेषः एक मात्रिकं ह्रस्वनादं करोति, काकः द्विमात्रिकं दीर्घनादं करोति, मयूरः त्रिमात्रिकं प्लुतनादं करोति, नकुलः अर्द्धमात्रिकं नादं करोति। याज्ञवल्क्यशिक्षायाम्–मात्रा काल निरूपणं तु निषेध परिमित विद्युत्–कान्ति रूपेण कृतमस्ति। यथा–

**निषेधेमात्राकालःस्यात् विद्युत्कालस्तथा परे,**
**अक्षरात्तुल्ययोगाच्च मति स्यात् सोमशर्मणः।।**

सूर्यस्य रश्मिषु दृश्यमान धूलिकणानां स्पन्दने व्यतीतो समयः अणुमात्रारूपेण चर्चितः, येषां चतुर्गुणमात्राकालः भवति। यथा–''सूर्य रश्मि प्रतीकाशात्कणिका यत्र दृश्यते। अणुत्वस्य तु सा मात्रा मात्रा च चतुरार्णवा'।। एवं च अत्र एकमात्रिक वर्णस्योच्चारणे मने सम्भावति अभिव्यक्त्यां एक अणुमात्र, कण्ठे द्वयणुमात्रा, जिह्वाग्रे त्रयणुमात्रा, मुखातूबहिर्गमने चतुः अणुमात्र अपेक्षिताभवति। यथा–

**मानसं चाणबं विद्यात् कण्ठे विद्यात् द्विराणवम्,**
**त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं बिदुः।।**

व्यासशिक्षायाम्–अंगुलीस्फोटनं यावान् तावान् कालस्तु मात्रिकः मन्यन्ते। अधुना समये तु एक सेंकेण्डं एक मात्रिकं, द्वि सेंकेण्डं द्विमात्रिकं, त्रिसेंकेण्डं त्रिमात्रिकं रूपेण व्यवहृतज्ञानमेव अनुसरणीयम्। अमात्रो एक मात्रो वा ह्रस्वः, द्वे दीर्घो द्विस्तावान् दीर्घः द्विमात्रे दीर्घः द्वेदीर्घ इति, तिस्रः प्लुत उच्यते स्वरः त्रिः प्लुतः, ह्रस्वं दीर्घं तथा बृद्धमभिगीतं तु समयाः। वैदिकाभरणकारस्तुः—''शरादिबद् दूरगामित्वात् प्लुत इत्युच्यते''। महर्षिपाणिनिमहोदयस्तु ''ऊकालो अच् ह्रस्व–दीर्घ– प्लुतः''–उश्च उ2श्च उ3श्च वः कालो इव कालो यस्य सो अच् क्रमाद् ह्रस्व– दीर्घ–प्लुत संज्ञः स्यात्। अत्र कालशब्दो मात्राकाल सदृशे लाक्षणिकः। कुक्कुटस्य कु कू कू3 शब्दे क्रमशः एकमात्रा ह्रस्वः, द्विमात्रा दीर्घः, त्रिमात्राप्लुतानां स्पष्ट आरोहस्य प्रतीतो भवति। स्वराणां त्रिप्रकाराः— ह्रस्व–दीर्घ–प्लुत रूपैः भवन्ति। स्वराणामुच्चारणेषु यदि एक मात्रायाः समये व्यतीते सति तां ह्रस्वः—अ–द्विमात्रायाः समये व्यतीते सति तान् दीर्घ–आ– एवञ्च त्रिमात्रायाः समये व्यतीते सति तान् प्लुत–आ3। त्रिप्रकारकाः स्वराः पुनः उदात्तानुदात्तस्वरितभेदेषु विभाजिताः भवन्ति। अन्ते एतेषां सर्वेप्रकारकाणां स्वराणां अनुनासिक–अननुनासिक द्वौ भेदौ भवतः। अनुनासिकं तं स्वरम् कथ्यते–यस्योच्चारणे नासिक्याः सहायता गृह्यते। यथा–एँ, ऑ, तथाच यस्योच्चारणे नासिक्याः सहायता न गृह्यते तान् स्वरान् अननुनासिकः कथ्यन्ते, यथा–ए आ।

**( ख ) अनुस्वारः**

**अनुस्वारः**—स्वरम् अनु पश्चात् भवतीत्यनुस्वारः, स्वरान् अकारादीन् अनुलक्ष्यीकृत्य प्रवर्तत इत्यन्वर्थः संज्ञात्वं प्राप्तः अनुस्वारः। अनुस्वारः शिरोबिन्दुः अनुस्वारयमाश्चनासिका स्थानमुच्यते। ऋग्वेदप्रातिशाख्यानुसारेण–अनुस्वारो व्यंजनः वा स्वरो वा, सूत्रकारानुसारेण–

"सत्यमेतद्यदि नामानुस्वारस्य स्वरूपं न कथितं स्यात्, तस्मात् स्वरव्यंजनातिरिक्तमन्य द्वर्णान्तरमेतदित्येताख्योपनपरमेवैतत्सूत्रमितिसिद्धान्तितम्"। अतः अनुस्वारः आगम रूपे यथा–यशांसि, पयांसि, अनागमरूपे यथा–आक्रंस्यते।

**( ग ) मकारः**

ञमङणनानां नासिका च। एते अनुनासिकाः वर्णाः सन्ति।आभ्यन्तर प्रयत्ने तु स्पर्शस्थाने स्पृष्टप्रयत्नः भवति। वाह्यप्रयत्ने तु–अल्पप्राण संवाराः, नादाः, घोषाश्च।

**( घ ) ह्रस्वः**

"**एक मात्रे भवेत् ह्रस्वो**" नीलकण्ठनामकः पक्षिविशेषः एक मात्रिकं ह्रस्वनादं करोति, निषेधकालपरिमित–अकारतः लृकार पर्यन्तं स्वराः ह्रस्व संज्ञकं भवति। अधुना समये तु एक सेंकेण्डं एक मात्रिकम्।

**( ङ ) दीर्घः**

**द्विमात्रे दीर्घ उच्यते**, द्विगुणित कालपरिमित आकारतः औकार पर्यन्तं दीर्घसंज्ञकं भवति,, द्वि सेंकेण्डं द्विमात्रिकं,

**( च ) विसर्गः**

पार्श्वे बिन्दुः विसर्गकः, अघोष हकार एव विसर्जनीयः स्यात्, पूर्वान्त संस्थानो विसर्जनीयः। विसर्गस्य लोकप्रसिद्धं लक्षणं यथा–

"श्रृंगवत् बालवत्सस्य कुमारीस्तनयुग्मवत्,
नेत्रवत्कृष्णसर्पस्य सः विसर्गः उदीरितः"।

इति प्रातिशाख्ये उदाहृतः। प्रकृतश्लोके पंजिकाभाष्यकारानुसारेण–"अनुस्वारो विसर्गश्चस्वरात्परौ तु तिष्ठतः, अनुस्वारोशिरोबिन्दुः पार्श्वे बिन्दुः विसर्गकः"। आधुनिकध्वनि वैज्ञानिकाः हकारस्य द्वौ रूपौ मन्यन्ते। प्रथम अघोषः, द्वितीयः संघोषः तयोरघोषं हकारं एव विसर्जनीयः भवति। तैत्तिरीय प्रातिशाख्यानुसारेण अयं विसर्जनीयः स्व पूर्ववर्त्ती स्वरस्यान्तभागस्य सादृश्यमेव उच्चारणस्थानेन उच्चारितो भवति। पूर्वान्तसंस्थानो विसर्जनीयः। ऋक् प्रातिशाख्ये विसर्जनीयं उष्म ध्वनिः कथ्यतें।

**( छ ) ऊष्म**- ऊष्मः चत्वारः, श ष स ह वर्तते।

**( ज ) अल्पप्राण**

वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः। अर्थात् वर्गाणां प्रथम–क् च् ट् त् प् तृतीय–ग् ज् ड् द् ब् पंचम–ङ् ञ् ण् न् म् एवं यण्- य् व् र् ल् एते अल्पप्राणाः प्रयत्नाःसन्ति।

**( झ ) महाप्राण**–

वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। वर्गाणां द्वितीयवर्णाः—ख् छ् ठ् थ् फ् चतुर्थवर्णाः—घ् झ् ढ् ध् भ् तथाच शलः—श् ष् स् ह् एते महाप्राणाः प्रयत्नाः सन्ति।

**( ञ ) यकार**

यण् प्रत्याहारस्य वर्णः। तालु स्थानीयः। अन्तःस्थ स्थाने ईषत् स्पृष्टः आभ्यन्तरप्रयत्नः, बाह्ये तु-अल्पप्राण-संवाराः, नादाः, घोषाः।

**( ट ) जकार**

तालुस्थानीयजकारस्य स्पृष्टआभ्यन्तरप्रयत्ने, बाह्ये तु महाप्राण, संवाराः, नादाः, घोषाः भवति।

**( ठ ) वकार**

वकारस्य दन्तोष्ठम्। आभ्यन्तरे-स्पृष्टः, बाह्ये तु अल्पप्राण, संवाराः, नादाः, घोषाः भवति।

**( ज ) भाषात्मक-विकासे-सहायक-पाठ्यसहगामीक्रिया**

वाद-विवादः, सद्यःभाषणम्, प्रतियोगिता, अन्त्याक्षरी, भाषात्मकक्रीडा, निबन्धलेखनं, विचारगोष्ठी, कथा-लेखनम्, समस्यापूर्तिः, गानम्, चुटकूला(प्रहशनम्), कथाकथनम्, प्रदर्शनी, क्विजप्रतियोगिता, विद्यालयपत्रिका।

Co-curricular Activities in developing language skills-Debate, Elocution, Competition, Antyakshari, Language Game, Essay Writing, Seminar, Story Writing, Samasyapoorti, singing, Jokes, Story-telling, Exhibition, Quiz and School Magazine.

संस्कृतशिक्षणं रुचिकरं, सुग्राह्यम्, आकर्षकञ्च कारयितुं दृश्यश्रव्यसाधनैः सह पाठ्य-सहगामिक्रियाणामपि महत्त्वपूर्णं स्थानमस्ति। पाठ्यपुस्तकेन सह कक्षाकक्षतः बहिः संचालितान् गतिविधीन् पाठ्यसहगामीक्रिया उच्यते। आभिःक्रियाभिःबालकस्य सर्वांगीण- विकासो भवति। पाठ्येत्तरक्रियाः अद्य पाठ्यसहगामिक्रिया इति नाम्ना ज्ञायते तथा इमाः पाठ्यक्रमस्य अभिन्नाङ्गत्वेन स्वीक्रियन्ते।

**आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया।**
**पादं सब्रह्मचारिभ्यः पादं कालक्रमेण हि।।**

आचार्यः 25% ज्ञानं वितरति। 25%ज्ञानं छात्रः स्वमेधया जानीयात्। 25% ज्ञानं सब्रह्मचारिभ्यः प्राप्नोति। 25% ज्ञानं कालक्रमेण स्वाध्यायेन प्राप्नुवन्ति।

**पाठ्यक्रमसहगामिक्रियाणां महत्त्वम्-**

**1. शारीरिकविकासे सहायकक्रिया**-विभिन्नशारीरिकक्रियाभिः बालकानां शारीरिक-विकासो भवति।

**2. वैयक्तिक-आवश्यकतानां पूर्त्तौ सहायकक्रियाः**—बालकान् आत्माभिव्यक्तेः आत्मानं, अन्यान् वा अभिज्ञानस्य स्वकीयाःरुचयः विकसितकरणस्य, स्वकीयानि कार्याणि नियन्त्रितकरणस्य च अवसरः प्राप्तं भवति।

**3. सामाजिकावश्यकतानां पूर्त्तौ सहायकक्रिया**-सामाजिकनियमानां सदाचारस्य च स्वीकृताङ्गानाम् अधिगमे बहुसाहाय्यानि भवन्ति। समाजसेवा, क्लव, समाजसेवायोजन, सहकारीक्रिया, स्काउटिंग, गाइडिंग, श्रमदानादिभिः, क्रियाभिःछात्राः मिथः व्यवहारकरणम् अधिगम्यते। छात्रेषु ''वसुधैव कुटुम्वकम्'' भावनायाः विकासो भवति।

**4. मनोवैानिकावश्यकतानां पूर्त्तौ सहायकक्रिया**-छात्रेषु किशोरावस्थायाम् अतिरिक्तां शक्तिः भवति। आभिः क्रियाभिः तेषाम् अतिरिक्तशक्ति अन्येषु क्रियाकलापेषु स्थीयते, याः छात्राणां व्यक्तिगतविकासे सहायको भवन्ति।

**5. नैतिकगुणानां विकासः**—एताभिः क्रियाभिश्छात्राः सेवा-सहयोग-सहानुभूति-सत्यता-न्यायप्रियता-धैर्य-दृढता-आज्ञापालनादिगुणानां विकासो भवति। छात्रेभ्यः नेतिक-मूल्यानाम् आत्मसात्करणस्य अवसरो मिलति।

**6. नागरिकतायाः प्रशिक्षणम्**-छात्रेषु पाठ्यसहगामीक्रियाभिःसुनागरिकतायाः विकासो भवति।

**7. विशिष्टरुचीनां विकासः**—पाठ्यसहगामीक्रियाभिः छात्रेषु विभिन्नविषयान् प्रति रुचीनां विकासो क्रियते।

**8. अवकाशक्षणानां सदुपयोगः**—पाठ्यसहगामीक्रियाभिः छात्राः अवकाशकाले समयस्य सदुपयोगः कुर्वन्ति।

**9. अनुशासनस्थापने सहायिकाः**—पाठ्यसहगामीक्रियाभिः छात्रेषु नेतृत्त्वभावनायाः उत्तरदायित्वभावनायाश्च विकासो भवति। विद्यालये अनुशासनस्थापने सारल्यं भवति। सांस्कृतिकविकासः, राजनैतिकविकासः, धार्मिकविकासश्च पाठ्यसहगामीक्रियाभिः भवन्ति।

**संस्कृतशिक्षणे पाठ्यसहगामीक्रियाणाम् उद्देश्यानि-**

1. छात्राणां शब्दकोषे अभिवर्द्धनम्।
2. छात्रेषु कल्पना-तर्क-निरीक्षणशक्तीनां विकासनम्।
3. छात्रेषु आत्म-विश्वासोत्पादनकरणम्।
4. संस्कृतसाहित्यं प्रति रुच्युत्पादनम्।
5. छात्रेषु अभिव्यक्तिकौशलस्य विकासः।
6. छात्रेषु काव्यप्रेमस्य भवनायाः जागृतकरणम्।
7. नैतिकमूल्यानां संवर्धनम्।
8. आत्ममूल्याङ्कनाय अवसरं दत्वा स्वकीयं परिकारं कर्तुं प्रेरणीयः।
9. भाषण-लेखन-वाचन-श्रवण-पठन-लेखनकौशलस्य विकासः।
10. छात्राः शुद्धोच्चारणाय प्रेरणीयाः।
11. छात्रेषु सृजनात्मकशक्तेः उन्मेषकरणम्।

## पाठ्यक्रमसहगामिक्रियाणां साहित्यिकगतिविधयः–

**1. वादविवादः** (Debate)—कस्या अपि भाषायाःअध्यापनसमये छात्राणाम् अभिव्यक्तेः विकासनमेव सर्वप्रथमुद्देश्यं भवति। वादविवादेन छात्रः स्वविचारान् तर्कान् च समुचित-शैल्यां प्रकटयितुं समर्थो भवति। तस्य मौखिकाभिव्यक्तिः सशक्ता भवति श्रवणकौशलस्य विकासो भवति। अनेन छात्राणां चिन्तन-तर्क-निरीक्षण-स्मरण-संश्लेषण-विश्लेषणादयः प्रशिक्ष्यन्ते। तेषां शब्दकोशे वृद्धिर्भवति। वादविवादस्य कृते विषयाणां चयनं बालकाणां शारीरिक-मानसिकस्तरानुसारेण करणीयम्। विषयं निर्धारयित्वा अभ्यासस्य कृते पर्याप्तसमयः प्रदानीयः। विषयस्य पक्षविपक्षयोः विचारान् प्रकटयितुं छात्राः प्रेरणीयाः। वादविवादे एकः पक्षः अपरपक्षस्य मतं खण्डयितुं प्रयासं करोति। कुशलनिर्णायकैः विषयवस्तुप्रतिपादनशैली भाषादीनामाधारेण मूल्याङ्कनं क्रियते।

**2. सद्यःभाषणम्**-(Elocution)—'भाषणम्' एका कला वर्तते। अनेन वक्ता क्रमवद्धतया सुसम्बद्धतया च स्वविचारान् प्रकटयितुं सक्षमो भवति तस्य मौखिक- अभिव्यक्तिः सशक्ता भवति। प्राथमिक-माध्यमिकस्तरयोः छात्राः स्वरुच्यनुसारं विषयमधिकृत्य भाषणानि सज्जीकुर्वन्ति सहर्षेण वदन्ति च। संस्कृतविदुषः विद्यालयेषु आमन्त्र्य बालकाणां स्तरानुसारं सरलसंस्कृते विविध विषयेषु व्याख्यानमाला आयोजनीयाः। सरलसंस्कृते सद्यःभाषणं श्रुत्वा छात्रेषु श्रवणकौशलस्य विकासो भविष्यति। स्वविद्यालये सम्भाषणशिविराणामयोजनं करणीयम्। छात्रेभ्यः भाषणविषयःपूर्वं निर्धार्य अभ्यासाय समयं दत्त्वा निश्चितदिवसे सद्यःभाषणस्य आयोजनं करणीयम्। छात्रैः भाषणरटनापेक्षया स्वभाषायामभिव्यञ्जनीयम्। अनेन मौलिक-अभिव्यक्तेः विकासो भवति।

**3. प्रतियोगिता** (Competition)—विद्यालये राष्ट्रीय-अन्तर्राष्ट्रीय-(National-International) महत्त्वस्य विषयेषु निबन्ध-वाद-विवाद-सामान्यज्ञान-प्रतियोगिताः आयोजितं कर्तुं शक्यते। प्रतियोगिताभिः छात्राणां भाषणशक्तेः तर्कशक्तेः मानसिकशक्तेश्च विकासो भवति।

**4. अन्त्याक्षरी**-(Antyakdhari)—संस्कृतक्षेत्रे एषा क्रीडा अतिप्राचीनकालादारम्भ प्रचलति। इदानीमपि संस्कृतविद्यालयेषु, महाविद्यालयेषु, विश्वविद्यालयेषु अखिलभारतीयस्तरे च प्रचलत्येव। एषा क्रीडा न केवलं छात्राणाम् अपि च अध्यापकानां विदुषाञ्च रमणीया मनोहरा च अस्ति। प्रारम्भादेव अध्यापकाः छात्रान् संस्कृतगीत-श्लोक-सुभाषितादीनि कण्ठस्थीकरणाय प्रेरयति। विद्वानध्यापकः अस्याः सञ्चालनं करोति। स आदौ एकं छात्रमुत्थाप्य एकं श्लोकं वदतु इति निर्दिशति। तस्य श्लोकस्य अन्तिमपादे विद्यमानमन्तिमवर्णं स्वीकृत्य अन्यस्मिन् वर्गे विद्यमानः एकः छात्रः वदति। अनन्तरमन्यस्मिन् वर्गे विद्यमानं अन्तिमवर्णं स्वीकृत्य श्लोकं वदति। अनया क्रिडया छात्रेषु संस्कृतसाहित्यं प्रति रुचेः वृद्धिर्भवति।

**5. भाषात्मकक्रीडा** (Language Game)—वर्तमानकाले शिक्षाध्यापने क्रीडा अपि प्रमुखं स्थानं निर्वहति। क्रीडाभिः छात्रजीवने समूलतया परिवर्तनमानेतुं शक्यते। भाषाक्षेत्रेऽपि

अनन्त्यकथारचनम्, अपूर्णकथापूरनम्, इत्यादीनां क्रीडानां माध्यमेन भाषणाभ्यास: कारयितुं शक्यते। संस्कृतप्रश्नोत्तरी-संस्कृतसाहित्यस्य पूर्वनिर्धारितं पक्षं स्वीकृत्य शिक्षक: छात्राणां समक्षं प्रश्नान् प्रस्तौति। यथा-कालिदासेन कति नाटकानि रचितानि?त्रीणि। अभिज्ञान- शाकुन्तले कति पात्राणि सन्ति? द्वादश। 'दीपशिखा'पदेन सह क: कवि: प्रसिद्ध:? कालिदास:, इत्यादय:।

**6. निबन्धलेखनम्** (Essay writing)—निबन्धलेखनस्य प्रतियोगिता आयोजनं कृत्वापि संस्कृताध्यापनं रुचिकरं कर्तुं शक्यते। अनेन छात्रेषु स्वाध्यायप्रवृत्ति:, पठनपूर्वक- अवगमनस्य योग्यता, लिखिताभिव्यक्ते: क्षमतायाश्च विकासो भवति। निबन्धशीर्षकाणां चयनं छात्राणां स्तरानुसारमेव करणीयम्।

**7. विचारगोष्ठी**-(Seminar)—छात्राणां तर्कशक्ते: वाचनशक्ते: विकासाय विद्यालयेषु विचारगोष्ठीनाम् आयोजनं क्रियते। अस्यां छात्राणां कृते विचारविनिमयस्य अवसरो भवति। छात्रा: शङ्कानां समाधानाय परस्परं प्रश्नान् पृच्छन्ति। आमन्त्रितविदुषां विचारै: लाभान्विता अपि भवन्ति।

**8. कथालेखनम्** (Story writing)—श्रवणकौशलस्य विकासाय अध्यापक: कथा: श्रावयेत् इति महत्त्वपूर्णमस्ति। भाषणाभ्यासनिमित्तं अध्यापकेन बालकानां मुखात् कथा: वाचनीया:। अध्यापकेण संस्कृते कथाचित्राणां साहय्येन लघुवाक्येषु हितोपदेश- पञ्चतन्त्रेत्यादय: कथा: प्रस्तोतव्या:। कथावाचनस्य अभ्यासोऽपि कारयितव्या:। उचस्तरस्य छात्रा: कथालेखनाय अपि प्रेरणीया:।

**9. समस्यापूर्ति:**—(Samasyapoorti)—प्राचीनकाले शास्त्रार्थ: तर्कवितर्कै: सह कवीनां प्रतिभाया: निकष: समस्यापूर्तिरपि आसीत्। अस्यां क्रीडायां छात्रेभ्य: कामपि समस्यां दत्त्वा परीक्षक: श्लोकरचनाया: कृते प्रेर्यते। तथा च कस्यापि श्लोकस्य चरणद्वयं दत्त्वा अन्तिमचरणद्वयस्य पूर्तिकरणाय आदिशति। एषा क्रीडा छात्रेषु काव्यसर्जनयोग्यताया: विकासं करोति। क्रीडायां समस्यापूर्ति कुर्वन्त: ते श्रेष्ठकवय: अपि भवितुं शक्नुवन्ति। संस्कृतं प्रति अनुरागोऽपि जायते।

**10. गानम्**-(Singing)—छात्रा: नृत्यसंगीतमाध्यमेन लोकसंस्कृते:, लोकगीतानां, लोकनृत्यानां ज्ञानं प्राप्नोति। ते अन्य देशानां संस्कृते: ज्ञानं प्राप्नोति। संस्कृतगीतानां समवेतस्वरेण कक्षायाम् अभ्यासं कारयेत्। अध्यापकै: छात्रा: गीतं कण्ठस्थीकरणाय प्रेरणीया:। विद्यालये संस्कृतगीतानां प्रतियोगिताया: आयोजनमपि करणीयम्। संस्कृतगीतानां गायनेन छात्रा: लय-यति-गतिभि:परिचिता भवन्ति। संस्कृतकाव्ये रुचिरुत्पन्ना भवति।

**11. प्रहशनम्** (Jokes)—अध्यापक: छात्रान् सरलसंस्कृते विनोदकर्णिका: श्रावयति। तान् च संस्कृते विनोदकर्णिका: पाठनाय श्रवणाय च प्रेरयेत्। अनया क्रीडया छात्रेषु संस्कृतं प्रति रुचिरुत्पन्ना भविष्यति कतिपया: विनोदकर्णिका(Jokes) अत्र प्रस्तूयन्ते- पिता-पुत्र! वद रामराज्ये जना: स्व स्वगृहेषु तालकं कथं न आरोपयन्ति स्म? पुत्र-पित:! वार्तेयमस्ति यत् तदा तालकस्य आविष्कार एव न जात:।

**12. कथाकथनम्**- (Storytelling)—भाषाशिक्षणे कथानां महत् स्थानम् अस्ति। छात्राणां कल्पनाशक्ति:वर्धिता भवति। उच्चस्तरस्य छात्राः कथालेखनाय अपि प्रेरणीयाः।

**13. प्रदर्शनी** (Exhibition)–छात्रैः काचन परियोजना यथा–कस्यापि देशस्य राज्यस्य वा विस्तृतमध्ययनं कस्यापि विशिष्टाभिकरणस्य कार्याणाम् अध्ययनम्' एषां कृते चित्राणि, चार्टपत्राणि, प्रतिरूपाणि, लेखादि, फोटेग्राफनिर्मीयन्ते तेषां प्रदर्शनीं आयोजितं कर्तुं शक्यते।

**14. क्विजप्रतियोगिता**-(Quiz)—शिक्षकः छात्रान् सरलसंस्कृते विनोदकर्णिकाः क्विजः श्रावयति, तान् च संस्कृते विनोदकर्णिकाः, शब्दक्रीडादि पठनाय श्रवणाय च प्रेरयेत्। अनया क्रीडया छात्रेषु संस्कृतं प्रति अनुरागाः उत्पन्ना भविष्यति। सन्धि-समास-प्रत्यय- उपसर्गादिभिः सम्बद्धानि चक्राणि प्रस्तुत्य प्रश्नान् पृष्ट्वा, आभिः क्रियाभिः छात्राः स्वसांस्कृतिकमूल्यानां ज्ञान प्राप्तये समर्थाः भवन्ति।

**15. विद्यालयपत्रिका** (School Magazine)—विद्यालयैः स्वकीयाः पत्रिका प्रकाशिताः करणीयाः। तेन छात्राः विद्यालयानां समस्याभिः सुविधाभिः अवगताः भवन्ति। छात्रेषु सर्जनात्मकलेखनस्य योग्यतायाः विकासं भवति। पत्रिकायाः कृते सम्पादकमण्डलेषु छात्रप्रतिनिधयः अपि भवेत्। छात्राणां उत्साहवर्धनायप्रशस्तिपत्राणां पुरस्काराणाञ्च व्यवस्था अपि भवेत्। अनया पत्रिकया छात्रेषु लेखनकौशलस्य विकासो भवति। भाविजीवने तेषु कतिपयाः छात्राः उत्तमलेखकाः साहित्यकाराश्च अपि भवितुं शक्यते।

**16. प्रहेलिका ( कूटार्थः )** (Riddle)—संस्कृते प्रहेलिकाप्रस्तुत्य छात्राः तासाम् उत्तरानि वक्तुं निर्दिश्यन्ते। यः सर्वाधिकानि उत्तरानि ददाति स एव विजयी भवति। अनया क्रीडया छात्रेषु संस्कृत-अवगमनस्य क्षमतायाः विकासो भवति। ते सम्यग्रूपेण चिन्तयित्वा विवेकेन उत्तरमन्वेष्टुं प्रयत्नं कुर्वन्ति। संस्कृतकाव्यं प्रति छात्राणाम् आकर्षणमपि वर्धते। यथा–

1. **अपादो दूरगामी च साक्षरो न च पण्डितः।**
   **आमुखः स्फुटवक्ता च यो जानाति स पण्डितः।।**

उत्तर–पत्रम्

2. **वृक्षाग्रवासी न च पक्षिराज:त्रिनेत्रधारी न च शूलपाणिः।**
   **त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः।।**

उत्तर–नारिकेलम्

卐 卐 卐

# 5

# भाषाशिक्षणस्य सामान्यसिद्धान्ता शिक्षणसूत्राणि च

# General Principles and Maxims of Teaching

**1. सिद्धान्ताः ( क ) प्रकृतिवादीसिद्धान्तः, ( ख ) अभ्यासस्य सिद्धान्तः, ( ग ) रुचेः सिद्धान्तः, ( घ ) भावनात्मक-अभिव्यक्तेः सिद्धान्तः, ( ङ ) एकता-सहभागितायाश्च सिद्धान्तः,**

Principles–Principles of naturalism, Principles of Practice, Principles of Interest, Principles of Oral Activities, Principal of Integration and Coordination.

अधुनिकपरिवेशे मनोविज्ञानस्य प्रभावः प्रतिदिनं वरीवर्धते। मनोविज्ञानस्य क्षेत्रे भाषाशिक्षणस्यापि अनुसन्धानं प्रचलति। एतेन अनुसन्धानेन प्राप्ताः केचन निष्कर्षाः अत्युत्तमाः संस्कृतशिक्षणेऽपि प्रयोक्तुं शक्यन्ते। कस्यापि कार्यस्य निर्वहणात्पूर्वम् उद्देश्यानां निर्धारणं यथा आवश्यकं, तस्य कार्यस्य निर्वहणेन सम्बद्धायाः प्रक्रियायाः सिद्धान्तानां ज्ञानमपि तथैव आवश्यकम्। सिद्धान्तज्ञानेन प्रक्रियानिर्वहणं सुगमं, रोचकञ्च भवति। अस्याः प्रक्रियायाः अपि केचित् सिद्धान्ताः सन्ति। एतदर्थं संस्कृतभाषाशिक्षणस्य प्रारम्भात्पूर्वं तेषां सामान्यसिद्धान्तानां ज्ञानमत्यावश्यकं वर्त्तते। भाषयति या सा भाषा, भावाभिव्यक्तेः सर्वोत्तमं साधानं भवति। भाषा अनुकरणेन, अभ्यासेन च शिक्ष्यते। विचाराणाम् अभिव्यक्तेः 'भाषा' सशक्तमाध्यमा अस्ति। संस्कृतं भारतीय-समाजस्य एका प्रधानभाषा। आधुनिक-भारतीय- भाषासु अधिकांशाः विश्लेषणात्मकाः, परं संस्कृतं संश्लेषणात्मकभाषा अस्ति। इयं व्याकरणनिष्ठा भाषा अस्ति। शुद्धसंस्कृतस्य अवगमने, भाषणे, लेखने च व्याकरणमनिवार्यं भवति। भाषायाः एताः विशेषताः संस्कृतभाषायामपि तथैव घटिताः भवन्ति यथा अन्यभाषासु। संस्कृतभाषायाः शिक्षणम् अनेकेषु मनोवैज्ञानिक-व्यावहारिक-सिद्धान्तेषु च आधारितम् अस्ति।

**संस्कृतशिक्षणस्य सामान्यसिद्धान्ताः**—1. स्वाभाविकता, 2. अभ्यासः, 3. रुचिः

4. सक्रियता, 5. मौखिककार्य:, 6. अनुपातक्रम:, 7. बहुमुखीस्वतन्त्रता, 8. वैयक्तिकविभिन्नता, एते सामान्यसिद्धान्ता: संस्कृतशिक्षणे सहायका: भवन्ति।

**( क ) प्रकृतिवादीसिद्धान्त:–स्वाभाविकताया: सिद्धान्त:**

भाषाध्ययनप्रवृत्ति:मानवजीवनस्य एका स्वाभाविकी प्रवृत्ति: अस्ति। छात्रा: भाषां शिक्षयितुम् उत्सुका: भवन्ति। यदि शैशवे एव संस्कृतशिक्षणस्य प्रयास: क्रियते तर्हि छात्र: अनायासं संस्कृतमधीते। स: स्व मित्राणां भाषा:, प्रतिवेशिनां भाषा: तथा विद्यालये पाठ्यक्रमे निर्धारिता: भाषा:सरलतया अवगन्तुं समर्थो भवति। कस्या: अपि भाषाया: शिक्षणाय चतुर्णां कौशलानां स्वभाविकक्रम: वर्त्तते–श्रवणं, भाषणं, पठनं, लेखनञ्च। संस्कृतभाषामध्यापितुं विद्यालये तादृशं वातावरणं कल्पनीयं, येन छात्रा: अनायासं संस्कृतं प्रति आकृष्टा: भवेयु:। संस्कृतमय-वातावरणनिर्माणाय प्रतिदिनं सरलश्लोकानां बालगीतानाञ्च सस्वरवाचनं कारयेत्। संस्कृत-शिक्षणेऽपि स्वाभाविकी प्रवृत्ति: उपयुक्ता स्यात्। तदर्थं कक्षायां, बहिश्च तादृशं वातावरणम् उत्पादनीयम्, यत्र बालका: संस्कृतं भाषितुं स्वभावत: प्रेरिता: स्यु:। संस्कृत-शिक्षका: सरलसंस्कृते स्वविचारान् अभिव्यञ्जयितुं छात्रान् उत्साहितान् कुर्यु:।

**( ख ) अभ्यासस्य सिद्धान्त:**

भाषा 'विज्ञानं' तु वर्तते एव एका 'कला' अपि अस्ति। अन्यकलावत् भाषाध्ययनेऽपि अभ्यासस्यावश्यकता भवति। संस्कृतभाषाशिक्षणे अभ्यासस्य महती आवश्यकता। पाठस्य शुद्धोच्चरणसहित: पुन: पुन: अभ्यास: करणीय:। रुचिपूर्वकम् अभ्यास: करणीय:, सतताभ्यास: करणीय:, अभ्यासे बाधकतत्त्वानि प्रति वैराग्यभावं धारणीयम्। अस्यैव अपरं नाम–क्रियाशील: अस्ति। संस्कृतशिक्षणाय दीर्घकालीकाभ्यास: अपेक्षित:। अभ्यास: मौखिक:, लिखितश्चेति द्विविधो भवति। यथा–

1. कठिनानां वर्णानामुच्चारणस्य, वाचनस्य च अभ्यास:।
2. पाठस्थ- कठिनशब्दानां, वाक्यानाञ्च उच्चारणाभ्यास:।
3. व्याकरणसम्बद्धानां दोषाणां निवारणम्।
4. अक्षरविन्यासगतानाम् अशुद्धीनां निवारणम्।
5. गद्यखण्डानां पद्यानाञ्च शुद्धोच्चारणे वाचनस्याभ्यास:।
6. संस्कृतेविचाराभिव्यक्तये भाषणस्याभ्यास:।
7. सरलविषयान् संस्कृते अभिव्यक्तीकरणाय अभ्यास:।

**( ग ) रुचे: सिद्धान्त:**

छात्राणां कृते विद्यालयस्य वातावरणं रुचिपूर्णं स्यात्। यावत्पर्यन्तं छात्राणां संस्कृते अनुरागो न भविष्यति, तावत्पर्यन्तं संस्कृताध्ययनं सुष्ठु न प्रचलिष्यति। विद्यालये संस्कृताध्ययनं रुचिपूर्णं स्यात्। अयम् एक: मनोवैज्ञानिकसिद्धान्तोऽस्ति यत् यस्मिन् विषये छात्रस्य अधिका रुचिर्भवति, स: तं विषयं पठनाय प्रेरितो भवति। अन्याक्षरी-वादविवाद-भाषण-निबन्ध लेखन-

सस्वरवाचनादिभिश्च पाठ्यसहगामिक्रियाभि: संस्कृतशिक्षणं रुचिकरं भवति। यावत् छात्रेषु सक्रियरुचिर्नभविष्यति तावत् शिक्षकस्य सर्वोत्तमकार्यं पूर्णं न भविष्यति। अन्यविषयमिव संस्कृत-शिक्षणेऽपि दृश्यश्रव्योपकरणान्युपयोक्तव्यानि। श्यामफलकस्योपयोगं यथोचितम् अधिकाधिकञ्च कुर्यात्। क्रीडाविधे: प्रयोग: कर्त्तव्य:। संस्कृतगद्यस्य, पद्यस्य च व्याख्यानं सरलभाषायां भवेत्। अध्यापक: छात्रैस्साकं स्नेहेन, सहानुभूत्या विषयप्रयोजनपुर:सरं च व्यवहारं कुर्यात्। अत: संस्कृत-पठने पाठने शिक्षकछात्रयोश्च उभयोरपि रुचि: आवश्यकी वर्त्तते।

**( घ ) सक्रियतताया:सिद्धान्त:**

शिक्षणे सक्रियता सहायिका भवति। सक्रियता मानसिकविकासे तीव्रगतिमादधाति। अध्यापक:सरलसंस्कृते स्वविचारान् वक्तुं छात्रान् प्रेरयेत्। पाठ्यविषये विविधान् प्रश्नान् प्रष्टुम् अवसरं कल्पयेत्। संस्कृतशिक्षणसम्बद्धासु पाठ्यसहगामिक्रियासु भागं स्वीकर्तुं, पुस्तकालयात् सरलसंस्कृतपुस्तकान्यादाय पठितुञ्च छात्रान् उत्साहयेत्। भाषाशिक्षण- प्रक्रियायां छात्राणां सक्रियता नितरामुपकरोति। छात्रा: अधिकतमं यथा प्रश्नान् पृच्छेयु: तथा प्रेरणा प्रदेया। छात्रेभ्योऽपि भाषणाय अवसर: देय:।

**( ङ ) मौखिककार्यस्य सिद्धान्त:**

भाषाध्ययनस्य कार्यं श्रवणेन्द्रियेण, जिह्वया च आरभ्यते। छात्र: प्रारम्भे श्रवणस्य, भाषणस्य च अभ्यासं करोति। तत: परमेव वाचनं, लेखनञ्च स्यात्। प्रथमत: व्यावहारिक- शब्दावलिं, लोकोक्तीश्च शिक्षेत। मौखिकाभिव्यक्तिमपि कुर्यात्। महर्षि जैमिनी महोदयेन मीमांसादर्शने ''श्रोत्रग्रहणेहि अर्थे लोके शब्द: प्रसिद्ध:''संसारे शब्दस्यार्थ: श्रवणमेव स्वीक्रियते। अनेन अवबोधनस्य दृष्ट्या श्रवणं महत्त्वपूर्णं वर्त्तते। श्रवणं-मननं निदिध्यासनम् इत्यस्मिन्नेव क्रमे करणीयं यै: मानव: ज्ञानवान् भवति। एवञ्च छात्रा:सक्रिया:, उच्चारणे शुद्धता, व्याकरणस्य, अनुवादस्य च नियमै: अवगता: भवन्ति। लिखितकार्यं मौखिक- कार्यस्याधारतया स्यात्।

**( च ) अनुपातस्य, क्रमस्य च सिद्धान्त:**

संस्कृतभाषाशिक्षणस्य अनेकानि उद्देश्यानि भवन्ति। संस्कृते भावाभिव्यक्तिक्षमता भावग्रहण-क्षमता च सर्वोत्तमम् उद्देश्यं मन्यन्ते। क्रमस्य, अनुपातस्य च सिद्धान्तानुसारेण संस्कृतशिक्षणे प्रथमं मौखिककार्यं, तत:लिखितकार्यञ्च भवेत्। प्रारम्भिकस्तरे मौखिक- कार्यस्य प्रधानता भवेत्। माध्यमिकस्तरे पाठ्यपुस्तकाधारे व्याकरणज्ञानं कारयेत्। उच्चस्तरे तुलनात्मकाध्ययनम्-अनुवादं रचनाकार्याणि च अधिकानि स्यु:। शुद्धोच्चारणस्य शुद्धलेखनस्य च अभ्यासं कारयेत्।

**( छ ) बहुमुखी सिद्धान्त:**

संस्कृतशिक्षणस्य प्रयास:बहुमुख:स्यात्। तस्य उद्देश्यस्य पूर्णतया प्राप्ति:स्यात्। कारकशिक्षणे करण-अपादानकारकयोर्मध्ये विद्यमानं भेदं बोधनाय समस्तोदाहरणानि छात्राणां पुरत: उपस्थापनीयानि। उद्देश्यपूरणाय निम्नोक्ता: विषया: अवधेया:। यथा-

1. उदाहरणानां, प्रत्युदाहरणानाञ्च प्रस्तुतीकरणेन सामान्यनियमस्य प्रमाणीकरणम्।
2. सरलविचाराणां उदाहरणानां प्रस्तुतिः, सामान्य नियमस्य व्याख्यानम्।
3. छात्राणां पाठ्यपुस्तके विद्यमानानामुदाहरणानां परिशीलनम्।
4. संस्कृतात् मातृभाषायामनुवादकार्ये नियमस्य अनुसरणम्।
5. मौखिककार्येण साकं लिखितकार्यमपि सम्पादनीयम्।

**( ज ) स्वतन्त्रताया:वैयक्तिकविभिन्नतायाश्चसिद्धान्तः**

छात्रेषु वैयक्तिकभिन्नता भवति। कक्ष्यायां प्रायः त्रिविधाः छात्राः भवन्ति। कुशाग्रः—सामान्यः—मन्दबुद्धिभेदात्। व्यक्तिगतक्षमतानामाधारेण अस्याः ज्ञानं भवन्ति। अतः शिक्षकेण उच्चारण-वर्त्तनी-व्याकरणदोषाणां निदानं कृत्वा उपचाराय पृथक् पृथक् अभ्यासमालाः निर्मितव्याः। याभिः कुशाग्रबालकाः उन्नतेः अवसरा प्राप्नुयुः। सामान्य-बालकाः उन्नतेः मार्गे अग्रसरेयुः तथाच मन्दबुद्धिबालका:अधोगतिं प्राप्ति न गच्छेयुः। संस्कृतभाषायामधिकारं प्राप्तुं कक्षायाः, विद्यालयस्य, परिवारस्य च वातावरणं समीचीनं स्यात्। स्वतन्त्रवातावरणे छात्राणां जिज्ञासा तीव्रा भवति, तथा छात्रा:आत्मप्रकाशनाय उन्मुखाः भवन्ति। वाद-विवादः, पत्रव्यवहारः, चर्चा, वार्तालापः इत्यादिभिः माध्यमैः छात्राः आत्मप्रकाशनं कुर्वन्ति। मनोविज्ञानानुसारं योग्यता, रुचिः, प्रवृत्तिः, अभिवृत्तिः, शारीरिकमानसिकक्षमता, संवेगाः इत्यादीनामाधारेण छात्रेषु विभिन्नता उत्पद्यते। अतः शिक्षकः वैयक्तिकभिन्नतायाः सिद्धान्तमाधृत्य शिक्षयेत्।

**( झ ) भावनात्मक-अभिव्यक्तेः सिद्धान्तः**

अस्मिन् सिद्धान्ते अध्यापकः मूलपाठस्य पूर्वं स्वयं अध्ययनं करोति, सस्वरं पठति च। कक्षयां यदा शिक्षकेन मूलपाठस्य वाचनं क्रियते तदा छात्राः श्रृण्वन्ति तदनन्तरं छात्राः तस्यपाठस्य शिक्षकभावानुगुणं वाचनं कुर्वन्ति। इत्थं शिक्षार्थीनां विश्वासः सुदृढः भवति, अशुद्धयः च दूरी भवति। संस्कृतशिक्षणे विशेषज्ञता प्राप्त्यर्थं भवात्मक-अभिव्यक्तेः महत्त्वपूर्णं वर्तते। संस्कृतं प्रति अनुरागभावनायाः उन्मेषनं कृत्वा सतताभ्यासस्य अवसरः छात्राणां कृते प्रदेयः। विद्यालयेषु छात्राणां कृते लेखनं विलिख्य, वार्तालापकरणं, गीतं गायित्वा, तर्कणं तर्कयित्वा अधिगमस्य अवसरः प्रदेयः। अवसरोऽयं अध्यापकः विद्यलयेषु विभिन्नसाहित्यिक-गतिविधीनाम् आयोजनं कृत्वा छात्राणां भावनात्मकअभिव्यक्ते:सवर्धनं करणीयम्।

1. भावाभिव्यक्तेः प्रोत्साहनम्।
2. मौखिककार्यम् अधिकाधिकं कारयेत्।
3. शुद्धलेखनस्य अवसरः प्रदानीयः।
4. छात्राणां शब्दकोशं वर्धापनाय सहयोगः करणीयः।
5. व्याकरणस्यज्ञानं परिपुष्टं करणीयम्।

**( ञ ) एकता-सहभागितायाश्च सिद्धान्तः**

अत्र सर्वेषां विषयाणां परस्परं समन्वयः भवति। एकता एवं परस्परसहभागितापूर्णमनोभावेन

अध्ययनं क्रियते। अस्मिन् सन्दर्भे मौखिक-लिखित-कार्याणि एकस्मिन् समये एव कारणीयानि। अर्थात् एकस्य उद्देश्यस्य पूरणाय तदुद्देश्यसम्बद्धानां सर्वेषां विषयाणामुपरि ध्यानं प्रदेयम्। वर्ण-शब्द-वाक्यानां सम्यक् ज्ञानाय प्रयत्नः समाश्रयणीयः।

1. समवेतस्वरेण श्लोकानां बालगीतानाञ्च वाचनं कारयेत्।
2. सम्भाषणशिविराणाम् आयोजनम्।
3. संस्कृतशिक्षणे क्रीडासिद्धान्तस्य उपयोगिता।
4. जटिलवाक्यानाम् उच्चारणाभ्यासस्य अवसरः प्रदेयः।
5. अन्त्याक्षरी-वाद-विवादः-भाषण-निबन्धलेखन-सस्वरवाचनादिभिश्च पाठ्य-सहगामिक्रियाभिः संस्कृतशिक्षणं रुचिकरं भवन्ति।

## (ट) शिक्षणसूत्राणि-Maxims

(क) सरलात् काठिन्यं प्रति, (ख) ज्ञातात् अज्ञातं प्रति, (ग) स्थूलात् सूक्ष्मं प्रति, (घ) पूर्णात् अंशं प्रति, (ङ) विशेषात् सामान्यं प्रति।

Maxims-simple to complex, known to unknown, concrete to abstract, whole to part and particular to general.

**शिक्षणसूत्राणि:**—Teaching Maxims—शिक्षणं सरलं, सरसं, रुचिकरं, सुग्राह्यञ्च स्यात् इत्यस्मिन् सन्दर्भे मनोवैज्ञानिकाधारैः अनेकानि शिक्षणसूत्राणि संस्कृताध्यापने सन्ति। शिक्षणसूत्राणि एतादृशानि सरलानि सन्ति यैः अध्यापकः स्वशिक्षणं सफलतापूर्वकं करोति। तानि यथा-

**1. ज्ञातादज्ञातं प्रतिः**—From known to Unknown

प्रतिदिनं नवार्जितं ज्ञानम् अन्यस्मिन् दिने नवीनपाठस्य कृते पूर्वज्ञानं भवति। छात्राणां पूर्वज्ञानस्य, पूर्वानुभवस्य च आधारेण नवीनपाठस्य, विषयस्य वा अध्यापनमत्र अन्तर्भवति। संस्कृतशिक्षणे विशेषतः व्याकरणपाठे छात्राणां पूर्वानुभवस्याधारेण नूतनविषयाणामध्यापनं सुकरं भवति। अर्थात् अज्ञातविषयस्य ज्ञानप्राप्तये ज्ञातविषयः सहायको भवति। पूर्वज्ञानात् परं नवीनं ज्ञानं प्रदेयम्।

**2. सरलात् कठिनंप्रतिः**—From Simple to Complex

ज्ञातविषयःसरलो भवति, अज्ञातश्च कठिनः। शिक्षकः सरलं विषयं प्रथमं पाठयेत्, ततः परं कठिनविषयं पाठयेत्। इदं सूत्रं पूर्वोक्तसूत्रेण साकं सादृश्यं भजते। सरलानि लघूनि वाक्यानि प्रथमं पाठयेत्। उपमालंकारं पाठित्वा रूपकालङ्कारं पाठयेत्। छन्दसि अनुष्टुप् अनन्तरम् उपजाति मन्दाक्रान्तादिवृत्तानि बोधयेत्।

**3. स्थूलात् सूक्ष्मं प्रतिः**—From Concrete to Abstract

संस्कृतशिक्षणे स्थूलानि वस्तूनि प्रदर्श्य, तेषां नाम, स्वरुपं, स्वभावश्च क्रमशः वर्णनीयः।

वर्णनात्मकनिबन्धानां बोधनात्परं भावात्मकनिबन्धाः बोधनीयाः। प्रारम्भिकस्तरे बालानां सरलं स्थूलं मूर्त्तं वा तथ्यं परिचयञ्च तदनु सूक्ष्मम् अमूर्तं वा करणीयम्। एतदर्थं चित्र-मानचित्र-प्रतिकृति-अभिनय-उदाहरणानां प्रयोगोपि करणीयः।

**4. पूर्णादंशं प्रतिः**—From Whole to Parts

छात्रः प्रथमं समग्रं वस्तुं पश्यति, ततःपरमेव तस्य दृष्टिःअवयवेषु गच्छति। मनोवैज्ञानिक-दृष्ट्या विवेचनीयविषयस्य समग्रं रूपं प्रथममुपस्थापनीयं, ततः परं तस्य सूक्ष्मांशानां विवेचनं कर्त्तव्यम्। सम्पूर्ण कथा छात्रान् श्रावयित्वा तत्पश्चात् तस्यां सन्निहितान् कठिनशब्दान् भावान् सूक्ष्मांशान् च पृथक्-पृथक् रूपेण पाठयेत्। व्याकरणशिक्षणसमये सर्वप्रथमं छात्राणां समक्षं सूत्रं प्रस्तूयते तत्पश्चात् प्रत्याहार, सूत्रार्थ, उदाहरणानि च प्रस्तोतव्यानि।

**5. अनुभवात् तर्क प्रतिः**—From Empirical to Rational

स्वानुभूतसत्यस्य अनुभवानन्तरे एव तार्किकचिन्तनं समायाति। अभ्यासानुभवाःविषयाः शिक्षणस्य आधाराः स्युः। अनुभूतविषयाणामाधारेण लब्धं ज्ञानं चिरं भवति। अतः ''अनुभवात् तर्कं प्रति'' इत्याधारेण पाठनीयः। मनोवैज्ञानिकक्रमात् तार्किकक्रमं प्रति सूत्रं सादृश्यं भजते। अनुभवस्य मनोवैज्ञानिकक्रमस्य सम्बन्धः छात्राणां रुचि-योग्यता-अभियोग्यता-अभिवृत्ति-सर्जनात्मकता आदिषु भाषायाः चत्वारि कौशलानि च सन्ति। तार्किकक्रमस्य सम्बन्धः विषयवस्त्वादीनां व्यवस्थितक्रमेण प्रस्तुतीकरणमस्ति।

**6. विशेषात् सामान्यं प्रतिः**—From Particular to General

आदौ विशिष्टोदाहरणानि प्रस्तूय ततःपरम् उदाहरणानां साहाय्येन नियमं बोधयेत्। इदं सूत्रं ''आगमनात् निगमनं प्रति, उदाहरणेभ्यो नियमं प्रति'' इत्यपि व्याख्यातुं शक्यते। अत्र प्रथममुदाहरणं प्रस्तूयते, ततः परं सामान्यनियमः बोध्यते। व्याकरणशिक्षणे अस्य सूत्रस्य विशेषोपयोगो वर्तते। यतो हि लक्ष्यानुसारी एव लक्षणं भवति। अतः लक्ष्याणां परिशीलनेन लक्षणानां निर्माणं छात्रेभ्यः सुकरं सुबोधं, रुचिकरञ्च भवति। अस्य सूत्रस्य प्रयोगः अध्यापकः भाषा-व्याकरण-विज्ञान-गणितादीनां शिक्षणावसरे करोति।

**7. विश्लेषणात् संश्लेषणं प्रतिः**—From Analysis to Synthesis

आदौ विश्लेषणे समग्रस्य वस्तुनः अध्ययनं क्रियते, ततः परम् एकैकस्य अवयवस्य। इदं सूत्रं ''पूर्णादंशं प्रति''इत्यस्य विपरीतं भवति। अत्र प्रथमं विषयस्य विभिन्नाःअंशाः पृथक्-पृथक् पाठ्यन्ते, ततः तेषांमंशानां संश्लेषणेन समग्रं स्वरूपं बोध्यते। वाक्यरचनाः सन्धयः, समासाः, प्रकृतिप्रत्ययज्ञानमित्यादि विषयाणां बोधने अस्य सूत्रस्य उपयोगो निर्विवादः।

**8. अनिश्चितात् निश्चितं प्रतिः**—From Indefinite to Definite

प्रारम्भे छात्राणां विभिन्नवस्तूनां ज्ञानम् अनिश्चितम्, अस्पष्टञ्च भवति। ततः निश्चितं, स्पष्टञ्च कर्तुमेतत्सूत्रमनुसरणीयम्। संस्कृतशिक्षणस्य विभिन्नविषयेष्वपि छात्राणामनिश्चिते

ज्ञाने निश्चितत्वं सम्पादयेत् शिक्षक:। विज्ञानस्य-व्याकरणस्य च सिद्धान्तानां विषये छात्रस्य ज्ञानमनिश्चितं भवति। अर्थात् बालकस्य ज्ञानम् अनिश्चितम् अस्पष्टं च भवति, अध्यापक: शनै:—शनै: तत्र परिपक्वतां, स्पष्टतां च आनयति।

**निष्कर्ष: (Conclusion)**

उपर्युक्त-शिक्षणसूत्राणि शिक्षकाणां पथप्रदर्शकानि भवितुमर्हति। अध्यापने एतेषां सूत्राणां प्रयोग: कर्तव्य:। अनेन वैज्ञानिकरीत्या एव छात्रस्य ज्ञानं व्यवस्थितं स्थायित्वं च भवितुमर्हति।

卐 卐 卐

# 6

# संस्कृतशिक्षणविधिः

## Methods of Sanskrit Teaching

(क) परम्परागतविधिः, (ख) भण्डारकरविधिः, (ग) पाठ्यपुस्तकविधिः, (घ) प्रत्यक्ष- विधिः, (ड़) मौखिकविधिः, (च) समाहारविधिः, (छ) आगमन-निगमनविधिः, (ज) दण्डान्वय-खण्डान्वयविधिः (झ) अन्वयव्यतिरेकः।

1. Traditional Method, 2. Bhandarkar Mathod, 3. Text Book Method, 4. Direct Method, 5. Oral Method, 6. Elective Method,7. Inductive & Deductive Method, 8.Khandanvaya -Dandanvaya 9.Anvaya - Vyatirekha Mathod

अध्यापनं नाम एका कला वर्त्तते। भारते वैदिककालादारभ्य संस्कृताध्यापनाय काश्चन् शिक्षणपद्धतयः सन्ति, एतासु पद्धतिषु कश्चन प्रचीनाः नवीनाश्च सन्ति। वस्तुतः पद्धतिः किमर्थम् ? पद्+हति=पद्धतिः भवति। पद्स्यः हतिः पद्धतिः, पद्भ्यःनाम पदसमूहेभ्यः, हतिः नाम ताडनम् इति। दैनिकजीवने पाकादिक्रियाः प्रशस्ताः आसु पाकादिक्रियासु समीचीनाः पद्धत्यः नाश्रिताश्चेत् कुशल क्रियाः सम्पन्नाः न भवेयुः। शिक्षाबोधनेऽपि छात्राणां मानसिकविकासार्थं समीचीनाः पद्धत्यः आश्रयणीयाः। संस्कृतशिक्षणेऽपि एताः पद्धत्यः आवश्यकाः वर्तन्ते। शिक्षणप्रणाल्यां विद्यमानाः सर्वे अंशाः एकस्यां पद्धत्यामेव बोधयितुं न शक्यन्ते। छात्राणां वयं, विषयं, कक्षां, स्तरं, परिवेशं च मनसि निधाय यस्मिन् समये याः पद्धतिः अपेक्षिता सा पद्धतिराश्रयणीया। प्रतिपद्धतेः गुणदोषाश्च सन्ति। गुणाः स्वीकरणीयाः दोषास्तु त्याज्याः। शिक्षणप्रक्रियायां वैयक्तिकभेदाः, रुचिः, ग्रहणशक्तिः इत्यादीनां स्थानमकल्प्यत्। तथा च शिक्षणं छात्रकेन्द्रितं विधातुं नूतनानां पद्धतीनाम्, उपकरणानाञ्च प्रयोगेण प्रयत्नाः अक्रियन्त। फलतः संस्कृते आधुनिकशिक्षणपद्धतीनां समावेशोऽभवत्।

(क) परम्परागतपद्धतिः, (ख) भण्डार्कर्पद्धतिः, (ग) पाठ्यपुस्तकपद्धतिः, (घ)

प्रत्यक्षविधिः, (ङ) –वार्तालापविधिः, (च) मूल्यांकनपद्धति, (छ) समाहारविधिः, (ज) हरबार्ट पञ्चपदी, (झ) सूक्ष्मशिक्षणम्,

## (क) परम्परागतपद्धतिः
## (Traditional method)

परम्परागतपद्धतिः द्विधा विभक्तुं शक्यते। प्रथमा पाठशालापद्धतिः, द्वितीया व्याकरण पद्धतिश्चेति। पाठशालापद्धतेः साहित्यसम्बद्धांशाः आधाराः, व्याकरणपद्धतेः व्याकरणांशाः आधाराः भवन्ति। पाठशालापद्धतेः नामान्तरमस्ति पण्डितप्रणाली पद्धतिरिति। एषा प्राचीन भारतीयशिक्षापद्धतेः प्रतिनिधिः अस्ति। सप्तदशशताब्देः पूर्वं यावत् आश्रमेषु, गुरूकुलेषु, मठेषु च अनया पद्धत्या संस्कृतमध्याप्यमानासीत्। अध्यापकानां गुरूणां आचार्याणाञ्च शैक्षिकक्षेत्रे प्रमुखं स्थानमासीत्। विदेशीया आगत्य सार्वजनिकपाठशालां व्यवस्थाप्य शिक्षायाः रूपरेखां परिवर्तिता। संस्कृतक्षेत्रेऽपि परिवर्तनं समागतम्। इदानीमपि वह्वीषु पाठशालासु विद्यालयेषु महाविद्यालयेषु च अनया पद्धत्या अध्यापनं प्रचलत्येव। अत्र शिक्षणं सर्वं मौखिकमासीत्। कण्ठस्थीकरणस्य, स्मरणस्य च महत्त्वमधिकं भवति। तदानीं चतुर्वर्गस्यावधारणा प्रचलिता आसीत्। तथा चतुर्वर्गेषु धर्मार्थकाममोक्षेषु चतुर्थस्य प्राप्तिरेव शिक्षायां प्रमुखमुद्देश्यमासीत्। अयं विधिः शिक्षणस्य स्थाने मानवस्य जीवनशैल्यामुपरि विशिष्टं वलं दीयते स्म।

**परम्परागतपद्धत्या उद्देश्यानि–**

1. सम्प्रदायः, सभ्यता, संस्कृतिः, देशभक्तिः, आस्तिक्यभावना, इत्यादीनां प्रधानतया सम्पादनम्।
2. वेदाः, उपनिषदः, पुराणानि, इतिहास, इत्यादीनां ज्ञानं सम्पाद्य, ईश्वर-भक्तेः–धार्मिक-भावनायाश्च संवर्द्धनम्।
3. चतुर्णां पुरुषार्थानां सम्पादनम्।
4. सच्चारित्र्य-सम्पादनम्।
5. समीचीन-व्यक्तित्वसम्पादनम्।
6. आत्मसंयमन-चिन्तन-तर्कशक्त्यादीनां सम्पादनम्।
7. प्राचीन-धार्मिकशिक्षायां अभिरूचिसम्पादनम्।
8. परम्परागतस्य सर्वस्यापि ज्ञानस्य संरक्षणं, विस्तृतिं, प्रचारणञ्च प्रधानं लक्ष्यं भवति। तुरीयपुरुषार्थे अत्यधिकाभिनिवेशसम्पादनम्।

अस्यां पद्धत्यां शिक्षकः स्वयं श्लोकान् गद्यखण्डान् वा पठति। छात्रैरनुवाचनं न क्रियते। गुरूरेव सक्रियो भूत्वा सर्वानंशान् वदेत्। वादविवाद, शास्त्रर्थः, तार्किकशक्तिः इत्यादीनां कृते अधिकं प्रामुख्यं दीयमानमासीत् दीयते च। अस्यां पद्धत्यां प्रारंभिकस्तरे शब्दमञ्जरी, धातुमञ्जरी, अमरकोशः, हितोपदेशः, पञ्चतन्त्रम्, इत्यादिषु ग्रन्थेषु केचनांशाः उपनिषद्- कथाः पञ्चमहाकाव्यानि नाटकानि च भवन्ति। पद्धतिरेषा समीचीना। विशेपसंस्कृताध्यापनाय

शोधकार्याय च एषा पद्धतिरावश्यकी अस्यां पद्धत्यां गुणदोषाः च सन्ति। दोषापेक्षया गुणा एव अधिकाः सन्ति।

**परम्परागतपद्धत्यापाठ्यक्रमः**

1. प्रारम्भे शब्दरूपावलिःधातुपाठ, सन्धि, समासचक्रं, अमरकोशः इत्यादीनां कण्ठस्थीकरणम्।
2. साहित्यस्य परिचयः, लघुसिद्धान्तकौमुदीस्थ सूत्राणां कण्ठस्थीकरणम्, व्याख्यायाः प्रस्तुतीकरणम्।
3. संस्कृते सरलगद्य-पद्य-रूपकाशानां पाठनम्।
4. मध्यसिद्धान्तकौमुदी, सिद्धान्तकौमुदी, अष्टाध्यायी, महाभाष्यादि ग्रन्थानां पाठनम्।
5. काव्यानां, प्रकरणग्रन्थानां दृढतरम् अध्ययनम्।
6. कविता, गद्यं, रूपकं, चम्पूः साहित्यकसमालोचनञ्च पाठनम्।

**परम्परागतपद्धत्याः गुणाः**

1. मानसिकानुगुणं स्मरणाशक्तेश्च अधिकं प्राधान्यं प्रदीयते।
2. गुरुशिष्ययोर्मध्ये समीचीनः सम्बन्धो भवति।
3. आवर्त्तने उच्चारणगताः दोषाः निवारिताः भवन्ति।
4. रटन-प्रक्रियायाः कण्ठस्थीकरणस्य च प्रामुख्यं प्रदीयते।
5. शब्दाः, धातवः, समासाश्च, भाषायां कीलकं पात्रं निर्वहन्ति ततस्तेषां आदौ प्रामुख्यं प्रदीयते।
6. सांस्कृतिकाध्यात्मिकमूल्यानां अधिकं प्रामुख्यं प्रदीयते।
7. शोधसम्बद्धं ज्ञानं अनया प्राप्तुं शक्यते।
8. उच्चकोटौ विद्यमानाः विद्वांसस्सर्वे अनयैव पद्धत्या ख्यातिं गताः।
9. अनया पद्धत्या अधीतानां छात्राणां शास्त्रपाण्डित्यं पूर्णं, परिनिष्ठितञ्च भवति।

**परम्परागतपद्धत्याः दोषाः**

1. पाठ्यक्रमे एक एव पक्षः अधिकश्चास्ति।
2. पद्धतिरेषा नीरसा फलतः छात्राः अध्ययने अभिरूचिं नैव प्रदर्शयन्ति।
3. लोकिकैतिहासिक-तुलनात्मक आलोचनात्मक-विषयाणां प्रामुख्यं न दीयते।
4. स्मरणशक्त्या अधिकावकाश-प्रकल्पनेन जीवन-प्रगतेः विकासः भवितुं नार्हति।
5. पाठ्यसहगामिनी क्रियाणां कृते सर्वात्मना अवकाशः नास्ति।
6. स्वयं कृते अवकाशः नास्ति।
7. शिक्षणे छात्रक्रियाणाम् अवकाशः सर्वथा नास्ति।
8. शिक्षा अध्यापककेन्द्रिता भवति।
9. मनोविज्ञानसिद्धान्तानां प्रतिकूला पद्धतिरियम्।
10. कल्पनाशक्तेः, चिन्तनशक्तेश्च ह्रासो भवति।

11. शारीरिकविकासः, मानसिकविकासः, समाजिकविकासश्च कुण्ठितो भवति।
12. जीवकोपार्जने असमर्थाः भवन्ति।

**निष्कर्षः**

पाठशालापद्धतिः इदानीमपि मठेषु, आश्रमेषु, पाठशालासु, विद्यालयेषु, महाविद्यालयेषु, संस्कृतविश्वविद्यालयेषु, च प्रचलिता वर्त्तते। परम्परागत-पद्धत्यां साहित्यस्य कृते मुख्यं स्थानं व्याकरणस्य गौणं स्थानं प्रदीयते। व्याकरणस्य संस्कृतसाहित्ये महत् प्रामुख्यम् अस्ति। अद्यतनेषु दिनेषु संस्कृतविद्यालयेषु प्रथमतया लघुसिद्धान्तकौमुदी अध्याप्यमानास्ति। आरम्भस्तरे शब्दाः धातवश्चाध्याप्यमानास्सन्ति। संज्ञा, परिभाषाः, सूत्राणि च पाठ्यपुस्तकेषु उदाहरणतया प्रदीयन्ते। सर्वमेतत् परम्परागतपद्धतिं सूचयति। मनोविज्ञानसिद्धान्तानाम् अनुसरणाभावेऽपि अस्याः पद्धतेः महत्त्वमस्ति। अनुभवेन ज्ञायते यत् अनया पद्धत्या उत्कृष्यः पण्डिताः, उत्तमाः विद्वांसः, कवयश्च निर्मिताः अभवन्। भरतीयसंस्कृतेः, साहित्यस्य च संरक्षणाय इयं पद्धतिः नितरामुपयुक्ता भवति।

## (ख) भण्डार्कर्पद्धतिः
## (Bhandarkar Method)

**व्याकरणानुवादविधिः**

अष्टादश शताब्दारम्भे भारतीयशैक्षिकेतिहासे महत्परिवर्तनं समागतम्। फलतः शिक्षण पद्धतिष्वपि परिवर्तनं समागतम्। तावत्पर्यन्तं भारतदेशे परम्परागतपद्धत्याः प्रामुख्यम् आसीत्। विदेशीयभाषाणाम् अध्यापनाय यूरोप्देशेषु व्याकरणानुवादपद्धतिरित्येका नवीना पद्धतिः समागता। डॉ० रामकृष्णगोपाल भण्डार्कर् महोदयः पूर्वोक्तायाः पाश्चात्यपद्धत्याः अनुगुणं पुस्तकद्वयं रचितवान्। 1. मार्गोपदेशिका, 2. संस्कृतमन्दिरान्तः प्रवेशिका, आङ्ग्लभाषा माध्यमेन रचितमिदं ग्रन्थद्वयं सरलतया संस्कृतभाषां, व्याकरणञ्च अध्येतुं छात्राणामुपकारकमभूत्। प्रथमे पुस्तके 31 पाठाः द्वितीयपुस्तके च 26 पाठाः सन्ति। प्रत्येकं पाठे चत्वारः भागास्सन्ति। पद्धतिरेषा नूतन व्याकरणानुवादपद्धतिरित्यस्याः [Grammar Translation method] अस्याः अन्वर्थं नाम। डॉ० भण्डार्कर् महोदयेन इदम् प्रथमतया प्रतिपादितत्वात् तेनैव नाम्ना भण्डार्कर् पद्धतिरिति विख्याता समभवत्। महाविद्यालयेषु संस्कृताध्यापनाय इयं पद्धतिः उपकारिकाभवत्।

**अस्याःपद्धत्याःउद्देश्यानि**

1. विशिष्ट-आंग्लेयानां संस्कृताध्यापने अभिरूचि-उत्पादनम्।
2. संस्कृतभाषायाः वर्गीकरणं कृत्वा सरलतया संस्कृतविषयोपपादनम्।
3. संस्कृते प्राथमिकज्ञानसम्पादनम्।
4. प्रौढानां, बालानां च कृते सुलभतया संस्कृताध्यापनम्।
5. संस्कृतानभिज्ञानां प्राच्यपाश्चात्यप्रौढानां सुलभतया संस्कृताध्यापनम्।
6. विषय कण्ठस्थीकरणस्य दूरीकरणम्, स्वयं शक्त्याः जागरणम्, अनुभवज्ञानसम्पादनञ्च।

7. व्याकरणेन अनुवादेन च संस्कृताध्यापनम्।
8. सरलव्याकरणज्ञानसम्पादनम्।
9. संस्कृताध्ययने विद्यमानायाः भीतेः दूरीकरणम्।
10. संस्कृताध्ययनं कठिनं नास्तीति ज्ञापनम्।
11. व्याकरणांशाः प्रधानाः भवन्ति। अतः शब्दधातु-ज्ञानेन सह अनयोः मेलनेन वाक्यज्ञानसम्पादनम्।
12. संस्कृतभाषातः आंग्ले, आंग्लतः संस्कृते अनुवादाभ्यास-सम्पादनम्।

**भण्डार्कर्पद्धतेः गुणाः**

1. अस्यां पद्धतौ कण्ठस्थीकरणस्य अपेक्षया छात्राणां विचारशक्तेः जागरणं क्रियते।
2. एषा पद्धतिः मनोवैज्ञानिकी अस्ति।
3. बालानां प्रौढानां च लाभदायिनी इयं पद्धतिः।
4. अल्पेऽस्मिन् समये संस्कृतं सरलतया अध्येतुं शक्यते।
5. आंग्लभाषाज्ञानयुक्ताः छात्राः अल्पेन समयेन स्वाध्यायेन च संस्कृतस्य सामान्यज्ञानं प्राप्नुवन्ति।
6. अध्ययनसमये पाणिन्यादिसूत्राणि विना स्पष्टतया सिद्धरूपाणि ज्ञातुं शक्यन्ते।
7. स्थूलात् सूक्ष्मं प्रति, ज्ञातादज्ञातं प्रति, मनोविज्ञानात् विज्ञानं प्रति, सरलात्काठिन्यं प्रति, अभ्यासात् अधिगमं प्रति, इत्यादयः शिक्षासिद्धान्ताः अत्र उपयुक्ताः सन्ति।
8. व्याकरणकार्याणाम्, अनुवादस्य च अभ्यासेन भाषा स्वाधीना भवति।
9. गुरोस्साहाय्यं विना स्वतः संस्कृतभाषामध्येतुं शक्यते।
10. विषयाणां वर्गीकरणेन क्रमिकः विन्यासः अध्ययनकाठिन्यं निवारयति।

**भण्डार्कर् पद्धतेः दोषाः**

1. व्याकरणस्य अनुवादस्य च महत्त्वमस्ति, न तु भाषायाः।
2. गुरोर्मुखतः पाठान् श्रोतुम् अवकाशो नास्ति।
3. श्रवणभाषणकौशलयोः अवकाशः नास्ति।
4. एषा पद्धतिः नीरसा भवति।
5. गद्यं, पद्यं, रूपकं, निबन्धःइत्यादयःसाहित्यप्रकाराभावे भाषायाः वास्तविकं स्वरूपं न ज्ञायते।
6. शब्दसौन्दर्यस्य, अर्थचमत्कारस्य, रसानुभूतेश्च स्थानं नास्ति।

**निष्कर्षः**

स्वदेशे विदेशेषु च विद्यमानानां साक्षराणां कृते इयं पद्धतिः उपयुक्ता भवति। एतां पद्धतिमाश्रित्य भारते अनेके पण्डिताः प्रादेशिकभाषासु अपि संस्कृताध्यापनाय ग्रन्थानरचयन्। महाविद्यालयेषु काव्यादिभिस्साकमेतेषां ग्रन्थानामध्ययनं प्रौढछात्राणां संस्कृतज्ञानं विस्तारयति।

माध्यमिकस्तरे व्याकरणस्य, अनुवादस्य च अभ्यासः तेषां संस्कृतभाषाज्ञाने परिनिष्ठितत्वं सम्पादयति।

## (ग) पाठ्यपुस्तकपद्धतिः
## Text Book Method

अद्यतनेषु दिनेषु भाषाणां, वैज्ञानिकविषयाणाञ्च अध्यापनाय पाठ्यपुस्तकपद्धतिराश्रीयते विद्यालयेषु महाविद्यालयेषु च। एषा पद्धतिः लोकप्रिया वर्त्तते। एषा पद्धतिः आंग्लेयानां आगमनादारभ्य प्रचलति अस्माकं देशे। कक्षाध्यापनस्य विविधसाधनेषु प्रमुखसाधनमस्ति पाठ्यपुस्तकम्। पाठयपुस्तकमाधारीकृत्य यत्र पाठनं भवति तत्र पाठ्यपुस्तकपद्धत्या शिक्षणं प्रचलतीति ज्ञातव्यम्। एषा पद्धति अध्यापकानां छात्राणाञ्च अत्यन्तसौविध्यदायिनी अस्ति। कथोपदेशसंयुक्तः रुचिज्ञानाभिवर्धकः, पाठ्यग्रन्थ इति ज्ञेयः कल्पनाशक्तिपोषकः।।

सरलं सुन्दरं चैव मनोरञ्जनपूर्वकम्।
शीलनिर्माणसंयुक्तं पाठ्यपुस्तकमीरितम्।।

पाठ्यपुस्तकम् नाम केषांचन पद्यानां, गद्यानां, रूपकाणां, निबन्धानां, व्याकरणस्य च संग्रहणात्मकं रूपम् अस्ति। छात्राणां मानसिकस्तरानुकूलं, बौद्धिकस्तरानुकूलं, सुनिश्चित-समये पूरणीया अंशाः पाठ्यपुस्तकेषु भवन्ति। अध्यापकः अनेन पाठ्यपुस्तकेन छात्रेषु ज्ञानम् उत्पादयति, सच्चारित्र्यं सम्पादयति, पथप्रदर्शनञ्च करोति। पाठ्यपुस्तकम् अध्यापकस्य मार्ग-दर्शनं, छात्रेषु रसानुभूतिञ्च सम्पादयति। कविः तस्येतिहासः कालः, इतरग्रन्थाः, कविताशैली इत्यादयः अंशाः पाठ्यपुस्तके एव उल्लिखिताः भवन्ति। अतः अध्यापकानां कृते एषा पद्धतिः अतीव प्रोत्साहकरा भवति। पाठ्यपुस्तके प्रतिपाठस्यान्ते निबन्धरूप- प्रश्नाः, अर्थाः, व्युत्पत्तयः, विशेषांशाश्च भवन्ति। शिक्षाशास्त्रिणां, मनोवैज्ञानिकानां, विदुषाञ्च निरन्तरपरिश्रमेण निष्पन्नेयं पद्धतिः बालकानां विषयाध्ययने नितरामुपकारिणी भवन्ति। पाठ्यपुस्तकानामध्ययनेन लब्धं ज्ञानं भाविजीवने विस्तृताध्ययनाय उपकरोति। एतदेव अस्याः पद्धतेः प्रत्यर्पणमूल्यम् [Surrender value] इति डॉ0वेस्ट महोदयेन वर्ण्यते। भाषणात्, लेखनाच्च वाचनस्य सरलत्वादियं पद्धतिः सुलभा, लाभप्रदा च। एषा पद्धतिः मनोविज्ञाना-नुगुणाऽस्ति।

अस्यां पद्धतौ अध्यापकः संस्कृतपाठस्य आदर्शवाचनं कृत्वा, छात्रैः अनुवाचनं कारयति। शब्दार्थं, वाक्यार्थञ्च मातृभाषायां बोधयति। प्रसङ्गानुसारं व्याकरणविषयान् ज्ञापयति। अत्र सर्वं शिक्षणं पाठ्यपुस्तककेन्द्रितं भवति। परीक्षा अपि पाठ्यपुस्तकस्य आधारेणैव भवति। अभ्यासकार्यमपि पाठ्यपुस्तककेन्द्रितं भवति। यथा–

1. एकपदेन उत्तरत।
2. एकवाक्येन उत्तरत।
3. रिक्तस्थानानि पूरयत।

4. समानार्थकानां परस्पर-मेलनं कुरूत।
5. प्रश्ननिर्माणम्।
6. अशुद्धि-संशोधनम्।
7. अर्थस्पष्टीकरणम्।
8. बोधप्रश्नादिकरणम्।

**अस्याःपद्धत्याःउद्देश्यानि**

1. शिक्षणे सौलभ्यसम्पादनम्।
2. अध्यापकस्यानुपस्थितावपि विषयसंग्रहणं कर्तुं शक्यते।
3. विश्रान्तिसमयेऽपि पाठ्यपुस्तकाधारेण विषयाणां संस्मरणम्।
4. क्रमशः विषयाणामध्ययने दक्षतोत्पादनम्।
5. गद्यपद्यव्याकरणानि मनोवैज्ञानिकरीत्या अध्ययने अवकाशप्रकल्पनम्।
6. कक्षात्यागानन्तरं अभ्यासानाम् [Exercises] आधारेण स्वीयाध्ययने प्रेरणादानम् इति।
7. उच्चकक्षासु संस्कृतसाहित्यस्य परिचयप्रदानम्।
8. सरलसंस्कृतभाषायाः अर्थावबोधः।
9. छात्रेषु जिज्ञासायाः विकासो भवति, ते सक्रियाः भवन्ति।

**अस्याः पद्धत्याः गुणाः**

1. पाठ्यपुस्तके विद्यमानाः पाठाः पूर्वमेव अनुभवज्ञैः लिखिताः भवन्ति। अतः अध्यापकानां सौलभ्यं भवति।
2. अभ्यासादयः पाठ्यपुस्तके एव भवन्ति। अतः छात्राणामपि सौलभ्यं भवति अस्यां पद्धत्याम्।
3. कक्षायाः अनुपस्थितावपि पाठ्यपुस्तकानां साहाय्येन स्वयमध्येतुमवकाशोऽस्ति।
4. अनया पद्धत्या छात्राणामुच्चारण-सौष्ठवं वाचनकौशलञ्च सम्पाद्यते।
5. शीघ्रवाचनस्य, अर्थग्रहणस्य च अभ्यासो भवति।
6. अध्येतव्या अंशाः सर्वे पाठ्यपुस्तके एव भवन्ति इति।
7. बालकानां भौतिक-समाजिकवातावरणाभ्यां विषयसामग्र्याः ग्रहणम्।
8. स्वयंपाठी-छात्राणां कृते उपयुक्ता पद्धतिरियम्।
9. शब्दावलीनां ग्रहणं पुनः स्मरणं च सुकरं भवति।

**अस्याः पद्धत्याः दोषाः**

1. अध्यापकस्य आलोचनाशक्तिः लुप्ता भवति।
2. पाठस्य पूर्वसन्दर्भः अनन्तरं सन्दर्भः ज्ञातुमवकाशो नास्ति।
3. पाठ्यपुस्तकमस्तीति हेतोः छात्राः असकृत् कक्षामपि त्यजेयुः इति।

## ( घ ) प्रत्यक्षविधिः ( निर्बाधपद्धतिः )
## (Direct Method)

या भाषा अध्यापनीया सा तस्याः माध्यमेनैव बोधनीया। एषैव प्रत्यक्षपद्धतिः इति उच्यते। यदा आंग्लेयाः अस्माकं भारतमागतवन्तः तदारम्भ्य प्रत्यक्षपद्धत्याः प्रामुख्यं समागतमस्माकं देशे। अतस्तैः आंग्लं आंग्लभाषामाध्यमेन अध्यापयितुं प्रत्यक्षपद्धतिं स्वीकृतम्। एवं रीत्या आगता प्रत्यक्षपद्धतिः संस्कृतभाषाध्यापनाय अपि उपयोक्तव्येति संस्कृतविदुषां अभिप्रायोऽप्यस्ति, प्रायः मातृभाषां विहाय अवशिष्टा सर्वाभाषा अपि प्रभावोत्पादकरीत्या अध्यापनाय एषा पद्धतिराश्रिता भवति स्म। इदानीं प्रायः सर्वाः भाषा अनुवादपद्धत्या अध्याप्यन्ते संस्कृतभाषा अपि अनुवादपद्धत्या अध्याप्यते। भारते विविध- विश्वविद्यालयेषु विद्यापीठेषु संस्कृतभाषामाध्यमेनैव संस्कृतमध्याप्यते। अनया पद्धत्या फलितान्यपि समीचीनानि सन्ति। अतः प्रत्यक्षपद्धतिः श्रोष्ठतरा इति बहवः समर्थयन्ति। अधुना भारते आंग्लमाध्यमविद्यालयेषु, बालोद्याने [kindergarden Schools] च आंग्लभाषायाः अध्यापने पद्धतिरियं विस्तृतरूपेण उपयुज्यते। अस्यां पद्धत्यां पदपदार्थयोः, विचाराभिव्यक्त्योः, अनुभवभाषयोश्च मिथः साक्षात् सम्बन्धः स्थाप्यते। संस्कृतमय-वतावरणस्य निर्माणेन, निरन्तरं संस्कृतभाषायाः प्रयोगेण छात्राः अनायासं संस्कृतं शिक्षन्ते। एवमियं प्रत्यक्षपद्धतिः संस्कृतभाषाशिक्षणे नितरामुपकारिका भवति।

**अस्याः पद्धत्याः उद्देश्यानि**

1. शिक्षणे प्रभावोत्पादकतायाः सम्पादनम्।
2. छात्रेषु अभिरूच्युत्पादनम्।
3. विशिष्ये भाषणकौशले नैपुण्योत्पादनम्।
4. भाषायां सहज सौन्दर्यास्वादने दक्षतोत्पादनम्।
5. यथार्थज्ञानसम्पादनम्।
6. कक्ष्यायां संस्कृतपरिवेशप्रकल्पनम्।
7. संस्कृतभाषाशिक्षणाय संस्कृते एव श्रवणं, भाषणं, पठनं, लेखनं च करणीयम्।

प्रत्यक्षपद्धत्या कक्षायाः परिवेशः संस्कृतमयः स्यात्। अध्यापकैः छात्रैरपि कक्षायां संस्कृतभाषा व्यवहृता स्यात्। आरम्भादारभ्य अन्तपर्यन्तं संस्कृतभाषाया एव अध्ययनाध्यापनं स्यात्। कक्षायां, प्रार्थनासमये, क्रीडाङ्गणे, सभासु समावेशेषु कार्यालयेषु च सर्वेषां भाषणं संस्कृतभाषायां स्यात्। छात्राणां समाधानानि अपि संस्कृतभाषायां स्युः। एवं रीत्या यत्र अध्यापनं प्रचलति, तत्र प्रत्यक्षपद्धतिराश्रिता इति ज्ञायते। क्रमशः पठने, लेखने, भाषणे च निपुणाः भवेयुः। प्रत्यक्षपद्धत्या शीघ्रगत्या भाषायामधिकारं सम्पादयितुं शक्यते।

**अस्याः पद्धत्याः गुणाः**

1. शिक्षासिद्धान्तानुकूला अस्ति इयं पद्धतिः।
2. अनया पद्धत्या यथार्थ ज्ञानं सम्पादयितुं शक्यते।

3. अनुवादपद्धत्या अपेक्षया प्रत्यक्षपद्धत्या भाषां अभिनिवेशं सम्पादयितुं शक्यते।
4. अनया संस्कृतभाषायाः पूर्वतनं वैभवं आनेतुं शक्यते।
5. छात्राः अनया पद्धत्या व्यवहारकुशलाः भवेयुः।
6. पठने-लेखने-भाषणे-च पर्याप्तः अवसरः उपलभ्यते।
7. अस्यां पद्धत्यां छात्राः सक्रियाः, आसक्ताश्च भवन्ति।
8. छात्राः संस्कृतभाषायाः व्यावहारिकं स्वरूपं व्याकरणञ्च जानन्ति।
9. छात्राणां संस्कृतस्य शुद्धोच्चारणे अभ्यासो भवति।

**अस्याः पद्धत्याः दोषाः**

1. प्राथमिकस्तरे एषा नोपयुक्ता भवति।
2. सुयोग्य-नूतनाध्यापकानां नियामकं आवश्यकम्।
3. बुद्धिमतां छात्राणां कृते एव उपयुक्ता।
4. अध्यापकानां छात्राणां च कृते कठिना भवेदियं पद्धतिः।
5. दृश्यश्रव्यसाधनानामभावे अध्यापनं नीरसं, निष्क्रियञ्च भवति।
6. विस्तृतव्याकरणशास्त्रस्य अनेके नियमाः स्पष्टीकर्तुं न शक्यन्ते।

**निष्कर्षः**

प्रारम्भिकस्तरे भाषाशिक्षणे पद्धतिरियं प्रयोजनकरीति शिक्षाशास्त्रिणामनुभवो वर्त्तते। यत्र पाठशालासु विद्यापीठेषु संस्कृतमहाविद्यालयेषु च संस्कृतेन व्यवहारः क्रियते, संस्कृतकार्यक्रमाः भवन्ति, तत्र संस्कृतमयं वातावरणं भवति। छात्राणां श्रवणकौशलं भाषणकौशलञ्च उत्पादयितुं प्रभवन्ति।

## (ङ) वार्तालापविधिः
## (Conversation Method)

**मौखिकविधिः—(Oral Method)**

इयं पद्धतिः संवादपद्धतिः वार्तालापपद्धतिरित्यपि व्यवह्रीयते। 'लप्' व्यक्तायां वाचि इत्यस्मात् धातोः आङ् इति उपसर्गयोजनेन आलापः इति निष्पद्यते। 'स्यादाभाषणमालापः' इति अमरकोशवचनानुसारं आसमन्तात् भाषणम् आलापो भवति। मानवजीवने वार्तालापस्य महत्त्वपूर्णं स्थानं वर्त्तते। भाषायाः व्यवहारे 75% व्यवहारस्तु वार्तालापरूपेण भवति। संस्कृतभाषायां वार्तालापस्य विधिवत् अभ्यासे कृते सति भाषाज्ञानं सुगमं भविष्यति। पद्धतिरियं संस्कृतभाषाया अत्यन्तप्राचीनतमा, आदौ भारते सर्वत्र अनयैव पद्धत्या संस्कृतं अध्याप्यमानमासीत्। अस्यां पद्धत्यां गुरुः आत्मनाधीतां शिक्षां वाचा स्वशिष्येभ्यः पाठयति। अध्यापकः सर्वं वाचा वदति, छात्राः स्वबुद्धया झटिति विषयान् गृह्णन्ति। अध्यापकः कक्षायां वार्तालापमाध्यमेन सरलवाक्यप्रयोगेन पाठगतविषयवस्तु प्रतिपादयति। प्रश्नोत्तररूपेण व्याख्यानरूपेण च विचारविनिमयः सम्भवति। पद्धतिरियं प्रत्यक्षपद्धतेः विकसितं स्वरूपं

भवति। इयं पद्धतिः प्रो० वोकिल महोदयस्य अस्ति। इंग्लेण्ड शिक्षा बोर्डेन अस्या स्वीकृतिः दत्तवान्। प्रतिदिनं किमध्यापनीयम्? कियत्पर्यन्तं अध्यापनीयम्? इति अध्यापकेनैव स्वयं निश्चयः स्वीक्रियते स्म। प्रतिदिनं अध्यापकेन क्रममेकमाश्रित्य वार्तालापमाध्यमेन बोधनीयमासीत्। इदानीमपि पाठशालासु एषैव पद्धतिराश्रीयते।

**ध्यातव्यविषयाः**—(क) भाषाशुद्धता, (ख) शिष्टभाषा, (ग) प्रभावोत्पादकता, (घ) वाणीपटुता–

**प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः।**
**तस्मात् तदेव वक्तव्यं वचने का दरिद्रता।।**
**सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।**
**प्रियं च नानृतं ब्रूयाद् एष धर्मः सनातनः।।**

**अस्याः पद्धत्याः उद्देश्यानि**

1. आधारभूतवाक्यानां अभ्यासं कुर्युः।
2. वाक्यानां संरचकघटकानां अभ्यासः कार्यः।
3. अध्ययने सावधानतया नैपुण्य-सम्पादनम्।
4. स्मरणशक्तेः अधिकतया अवसर-प्रदर्शनम्।
5. भाषाशिक्षणे भाषा एव शिक्षणम्।
6. नियंत्रितशब्दभण्डार-संवर्द्धनम्।
7. अनुवादस्थाने अध्येयभाषायाः प्रयोगः।
8. अध्येयभाषायां अभिव्यक्तिक्षमतोत्पादनम्।
9. अधीतांशानाजीवन स्मृतिपथे संस्थापनम्।
10. शीघ्रतया विषयावगाहन-सम्पादनम्।
11. कण्ठस्थीकरणस्य प्रामुख्यं प्रदानम्।

**अस्याः पद्धत्याः गुणाः**

1. गुरू-शिष्य-सम्बन्धः समीचीनो भवति।
2. स्मरणशक्तिः संवर्धिता भवति।
3. रचनाशक्तेः संवर्धनं भवति।
4. धारणाशक्तिः सततं संवर्धिता भवति।
5. प्रतिदिनं छात्राः परीक्षिताः भवन्ति।
6. साहित्यज्ञानेन साकं व्याकरणज्ञानं अप्रयत्नेन भवति।
7. वार्तालापस्य प्रधानता कक्षायां क्रीडाक्षेत्रे च प्रदेयम्।
8. वार्तालापः शिक्षणोपरान्त वाचन-लेखनस्याभ्यासः करणीयः।
9. संस्कृतशिक्षणस्य सर्वोत्तमविधिः वार्तालाप एव।

10. वार्तालापे शिक्षकछात्राः च सक्रियाः भवेयुः।
11. प्रश्नोत्तरमाध्यमेन वार्तालापे छात्राणां संकोचः झिझकश्चादिदूरीकर्तुं शक्नोति।
12. बुद्धिमतां छात्राणां कृते एषा उपयुक्ता भवति।

**अस्याः पद्धत्याः दोषाः**

1. कण्ठस्थीकरणाय अधिकं प्रामुख्यं प्रदीयते।
2. स्मृते अधिकं मूल्यं दीयते।
3. एषा पद्धतिः अमनोवैज्ञानिकी।
4. विषयकाठिन्यं अधिकं भवति।
5. अध्यापकाः परिपक्वज्ञानयुक्ताः भवेयुः।
6. संस्कृताध्यापनस्य गतिः मन्दा भविष्यति।

**निष्कर्षः**

संस्कृतमयवातावरणस्य निर्माणं तु भविष्यति, परञ्च कुशलसुयोग्य अध्यापकस्यावश्यकता वर्त्तते। विषयवस्तु व्यवस्थापने वार्तालापेन सुलभो भवति।

## (च) समाहारविधिः
## Eelectic Method

भारतस्य प्रचीनकालः संस्कृतभाषायाः गौरवकालः आसीत्। तस्मिन् काले संस्कृतभाषायाः उन्नतिः गुरूकुलादि प्राचीनविद्यापीठमाध्यमेन प्रतिभाशाली संस्कृतज्ञाः अभूवन्। ईकाई योजना [unitplan] एवं च अभिक्रमित-(योजना) अधिगम-[Programme Learning] दैनिक कार्ययोजनान्तर्गतं शिक्षणं भवति स्म। प्राचीनशिक्षणप्रणाल्यां "स्मरणशक्तीनांविकासः" सर्वोपरि आसीत्। अधिगमप्रक्रियायां तर्कसंग्रहे वर्णितं पञ्च सोपानम् अवलम्बनीयं आसीत्। येषु सोपानेषु (1) प्रतिज्ञा [Proposition] (2) हेतु [cause] (3) उदाहरणम् [Example] (4) तुलना [comparision, (5) निगमन [conclusion] प्रयोगाः प्रचलिता आसन्। ये आधुनिकविचारकहरवर्टीयपञ्चपदीतः अधिकवैज्ञानिक-सोपानानि सन्ति। हरवर्टीय पञ्चपदीये प्राचीन-नवीन-शिक्षाशास्त्रीय- समन्वयः दृश्यते। संस्कृतशिक्षणे आधुनिकप्रचलितसमस्तविधीनां संक्षिप्तविवेचनेन स्पष्टं भवति यत् अस्याः उपयोगिता सीमिता वर्त्तते। अध्यापकाः प्रत्येक विधीनां श्रेष्ठ-गुणानां यथोचितसमये प्रयोगं कुर्युः। विधीनां संश्लेषणं कृत्वा प्राचीन-नवीन-प्रणाल्यां समन्वयं स्थापित्वा अध्यापनं करणीयम्। स्मृति-जागरणेन सह छात्राणां अभिरुचिः वर्धितव्या। सरलीकृत्य सरसीकृत्य विषयस्य प्रस्तुतीकरणम् दृश्यते। विधीनां समाहारः संयुक्तविधौ दृश्यते। संस्कृतभाषा संश्लेषणात्मिका [Synithectical] भाषा अस्ति। आंग्लभाषा विश्लेषणात्मिका [Unalytical] भाषा अस्ति। संस्कृते मूलशब्देन सह विभक्ति क्रियापदं च संयुक्तं भवति। आंग्ले तु पृथक् भवति। यथा-"त्वं कुत्र गच्छसि ? अहं ग्रामं गच्छामि" [where are you going? I am going to the village] अत्र are going स्थाने

''गच्छसि''। am going स्थाने ''गच्छामि''। to the village स्थाने ''ग्रामं'' प्रयोगो भवति। संश्लेषणात्मक ज्ञातात् अज्ञातं प्रति गच्छति। विश्लेषणात्मकः सम्पूर्णात् अंशं प्रति, अज्ञातात् ज्ञातं प्रति च गच्छति। एषा पद्धतिः अंग्रेजीभाषा-शिक्षणेन सह अन्यभाषाशिक्षणे अपि उपयुक्ता भवति। प्राचीन-तर्कसंग्रहीय पञ्चसोपानानां परिष्कृतरूपाणि हरवर्टीय-पञ्च-पदानि भाषाशिक्षणाय आश्रीयमानानि सन्ति।

**अस्याः पद्धत्याः उद्देश्यानि**

1. भाषाशिक्षण-सिद्धान्तानुसारेण मनोवैज्ञानिक-प्रक्रिया-द्वारा संस्कृतशिक्षणम्।
2. भाषायाः आवश्यकोद्देश्यानां पूर्तिदिशायां ''संस्कृतम्'' स्थापितव्यम्।
3. शब्दभण्डारं, रचनाकार्यम्, अनुवादं, व्याकरणं, गद्यं, पद्यं, रूपकम्, शुद्धोच्चारणपूर्वकं ज्ञानम्, एतेषां पक्षाणां सम्पूर्णज्ञानमेव संस्कृतशिक्षणम्।
4. ज्ञातांशस्य दृढ़ीकरणाय पुनरावृत्तिहेतुना गृहकार्यदानम् करणीयम्।
5. प्रस्तावनातः आरम्भ्य गृहकार्यं यावत् छात्रेपूत्साहसंवर्धनम्।
6. तुलनात्मक-ज्ञानसम्पादनम्।

**अस्याः पद्धत्याः गुणाः**

1. **पाठशालाविधितः—**नैतिकशिक्षा, चारित्रिकशिक्षा, आध्यात्मिकशिक्षा, गुरूशिष्यसम्बन्धाः, ''ज्ञातं परं कण्ठाग्रम्'' एते गुणाः गृहीतव्या।
2. **व्याकरणानुवादविधितः—**व्याकरणतत्वं, अनुवादः, अभिनयः, पर्यायः, तुलना विग्रहः व्युत्पत्तिः, विश्लेषणम्-उपकरणप्रदर्शनादि गृहीतव्याः।
3. **पाठ्यपुस्तकविधितः—** पाठ्यपुस्तकेषु निर्धारित अभ्यासकार्याणि, व्याकरणतत्वानि अध्यापनीयानि।
4. **प्रत्यक्षविधितः—** संस्कृतमयवातावरणम्, यथार्थज्ञानसम्पादनम्, व्यवहारकौशलम्, पठने-लेखने-भाषणे च दक्षता एते ग्रहीतव्याः।
5. **नियोजिताध्यनेन** (Programmed Learning) संरचनात्मकविधिमाध्यमेन (Structural Approach) अस्मिन् विधौ शिक्षणं भवति।

**निष्कर्षः**

इयं पद्धतिः समाहारपद्धतिः, संयुक्तपद्धतिरिति च उच्यते। नेयं काचिन्नवीन- पद्धतिः किन्तु सर्वासां पद्धतीनां समाहारः भवति। सर्वासां पद्धतीनां गुणादानेन, दोषपरिहारेण च स्तरानुसारं, विषयानुगुणं परिस्थित्यनुसारञ्च प्रयोग एव समन्वय-पद्धतिरिति व्यवह्रियते। संस्कृतशिक्षणेभाषाकौशलानामुत्पादनाय, विभिन्नानामुद्देश्यानां सम्पादनाय, गद्यपद्यादिसाहित्य-प्रकाराणां बोधनाय इयं पद्धति उपयुज्यते। यथा-

1. प्रारम्भिकस्तरे प्रत्यक्षपद्धत्या, मौखिककार्यद्वारा शुद्धोच्चारणं, श्रवणकौशलं, भाषणकौशलञ्च सम्पाद्यते।

2. पाठ्यपुस्तकाधारेण वाचनकौशलं, लेखनकौशलञ्च उत्पाद्यते।
3. दृश्यश्रव्यसाधनानामुपयोगेन पाठः रूचिकरो विधीयते।
4. पाठ्यसहगामिक्रियाणाम् स्पर्धानाञ्च आयोजनेन छात्राणां कौशलानां विकासः क्रियते।
5. पाठ्यपुस्तकपद्धत्या गद्यपद्यादीनां बोधनं क्रियते।
6. सम्भाषणपद्धत्या भाषणशक्तेर्विकास:सम्पद्यते।
7. संरचनापद्धत्या वाक्यनिर्माणं, निबन्धादिरचना च शिक्ष्यते।
8. व्याकरणानुवादपद्धत्या अभ्यासेन भाषायाः शुद्धिः स्वरूपम्, अर्थग्रहणकौशलञ्च उत्पाद्यते।
9. नूतन मूल्यांकनविधीनामुपयोगेन छात्राणां ग्रहणकौशल-स्मरणकौशल-भाषाकौशलानि च परीक्ष्यन्ते। एवं संस्कृतशिक्षणं मनोवैज्ञानिकपद्धत्या समग्रं विधातुं शक्यते।

## (छ) आगमन-निगमनविधिः

**आगमनपद्धतिः (विधि)**—Inductive Method

**अर्थः**—उदाहरणानि प्रस्तूय ततो नियम निर्धारणन्नाम आगमनम्। जोसफलेण्डन् प्रतिपादयति- "यदि छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वा अस्माभिः प्रस्तूयन्ते, ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिरनुसर्यत इत्यर्थः"। प्रयोग प्रामाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रियते। इयमेका मनोवैज्ञानिकी पद्धतिः। अनया पद्धत्या सर्वासु भाषासु मनोवैज्ञानिक- रीत्या व्याकरणं अध्यापयितुं शक्यते। लक्ष्यं प्रदर्श्य लक्षणपरिकल्पन्नाम आगमनम्। लोके लक्ष्यमेव प्रथमं गण्यम्। "असत्येवर्त्मनि स्थित्वा ततः सत्यं समीहते" इति भर्तृहरीणां कथनं चरितार्थत्वे-लक्ष्यं प्रथमं लक्षणं तदनुयायि इति फलति। पाणिनिना लक्ष्यमवलम्यैव लक्षणमकारीत्यागमनमेव प्रक्रियाग्रन्थाः लक्ष्यप्रदर्शनार्थमेव प्रवृत्ताः, ततः लक्षणसमन्वय इति तेषां क्रमः। एवं भट्टिकाव्यमित्यादयः ग्रन्थाः आगमनविधिमनुसरन्ति। तत्र प्रयोगस्य प्राधान्यम्। न्यायशास्त्रेऽपि" **इन्द्रियार्थसन्निकर्षजन्यज्ञानं प्रत्यक्षम्**"इति लक्षणमुक्त्वा यदनुव्याख्यान द्वारा सोदाहरणं विशदी क्रियते। साहित्यशास्त्रेऽपि "**गद्यपद्य मयं काव्यं चम्पूरित्यभिधीयते**" इति परिकल्पनानन्तरं तथा विधस्य काव्यस्य उत्पत्तिरिति। एवमेव "**वाक्यं रसात्मकं काव्यम्**" "**रमणीयार्थ प्रतिपादकः शब्दः काव्यम्**" इति लक्ष्यमनुलक्षण-प्रकल्पनम्। भगवान् पतञ्जलिरपि "**लक्ष्यलक्षणं व्याकरणम्**" इति आगमनविधिं स्वीकुर्वन्ति। छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वाऽस्माभिः प्रस्तूयन्ते। ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिः अनुसर्तव्यः इत्यर्थः। प्रयोग प्रमाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रियते। तत्सम्बन्धिनी तत्त्वानि उदाहरणानि वा निरीक्ष्य, तुलनां वर्गीकरणं च विधाय स्वयमेव नियमानां निर्धारणं छात्राः कुर्युः। अत्र विधौ ज्ञातादज्ञातं प्रति, विशेषात्सामान्यं प्रति, स्थूलात्सूक्ष्मं प्रति, इत्यादीनि शिक्षण-सूत्राण्यन्तर्निहितानि वर्त्तन्ते। Induce इति आंग्लधातोः अंगीकरणम् तत् Induce

ment इति व्यवह्रियते। Induce ment माध्यमेन या पद्धतिः प्रचलति सा आगमन पद्धतिः [Inductive method] इति व्यवह्रीयते। समानधर्मसहितपदसमूहान् समानवर्गेषु वर्गीकृत्य छात्राणां साहाय्येन तानि श्यामफलके लेखापनीयानि। यथा- नर+इन्द्र=नरेन्द्र, देव+इन्द्र=देवेन्द्रः, लंका+ईश=लंकेशः, पुरुष+उत्तमः=पुरुषोत्तमः, यथा+उचितम्=यथोचितम्, महा+ऋषिः=महर्षि, अत्र प्रथम पदस्यान्ते विद्यमान अज्वर्णः कः ? द्वितीय पदस्यादौ विद्यमान अज्वर्णः कः इति प्रष्टव्यः। प्रतिपूर्वपदस्यान्ते ह्रस्व/दीर्घ अकारः स्यात्। प्रत्युत्तरपदस्य आदिमवर्ण अज्वर्णेषु कोऽपि वर्णः स्यात्। (अ आ+इ ई=ए, अ आ+उ=ओ, अ आ+ऋ=अर्,) ह्रस्व दीर्घ अकारस्य ह्रस्व दीर्घ इ उ ऋ वर्णाः परतो भवन्ति चेत् क्रमशः ए ओ अर् आदेशाः भवन्ति, एतदपि छात्रैः स्वयं निष्कासनीयम्।

**आगमनविधेः सोपानानि**–अत्र प्रमुखतया चत्वारि पदानि शिक्षणोपयोगीनि अनुस्रियन्ते। यथा–

**1. उदाहरण प्रस्तावः**—छात्राणां समक्षं समानोदाहरणानि प्रस्तूयात् शिक्षकः। व्याकरण-शिक्षणावसरे अध्यापकः गणेशः, छात्रोपस्थिति, महर्षि, शब्दान् प्रस्तौति। छात्राः सावधानं उदाहरणानि श्रृण्वन्ति, पश्यन्ति, पठन्ति च।

**2. निरीक्षणम्**–प्रस्तुततत्त्वानां तुलनात्मकं निरीक्षणमेव द्वितीयं पदं भवति। प्रस्तुतोदाहरणे छात्राः विश्लिष्य विवेचयन्ति।

**3. नियमनिर्धारणम्**–तत्त्वानां निरीक्षणात्परं नियमपरिकल्पनन्नामेव तृतीयं पदम्। पूर्वोक्तान् शब्दान् विच्छिद्य नियमं परिकल्पयन्ति। "अकाराकाराभ्यां सह इकारईकारयोः मेलनेन एकारः एकादेशः भवति। एवं अकाराकाराभ्यां सह उऊकारयोः मेलनेन ओकारः भवति। तथा अकाराकाराभ्यां सह ऋकारस्य मेलनेन 'र' इति च भवति" इति नियमं निर्धारयन्ति।

**4. परीक्षणम्**–निर्धारितस्य नियमस्य लक्ष्ये पुनः परीक्षणमेव चतुर्थ सोपानम्। यथा-उपेन्द्र, गंगोदकम्, राजर्षि, इत्यादि नवोदाहरणैः स्वीकृतं नियमं परीक्ष्य प्रमाणयन्ति।

**आगमनपद्धत्याः गुणाः**

1. छात्राः सूत्राणि सूत्रार्थानि च स्वयं जानीयुः।
2. सूत्र निर्माणं परिभाषा निर्माणं च स्वयं क्रियते, अतः बहुकालपर्यन्तं विस्मर्तुमवकाशो नास्ति।
3. सूत्राणि परिभाषाश्च स्वयं निर्मिता इति हेतोः कण्ठस्थीकरणस्यावश्यकता नास्ति।
4. उदाहरणान्याधारीकृत्य व्याकरणाध्यापनं प्रचलेत्।
5. अनया व्याकरणाध्ययने छात्राः अभिरूचिं प्रदर्शयेयुः।
6. स्वयं कृते अधिकतया प्राधान्यं भवेत्।
7. सन्दर्भानुसारम् व्याकरणमधीयते।
8. पाठ्यपुस्तकानां साहाय्येन व्याकरणाध्ययनं भवति, अतः अध्ययने छात्राः भीता न भवेयुः।

9. व्याकरणाध्ययनाय एषा सुलभा पद्धतिः।
10. लक्ष्यं प्रदर्श्य लक्षणं कल्प्यते अतः छात्राः रुचिं प्रदर्शयेयुः।
11. छात्राः अत्यन्तं सक्रियाः भवन्ति।

**आगमनपद्धत्यां विद्यमानाः दोषाः**

1. अध्यापकानां कृते क्लेशः अधिकः भवति अस्यां पद्धत्याम्।
2. शास्त्रगतानि उदाहरणानि ज्ञातुमवकाशो नास्त्यस्याम्।
3. व्याकरण शिक्षणे समयः बहुः अपेक्षितः भवेदस्याम् पद्धत्याम्।
4. सम्बद्धोदाहरणानामनुस्मरणमपि क्लेशः भवेत् छात्राणाम्।

**(ख) निगमनविधिः—**Deductive method

**अर्थ**–लक्षणमनुलक्ष्यप्रदर्शनन्नाम निगमनविधिरिति। जोसफ लेण्डन् स्पष्टयति– ''शिक्षणं निगमनविधिद्वारा प्रथमं परिभाषा नियमो वा पाठ्यते। ततः सावधानमर्थ व्याख्याय, प्रयोगान् प्रदर्श्य तत्वानि स्पष्टीक्रियन्ते'' इति। ''अस्मिन् विधावध्यापकः प्रथमं नियमान् समुपस्थापयति। काचनोदाहरणानि प्रदर्श्य उक्तनियमान् लक्ष्ये समन्वेति''। लक्षणात् लक्ष्यं प्रति गच्छति निगमनविधिः। नियमान् प्रस्तूय प्रयोगप्रदर्शनं निगमनं भवति। लक्षणमनु लक्ष्य प्रदर्शनन्नाम निगमनविधिरिति। वस्तुतः आगमन–निगमन–पद्धत्योर्मध्ये विरोधः न भवति। आगमनपद्धत्याः कृते निगमन पद्धतिः पूरका भवितुमर्हति। सूत्रं सम्पूर्णतयावगाहनपर्यन्तं आगमन–पद्धतिराश्रयणीया, तदनन्तरं निगमन–पद्धतिः आश्रयणीया। निगमन पद्धतेः परम्परागत पद्धतिः: सूत्रपद्धतिः लक्षणपद्धतिरिति नामान्तराणि सन्ति।

Deduce इति आंग्ल भाषायाः धातुः अस्य मूलम्। तेन Deductive method प्रचलन्ति। सूत्रमनुसृत्य लक्ष्यानुस्मरणम् इति अस्यार्थः भवति। विधिरयं सामान्याद्विशेषं प्रति, काल्पनिकात्सत्यं प्रति, स्थूलात्सूक्ष्मं प्रति, इत्यादीनि शिक्षण–सूत्राण्याश्रित्य वर्तते। उपरि निर्दिष्टानां समालोचनेनेदं स्पष्टं प्रतीयेत यत् निगमनन्नाम नियमानां, सूत्राणां, लक्षणानां वा प्रस्तावानन्तरं उदाहरणरूपेण प्रयोगप्रदर्शनमेवेति। यथा–''इको यणचि''इत्यत्र ''इकः स्थाने यण् स्याद् अचि परे'' इति नियममुक्त्वा 'प्रति+अपि'इत्युदाहरणे नियमस्य समन्वयः क्रियते निगमनविधौ।

**निगमनविधेस्सोपानानि**–अस्य विधेः प्रयोगः क्रमबद्धरूपेण कानिचन् सोपानान्याश्रित्य क्रियते। तत्रक्रमे अधोलिखितपदानि भवितुमर्हन्ति–

**1. नियमः—**छात्राणांपुरतः कस्यचित्नियमस्योपस्थापनं क्रियते। यथा–शिक्षकः ''नमः स्वस्ति स्वाहास्वधाऽलं वषट्योगाच्च'' इति नियममुपस्थापयति।

**2. स्पष्टीकरणम्**–उक्त नियमस्य सरलैः वाक्यैः स्पष्टतया प्रतिपादनमेव भवति। यथा–पूर्वोक्तस्य सूत्रस्य स्पष्टप्रतिपादनं एवं भवितुमर्हति–नमः, स्वस्ति, स्वाहा, स्वधा, अलं, वषट् इति पदानां योगे चतुर्थी विभक्तिरेव भवति।

**3. प्रयोगप्रदर्शनम्**– उक्त नियमस्य लक्ष्ये समन्वयः अत्र क्रियते। यथा–प्रकृतोदाहरणे

शिक्षकः **"हरये नमः, पुत्राय स्वस्ति, अग्नये स्वाहा, पितृभ्यः स्वधा, इन्द्राय, वषड्"** इति प्रयोगान् प्रदर्श्य पूर्वोक्तं नियमं समन्वेति। ततः नियमं स्पष्टयति च।

**4. पुनः परीक्षणम्**–पृथगुदाहरणं प्रस्तूय नियमस्य परीक्षणं विधीयते। यथा-व्यवहारे एषां शब्दानां योगे नियमः कथं प्रवर्तते इति दर्शयितुं शिक्षकः व्यावहारिकाणि वाक्यानि उपस्थापयति।"शिवाय नमः, शिष्याय स्वस्ति, ब्रह्मणे नमः, "इति व्यवहारान् प्रदर्श्य नियमस्य पुनः परीक्षणं कारयति। उदाहरणानि प्रस्तौतुं छात्रानपि प्रेरयति।

**निगमनपद्धत्याःगुणाः**

1. अनया पद्धत्या स्पष्टतया व्याकरणमध्यापितुं शक्यते।
2. छात्राःअनया पद्धत्या व्याकरणनियमान् ज्ञात्वा सुशब्दापशब्दनिर्णायकाःभवितुं शक्नुवन्ति।
3. एषा मनोविज्ञाननियमविरूद्धा तथापि उच्चकोटौ विद्यमानाः बहवः वैयाकरणाः अनया पद्धत्या एव व्याकरणमधीत्य प्रख्याताः जाताः।
4. अनया पद्धत्या व्याकरणमधीताश्छात्राः भाषागताशुद्धीः न्यूनं कुर्युः। अल्पं लिखतु वदतु वा तेषां लेखने पठने च दोषाः न स्युः।
5. अस्यां भाषायां विशिष्ट ज्ञानसम्पादनार्थं एषा पद्धतिरावश्यकी इति।
6. अध्यापकस्य कार्यं सरली करोति।
7. छात्राः सक्रियाः भवन्ति, अल्पीयसि काले ज्ञानं पापयन्ति।
8. स्मरणशक्तिः वर्धयति, अतः छात्राः नियमान् कण्ठस्थं कुर्वन्ति।

**निगमनपद्धत्याः दोषाः**

1. पद्धतिरेषा अमनोवैज्ञानिकी।
2. अस्यां पद्धत्यां संज्ञा, परिभाषा, सूत्राणि च अत्यधिकानि भवन्ति, अतः एतेषां सर्वेषां कण्ठस्थीकरणम् वहुक्लेशकरमेव।
3. अनया पद्धत्या छात्राः व्याकरणम् अध्येतुं अभिरूचिं न प्रदर्शयेयुः।
4. व्याकरणाध्ययने छात्राः वहून् क्लेशानुभवेयुः।
5. नीरसतामुत्पादयति च।

**आगमननिगमनविधिः**

आगमनविधिः निगमनविधि, इति द्वावपि परस्परं विरूद्धे मार्गे प्रचलतः। तथाऽपि एतौ परस्परं न्यूनताः पूरयतः। अत एव शिक्षाविद् एतयोरैक्यं वाञ्छन्ति। यतो हि आगमनविधिः नियमं निर्धायति परीक्षणात्मकपदे निगमनविधिवदेव कर्मं करोति। एवं निगमनविधिरपि उदाहरणानि प्रस्तूय समन्वयंसोपाने आगमनविधिवदेव कर्मं करोति। एवं परस्परं पूरकौ वर्तेते। अतः एतयोः न्यूनताः तथैव दूरीकृता भवन्ति। यथा एतौ संयोजितौ संश्लिष्टौ वा भवेताम्। एतयोः सार्थकं संयोजनं शिक्षणे विशिष्य व्याकरणाध्यापने लाभप्रदं भवेत्। वस्तुतः एतयोः पारस्परिकः सम्बन्धः तादृशः वर्तते, यथा आगमनेन विना निगमनं न भवति, निगमनेन विना

आगमनं च न भवति। अतः एतौ संयोज्य "आगमननिगमनविधि" इति नाम्नैव व्यवहरेत् प्रयोजयेच्च। यदि उपर्युक्तरीत्या संयुक्त विधिना शिक्षणं क्रियेत, तर्हि निस्संशयेन साफल्यम् अपि अवाप्येत। एतादृशमेव शिक्षणं व्यावहारिकं सत्यम्, वैज्ञानिकं च भवेत्। अतः अध्यापकाः अनेन संयुक्तविधिना व्याकरणमध्यापयितुं शक्नुयन्ते। अनेन छात्राणां बौधिकविकासः, क्रियाशीलताया विकासः, स्थायिज्ञानम् इत्यादयः लाभाः भवन्ति।

## (ज) दण्डान्वय-खण्डान्वयविधिः

**दण्डान्वय-पद्धतिः**

गद्यम् अन्वयं विना पाठयितुं शक्यते पद्यन्तु न तथा, गद्ये कर्ता, कर्म, क्रिया च क्रमशः भवन्ति, पद्ये न तथा भवन्ति। भावावगाहनाय कर्तृकर्म क्रियादीनां कश्चन क्रमःआवश्यकः। ईदृशक्रमज्ञांनाय अन्वय आवश्यकः। एतदर्थं श्लोके विद्यमानं प्रधानं वाक्यमन्वेषणीयम्। प्रधानवाक्यस्यान्वेषणानन्तरं कर्ता-कर्म -क्रियादीनां ज्ञानमावश्यकम्। तदनन्तरं क्रिया-विशेषणानि अव्ययानि च योजनीयानि। एवं रीत्या कर्तृकर्मक्रियादीनां माध्यमेन यत्राध्यापनं भवति तत्र दण्डान्वयपद्धतिराश्रिता इति वक्तुं शक्यते। पद्यखण्डं पूर्णवाक्ये अर्थात् दण्डे बोधब्यः। यथा–

**उष्ट्राणां विवाहेषु गीतं गायन्ति गर्दभाः।**
**अन्योऽन्यं प्रशंसन्ति अहो रूपमहो ध्वनिः।**

अस्मिन् पद्ये कः कर्ता \ गर्दभः। का क्रिया \ गायन्ति, प्रशंसन्ति। किं कर्म? गीतं, अन्योऽन्यम्। "उष्ट्राणांविवाहेषु गर्दभाः गीतं गायन्ति तथा अहो रूपम् अहो ध्वनिः इति कथित्वा अन्योऽन्यं प्रशंसन्ति इति दण्डान्वयः।

**आद्ये विशेषणं योज्यं विशेष्यं तदनन्तरम्।**
**क्त्वाणमुल्यप् प्रभृत्येवं पूर्वं दण्डान्वये भवेत्।।**

अस्यां पद्धत्यां व्याकरणस्य प्रधानं स्थानमस्तीति। अत्र कर्त्ता-कर्म-क्रिया-विशेषण-विशेष्य-प्रभृतीनि उन्नतस्तरे विद्यमानाः छात्राः एव अनुस्मर्तुं प्रभवन्ति। अतः लघुबालकानां कृते समुचिता एषा प्रणाली। मनोवैज्ञानिकसिद्धान्तानुकूला प्रणाली।

**अस्याःपद्धत्याःगुणाः**

1. अर्थावगाहने क्लेशः न भवति।
2. विषयं सम्पूर्णरूपेण ज्ञातुं शक्यते।
3. श्लोकस्य भावावगाहनं सरलतया भवति।
4. उन्नतस्तरे एषा अत्यन्तोपयुक्ता इति।

**अस्याःपद्धत्याःदोषाः**

1. पद्धतिरेषा नीरसा।

2. प्राथमिक-माध्यमिक-स्तरेषु एषा नैवोपयुज्यते।
3. छात्राणां स्वयं कृते प्राधान्यं न भवेत्।
4. रसानुभूतिः सौन्दर्याभूत्याभावः।

**3. खण्डान्वयपद्धतिः**—खण्डान्वयपद्धत्याः नामान्तरमस्ति यत् प्रश्नोत्तरविधिरिति। दण्डान्वयपद्धति अपेक्षया एषा पद्धतिः उत्तमा अनया मनोरंजकतया प्रभावोत्पादकतया च कवितां शिक्षयितुं शक्यते। मनोविज्ञानसिद्धान्ताधारिता इति हेतोः छात्राः अपि अध्ययने आसक्तिं प्रदर्शयेयुरनया पद्धत्याः। इयम् दण्डान्वयप्रणाल्याः विपरीततया स्यात्।

**अन्वयप्रबोधो खण्डान्वयस्य परिभाषा**

**कर्तृकर्मक्रियास्तावत् श्लोके योज्यास्ततः परम्,**
**किम् रूपं पुरस्कृत्य तृतीयादिविभक्तिः नियोजयेत्।**
**"ल्यबन्तञ्च तुमन्तञ्च क्तवान्तं कर्मविभूषितम्।**
**खण्डान्वये पुनः प्रश्नः पूर्वमन्ते प्रयोजयेत्"।**

दण्डान्वय इव खण्डान्वयेऽपि प्रथमतया प्रधानं वाक्यमन्वेष्टव्यम् भवति। यदा प्रधानं वाक्यमन्विष्टं भवति प्रश्नानां एवं समाधानद्वारा वाक्यशेषांशस्य ज्ञानं सम्पादनीयम्। वाक्यशेषांशज्ञानाय पद्धत्यामुपयुक्तानां प्रश्नानां एवम् उत्तरद्वारा कर्त्ता, कर्म, क्रिया, विशेषणम्, अव्ययम् इत्यादीनि निष्कासनीयानि। दण्डान्वयप्रणाल्यां प्रश्नाः व्याकरणाधारिताः भवन्ति। किन्तु अस्यां पद्धत्यां प्रश्नाः साहित्यमाधारीकृत्य भवन्ति। कर्तृसम्बद्धान् अंशान् छात्रेभ्यः निष्कासनाय कः, किम्, केन, कस्मै, कस्मात्, कस्य, इत्यादीनां सर्वनामशब्दानां माध्यमेन प्रश्नाः पृष्टाः भवेयुः। विशेषणानां ज्ञानाय कीदृशम्, किं भूतम्, कथं भूतम्, इत्यादयः प्रश्नाः प्रष्टव्याः। क्रियाणां ज्ञानाय किं करोति, किं कृत्वा इत्यादयः प्रश्नाः प्रष्टव्याः। क्रिया विशेषणानां ज्ञानाय कुतः, कुत्र, कदा, कथं, किमर्थम् इति रीत्या प्रश्नाः प्रष्टव्याः। अस्यां पद्धत्यां प्रश्नोत्तराणां विशेषमहत्त्वं भवति। चयनीकृतप्रश्नानां एवं समाधान द्वारा श्लोकस्य भावं निष्कासयितुं शक्यते। खण्डान्वयप्रणाल्याः श्लोक-शिक्षणे सूक्ष्मात् सूक्ष्मभावग्रहणं काव्यगत सौन्दर्यानुभूतिं एवं च रसास्वादनं भविष्यन्ति। यथा-

**विद्या ददाति विनयं विनयाद् याति पात्रताम्,**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मः ततः सुखम्।**

**अत्र खण्डान्वयः प्रश्नाः**

1. विद्या किं ददाति? विनयम्।
2. विनयाद् किं याति? पात्रताम्।
3. धनं कस्मात् आप्नोति? पात्रत्वात्।
4. धनात् कं याति? धर्मम्।
5. ततः परं किं आप्नोति? सुखम्। श्लोकशिक्षणस्य एषा पद्धतिः मनोविज्ञानसिद्धान्तानुकूला स्यात्।

**अस्याः पद्धत्याः गुणाः**

1. अनया पद्धत्याः सरलतया प्रभावोत्पादकरीत्या च पाठं पाठयितुं शक्यते।
2. पद्धतिरेषा मनोविज्ञानसिद्धान्ताधारिताऽस्ति।
3. संस्कृत भाषामाध्यमेन श्लोकः पाठ्यते, फलतः संस्कृतभाषणे निपुणा भवेयुः छात्राः।
4. छात्राणां सर्जनात्मकशक्तिः विकसिता भवेत्।
5. प्रत्यक्षपद्धत्या पाठनं भवतीति हेतोः संस्कृतशिक्षणे पठने लेखने च दक्षाः भवेयुः छात्राः।
6. छात्राः अर्थान् भावाञ्च जानीयुः।
7. सौन्दर्यानुभूतिं रसानुभूतिञ्च सम्पादयितुं शक्यते।
8. सूक्ष्मातिसूक्ष्मभावाः ज्ञातुं शक्यन्ते।

**अस्याः पद्धत्याः दोषाः**

1. व्याकरणांशानां कृते अवकाशः नास्ति।
2. प्राथमिकस्तरे एषां नोपयोक्तमर्हति।
3. सर्वेछात्राः संस्कृतभाषायां समाधानानि दातुं न प्रभवन्ति।
4. आरम्भिकस्तरे इयं पद्धतिः कठिना भवितुमर्हति।

## (झ) अन्वयव्यतिरेक-विधिः

अस्मिन् विधौ अध्यापकः कथावाचकस्य इव नैक दृष्टान्तमाश्रित्य श्लोकान् स्पष्टयति। (तत्सत्वे तत्सत्वम् अन्वयः, तदभावे तद् अभावः व्यतिरेकः, यथा-मंगलसत्वे ग्रन्थसमाप्तिः मंगलाभावे-ग्रन्थसमाप्ताभावः।) अस्मिन् विधौ प्रत्येकपदानि भावभाषादृष्ट्या परीक्षीयन्ते भाषा-दृष्ट्या विचारयन् अध्यापकः शब्दस्य महत्त्वं, तद्स्थाने शब्दान्तरप्रयोगेण अर्थ-दोष-माधुर्य-वाक्यविन्यासोपरिपतितप्रभावादेः संकेतं करोति। शब्दशक्तिछन्दोऽलङ्कार-प्रसाद-माधुर्यादीनां ज्ञानं कारयति। भावदृष्ट्याबहुनाम् उदाहरणानां साहाय्यं गृहणाति। अन्तः कथामाध्यमेन, ऐतिहासिक-सन्दर्भमाध्यमेन विषयःसरलतया स्पष्टो भवति। अध्यापकैः भावानुसारोचित-भावभङ्गिमया भावाभिव्यञ्जकतया अभिनयेन सह श्लोकस्य सस्वरवाचनं करणीयम्।

**अन्वयव्यतिरेकविधौ उद्देश्यानि**

1. सरस-सरलश्लोकानां सुभाषितपद्यानां कण्ठस्थीकरणम्।
2. प्रहेलिकानादीनाम् उपदेशः।
3. अक्षरक्रीडा-पदक्रीडामाध्यमेन शिक्षणम्।
4. अन्त्याक्षरीक्रीडा द्वारा पद्यप्रस्तुतीकरणस्य अभ्यासः।
5. प्रसिद्धकवीनां जयन्त्युत्सव पालनम्।
6. गीतायाःसामूहिकपाठनाभ्यासः।
7. व्यस्ताक्षरीक्रीडायाः अभ्यासः।

साहित्यक-पौराणिक-ऐतिहासिक-वैज्ञानिक-अंशानां पाठनप्रसङ्गे अस्याःमहान् उपयोगः। अपि च भगवत्पादस्य श्रीशङ्कराचार्यस्य उपनिषद्भाष्यस्य, भगवद्गीतायाः ब्रह्मसूत्राणां च टीका पठनसमये इयं पद्धतिः स्वीकार्या। तथा व्याख्याने, शास्त्रार्थे, धार्मिकप्रसङ्गे, उपदेशे चेयं समुचिता परन्तु कक्ष्याशिक्षणे समयाभावात् स्तरस्य अननुकूलत्वाच्च पद्धतिरियं नानुसर्त्तव्या। अत्र विषयावबोधनाय (क) विषयः, (ख) संशयः, (ग) पूर्वपक्षः, (घ) उत्तरपक्षः, (ङ) समन्वयः, इति पञ्चविषयाः आवश्यकाः। यथा-

**सम्पूर्णकुम्भो न करोति शब्दम् अर्धो घटो घोषमुपैति नूनम्।**
**विद्वान् कुलीनो न करोति गर्वम् अल्पो जनो जल्पति साट्टहासम्।।**

**पदच्छेदः**—सम्पूर्णकुम्भः, न करोति, शब्दं, अर्धः, घटः, घोषम्, उपैति, नूनम्, विद्वान्, कुलीनः, न गर्वं करोति, अल्पः, जनः, जल्पति, साट्टहासम्।

**पदार्थोक्तिः**—सम्पूर्णकुम्भः-पूर्णःघटः, शब्दं-ध्वनिं, न करोति, अर्धः—अर्धभागे एवं जलं यत्र अस्ति सः, घटः—कुम्भः, नूनम्-अवश्यं, घोषं-शब्दं, उपैति-प्राप्नोति, कुलीनः—सद्वंशभवः, विद्वान्-पण्डितः, गर्वम्-अहङ्कारं न करोति, अल्पः—स्वल्पः, जनः—पुरुषः, साट्टहासं-आडम्बरेण सह, जल्पति-निरर्थकं वदति।

**विग्रहवाक्यानि**-सम्पूर्णश्चासौ कुम्भश्च-सम्पूर्णकुम्भः—कर्मधारय-समासः। अट्टहासेन सह-साट्टहासम्-तृतीयातत्पुरुषसमास।

**अन्वयव्यतिरेकविधेःगुणाः**

1. स्मरणशक्तेः वर्धनं भवति।
2. गुरुशिष्यसम्बन्धः सुदृढ़ो भवति।
3. मौखिक-कार्याय अपेक्षितं ध्यानं दातुं शक्यते।
4. अध्यापकाःसक्रियाः, छात्राः निष्क्रियाः भवन्ति।
5. संस्कृतभाषायाःशुद्धं, विस्तृतं स्वरूपमवगम्यते।
6. उच्चारणसामर्थसम्पादनम्।

**अन्वयव्यतिरेकविधेःदोषाः**

1. शिक्षणं सर्वं विषयकेन्द्रितं भवति।
2. जीवकोपार्जने असमर्था भवन्ति।
3. व्यावहारिकज्ञानं न स्यात्।

卐 卐 卐

# 7

# अधोलिखितानां-शिक्षणम्

# Teaching of the Following

(क) उच्चारणशिक्षणम् (ख) गद्यशिक्षणम्, (ग) पद्यशिक्षणम्,
(घ) नाटकशिक्षणम्, (ङ) उपाख्यानशिक्षणम्, (च) व्याकरणशिक्षणम्,
(छ) रचनाशिक्षणम्, (ज) अनुवादशिक्षणम्।

## (क) उच्चारणशिक्षणम्:

Teaching of Pronunciation

संस्कृतभाषाशिक्षणे पठन-पाठनयोः उच्चारणस्य महत्त्वमत्यधिकं विद्यते। मुखावयवानां माध्यमेन यः ध्वनिः स्पष्टरूपेण ध्वनितः भवति, तत् उच्चारणं कथ्यते। पठन-पाठनयो उच्चारणदोषादेव वाचने लेखने च दोषाः भवन्ति। मौखिकाऽभिव्यक्तिर्भाषा शिक्षणस्य आधारशिला वर्तते। अभिव्यक्तिः सामान्यतः द्विविधा भवति-1. मौखिकाऽभिव्यक्तिः, 2. लिखिताऽभि-व्यक्तिश्चेति। संस्कृतज्ञानां दृष्टिकोणे शुद्धोच्चारणस्य महिमाखल्वेवं प्रतिपद्यते-

**यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो माऽभूत् सकलं शकलं सकृच्छकृत्।।**

सकारस्य शकारत्वेनोच्चारणे यंऽनर्थः सम्भवति सोऽत्र प्रदर्शितः। अशुद्धोच्चारणम् अल्पज्ञतायाः, अयोग्यतायाः, असभ्यतायाश्च परिचायकं भवति। अतः बाल्यावस्थायामेव शुद्धोच्चारणस्य प्रशिक्षणम् आवश्यकं भवति। पाणिनीयशिक्षा इत्यस्मिन् ग्रन्थे शुद्धोच्चारणस्य महत्तां निम्नश्लोकमाध्यमेन प्रस्तुतम्-

**मन्त्रोहीनः स्वरतो वर्णतो वा, मिथ्या प्रयुक्तो न तदर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्।।**

यदि स्वरं वर्णं वा विकृतं कृत्वा कस्यापि मन्त्रस्य अशुद्धोच्चारणं क्रियते तदा सा अशुद्धा वाणी कार्यसिद्धि-अर्थ कृतं यज्ञं, स्वयं यजमानं तथैव नश्यति यथैव स्वरं विकृतकरणे इन्द्रस्य शत्रुः वृत्रासुरः मारितम्।

**( क ) मौखिकाऽभिव्यक्तये निम्नलिखिता विन्दवोऽपेक्षिता भवन्ति–**

(क) शब्दोच्चारणम्, (ख) अक्षराभिव्यक्तिः, (ग) गतिः, (घ) [illegible], (ङ) विरामः, (च) उचितवाचनमुद्रा, (छ) सुस्वरता, (ज) उचितध्वनिनियमः इति।

**( ख ) अभिव्यक्तिसमये वाचनाऽन्तर्गताः प्रायशश्चतुर्दशदोषाः सम्भाव्यन्ते, ये निम्नाङ्किताः सन्ति–**

1. पठनकाले शङ्कितत्वम्,
2. भयभीतत्वम्,
3. धृष्टपठनम्,
4. क्रन्दितपठनम्,
5. अस्पष्टपठनम्,
6. सानुनास्यपठनम्,
7. श्रुतिकटुपठनम्,
8. मूर्धन्यपठनम्,
9. स्वरराहित्यम्,
10. नीरसपठनम्,
11. बलाघातवैषम्यम्,
12. व्याकुलता,
13. व्यामिश्रम् अस्पष्टपठनम्,
14. अतालव्यमिव पठनम्,

महर्षिणापाणिनिनोक्तं यच्छुद्धतापूर्वकं वर्णानाम् उच्चारणेनेहलोके सम्मानस्तु पुरोभवत्येव ब्रह्मलोकेऽपि तावत् प्रतिष्ठा प्रतिपद्यते–

**एवं वर्णाःप्रयोक्तव्या नाऽव्यक्ता न च पीडिताः।**
**सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते।। 31।।**
**सुतीर्थादागतं व्यक्तं स्वाध्यायं सुव्यवस्थितम्।**
**सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते।। 51।।**

**( ग ) अशुद्धोच्चारणस्य कारणानिः**

**1. अज्ञानम्**–स्थानप्रयत्नानुसारं वर्णानां उच्चारणस्य उचितं स्वरूपं बालकाः न जानन्ति। छात्राः श, स, ष इत्येतेषां वर्णानाम् उच्चारणभेदं न जानन्ति। एवमेव ब-व, ऋ-र, ई-इ, ण-न इत्येषां वर्णानामुच्चारणे दोषं कुर्वन्ति।अनेके छात्राः अज्ञानतावशादपि अशुद्धम् उच्चारयन्ति।

**2. प्रयत्नलाघवम्**–उच्चारणे परिश्रममसहमानाः बालकाः अशुद्धोच्चारणं कुर्वन्ति। यथा-ब्राह्मणः—बरामनः, रवीन्द्रः—रविन्दरः, रघुवंशः—रगुवंसः, प्रसादः—परसादः इत्यादयः।

**3. भ्रमः**–केषाञ्चित् भ्रमात्, प्रमादाद्वा वर्णानामुच्चारणमन्यथा कुर्वन्ति। यथा-काकः—कागः, प्रेमचन्द्रः—प्रेमचन्दः, ज्ञानम्-ग्यानम्, वसन्तः—बसन्तः इत्यादयः।

**4. प्रादेशिकभाषाप्रभावः—**भारतस्य विभिन्नेषु प्रदेशेषु जनानां विभिन्नाः उच्चारणप्रकाराः संस्कृतस्योच्चारणं दूषयन्ति। यथा-कृष्णः—क्रुष्णः, धनम्-दनम्, उत्सवः—उल्सवः, सिंह-सिंघ, पुरुष-पुरुख, परमात्मा-प्रमात्मा, मेघ-मेग, शिक्षा-शिक्खाः, शक्यते-शक्कते, इत्यादयः।

**5. भावाऽतिरेकः—**कदाचिद् भावावेशे प्रेमक्रोधशोकादीनाम् अतिरेकादपि छात्रा अशुद्धम् उच्चारयन्ति। यथा-गच्छतु स्थाने गछतु, आनयन्तु स्थाने आनतु'।

**6. अनवधानम्-**उच्चारणसम्बद्धा अनेका अशुद्धयस्तावद् अनवधानात् प्रमादाद्वा प्रभवन्ति। प्रयशोऽनवधानमुच्यमानाः कठिनशब्दाः स्खलितोच्चारिता भवन्ति। यथा-किङ्कर्त्तव्यविमूढ इति वक्तव्ये किंकर्त्तव्यविमूढः, स्थाने इति इस्थाने, स्नान इति अस्नान इत्याद्युच्चारणम्।

**7. अध्यापकद्वाराऽशुद्धोच्चारणम्—**अध्यापकाः एवं बालकानामादर्शरूपाःभवन्ति, छात्रश्चाऽनुकरणात्मकप्रवृत्तिवशादधिकतरम् अनुकरणं स्वशिक्षकाणामेव कुर्वन्ति। अध्यापकस्यैव उच्चारणं यदि अशुद्धं भवति तर्हि आदर्शाऽनुकाराश्छात्रा अपि अशुद्धमुच्चारयितुं प्रवर्त्तन्ते। यथा-सुयशः स्थाने शुयसः, स्वागतम् स्थाने श्वागतम्।

**8. मनोवैज्ञानिककारणम्—**बालकेषु भय-सङ्कोच-भावनाग्रन्थि-प्रभृतिभिःमनोवेज्ञानिक कारणैरपि उच्चारणसम्बन्धिन्योऽशुद्धयः समापतन्ति अर्थात् कैश्चिन्मनोवैज्ञानिककारणैः भाषण-प्रवाहेऽव्यवस्था उत्पद्यते। यया उच्चारणमशुद्धतामधिगच्छति।

**9. अन्यकारणानि—**महर्षिपाणिना अपि अशुद्धोच्चारणस्य नैकानि कारणानि परिगणितानि सन्ति तद् यथा–

**उपांशुदष्टं त्वरितं निरस्तम्, बिलम्बितं गद्गदितं प्रगीतम्।**
**निष्पीडितं ग्रस्तपदाक्षरं च, वदेन्न दीनं न तु सानुनास्यम्।। 35।।**

संस्कृतभाषायामक्षरध्वनयोः हि विनिश्चिताः सन्ति। तदुच्चारणस्थानायपि च सुनिश्चितानि वर्तते। अशुद्धिध्वन्युच्चारणात् शब्दोच्चारणमपि अशुद्धिं प्राप्नोति। कर्हिचिद् उदात्तानुदात्तस्वरितानां ह्रस्वदीर्घादीनाञ्चोच्चारणे भ्रमवशात्तथाविधाऽशुद्धयो जायते।

**( घ ) उच्चारणशिक्षायाः उद्देश्यानि**

1. परिष्कृत-परिनिष्ठितसंस्कृतेन हेतु शब्दोच्चारणस्य शिक्षाप्रदानकरणम् उच्चारणशिक्षायाः उद्देश्यं वर्तते।

2. संस्कृतं संश्लिष्टभाषा वर्तते। अत्र संस्कृते सन्धिनिष्ठानि समासनिष्ठानि च पदानि बहुमात्रापु मिलन्ति। अतः शुद्धोच्चारणमाध्यमेन एतान् शब्दान् अवबोधे सरलता जायते।

3. शुद्धोच्चारणस्य शिक्षया छात्रान् पदार्थावबोधने सौविध्यं मिलति।

4. शुद्धोच्चारणेन वर्णोच्चारणस्य भाषापरिमार्जनस्य मार्गप्रशस्तं भवति।

5. संस्कृतम् अनेकानां भारतीय-आर्यभाषाणां जननी वर्तते। अतः संस्कृतं शुद्धोच्चारणे अन्यानां भाषाणां शब्दानाम् अवबोधने सौविध्यं प्राप्नोति।

**(ङ) उच्चारणशोधनस्य उपाया:**

1. क्रियापदस्य शुद्धि-अर्थं कार्यं कृत्वा प्रदर्शनम्।
2. प्रत्यक्षवस्तुं दर्शयित्वा शुद्धोच्चारणं कारणीयम्।
3. विशेषणपदानां शुद्धि-अर्थं तत्सदृशै: अन्यै: वर्णै: सह तेषां शब्दानाम् उच्चारणं कारयेत्।
4. अध्यापकेन पुन: पुन: अभ्यासेन शुद्धोच्चारणं कारयेत्।
5. अभ्यासकार्यं दत्वा संशोधनकरणम्।
6. दृश्यश्रव्यसामग्रीमाध्यमेन शुद्धध्वनीनां बालकानां समक्षे प्रस्तुतिकरणम्।
7. शुद्धोच्चारणार्थं प्रतियोगिताया: आयोजनं करणम्।

**(च) उच्चारणशिक्षणविधय:**

स्वराणां, व्यञ्जनानाम्, अनुनासिकवर्णानां, संयुक्ताक्षराणाञ्च उच्चारणे सम्भवतां दोषाणां निवारणाय संस्कृताध्यापक: अवश्यं प्रयतेत। छात्राणां श्रवणेन्द्रियस्य, जिह्वाया:स्वरयन्त्रस्य वा दोषश्चेत् विशेषरूपेण निवारयेत्। शिक्षकस्योच्चारणं शुद्धं, स्पष्टम्, अनुकरणयोग्यञ्च भवेत्। दृश्यश्रव्यादि नवीन-यन्त्राणामुपयोग: दोषपरिहारे सहायक: स्यात्। केचन विधय: प्रस्तूयन्ते। यथा–

**1. अनुकरणविधि:**—संस्कृताध्यापक: वर्णानां, शब्दानाञ्च शुद्धोच्चारणं बोधयेत्। बालका: शिक्षकस्योच्चारणम् अनुकृत्य शुद्धोच्चारणं शिक्षन्ते।

**2. आवृत्तिविधि:**—क्लिष्टानां वर्णानां शब्दनाञ्च पुन: पुनरावर्तनेन उच्चारणाभ्यास: कर्त्तव्य:।

**3. अवरोधविधि:**—शीघ्रतामवरुध्य मन्दगत्या शुद्धोच्चारणं सम्पादनीयम्। शीघ्रभाषणे वाचने च अशुद्धम् उच्चरन्ति।

**4. पूर्णताविधि:**—सम्पूर्णवाक्यस्य स्पष्टमुच्चारणं ज्ञापनीयम्।

अध्यापके छात्रान् मात्रा-गति-विराम:—बलं-स्वराघात:, इत्यादीनामुच्चारणतत्वानां परिचयं दद्यात्। सन्धिविच्छेदेन, समस्तपदे पृथक्पदानां परिचयेन च उच्चारणं स्पष्टीकर्तव्यम्। दीर्घवाक्येषु अर्थानुसारं विरामेन शुद्धोच्चारणं सम्पादनीयम्। संस्कृताध्यापक: छात्राणां लज्जां, भयञ्च निवार्य स्नेहेन, सहानुभूत्या च उच्चारणं शिक्षयेत्।

## (ख) गद्यशिक्षणम्

वृत्तबन्धा-रहितं वाक्यं गद्यम्। सरलं व्यावहारिकं वाक्यं गद्यम् इति व्यवह्रियते। संस्कृत-साहित्ये पद्यस्य यादृशं प्रामुख्यमस्ति तादृशं प्रामुख्यं गद्यस्याप्यस्ति। संस्कृतसाहित्ये गद्यकाव्ये काव्यगुणा:, विशिष्यशैली च भवति। अनुभवज्ञा: वदन्ति यत् **''गद्यं कवीनां निकषं वदन्ति''** इति प्रशस्यते। संश्लिष्टता संक्षिप्तता च संस्कृतगद्यशैल्या: विशेषता भवति। विस्तृतविषयस्य संक्षेपेण कथने, अल्पस्य विषयस्य विस्तृतरुपेण वर्णने च संस्कृतगद्यं सक्षमं वर्त्तते। कोमलभावानां व्यक्तीकरणे, दुरूह-दार्शनिकविचाराणां प्रतिपादने च गद्यं सशक्तं माध्यमं

भवति। वैदिककालादारभ्य साहित्ये एकः प्रधानभाग इव अनुवर्त्तमानोऽस्ति, यजुर्वेदे प्रथमतया गद्यं द्रष्टुं शक्यते। यजुर्वेदारभ्य इदानीं यावत् गद्यमविच्छिन्नतया अस्माकं जन-जीवनस्य एव अनिवार्यभागः अस्ति। वस्तुतः समाजे पद्यस्यापेक्षया गद्यस्यैवाधिकं प्राथम्यं प्रदीयते। रसानुभूतेः पद्यं व्यवहाराय च गद्यं वर्त्तते। **''अपादः पदसन्तानो गद्यमाख्यायिका कथा''** अर्थात् गणमात्रानियमहीनःअपादः। एतादृशः पदसन्तानः सुप्तिङन्तपदसमुदायो गद्यमिति दण्डिना भणितम्। आधुनिकलोके पाश्चात्यरीतिमाश्रित्य सरलं व्यावहारिकं गणमात्रानियमवर्जितं वाक्यं गद्यम् (prose) इति व्यवह्रियते। गद्ये विषयस्य प्राधान्यं भवति। गद्य काव्येऽपि माधुर्यं सरलता च अनुभूयते।

'गद् व्यक्तायां वाचि' इति धातोः ''गदमदचरयमश्चानुपसर्गे'' इति सूत्रेण कर्मणि यत् प्रत्यये सति 'गद्यम्' इति शब्दः निष्पन्नो भवति। यस्य अर्थोऽस्ति-स्पष्टं कथनम् इति। गद्यते छन्दसां विना केवलं प्रबन्धैरेव विरच्यते इति गद्य शब्दस्य व्युत्पत्तिरस्ति। गद्य साहित्ये उल्लेखनीयाः ग्रन्थाः एते सन्ति, यथा-वासवदत्ता, कादम्बरी, हर्षचरितम्, दशकुमारचरितम्, एतानि काव्यानि उच्चकोटिं भजन्ते।

**( क ) गद्य-प्रभागः**

**( 1 ) वैदिकगद्यसाहित्यम्**-संस्कृतसाहित्यं प्राचीनतम-साहित्ये सर्वाधिकं समृद्धमस्ति। वैदिकगद्यं सरलं स्पष्टं च वेदेषु विद्यते। ब्राह्मणारण्यक-ग्रन्थेषु वैदिक-गद्यस्य विकसितं रूपं प्राप्यते। उपनिषदां गद्यं सरलं ऋजु च अस्ति।

**( 2 ) पौराणिकगद्यसाहित्यम्**-वैदिक-लौकिक-गद्ययोः समायोजनस्य कार्यं पौराणिक-गद्यं करोति। इदं गद्यं नितान्तालङ्कारिकं प्रसादपूर्णं च विद्यते।

**( 3 ) शास्त्रीयगद्यसाहित्यम्**-शास्त्रीयगद्यसाहित्ये महाभाष्य, कौटिल्य-अर्थशास्त्रम्, वासवदत्ता, कादम्बरी, दशकुमारचरितम्, न्यायमञ्जरी, काव्यादर्श, नाटकादि गण्यते।

**गद्यस्यप्रकाराः**

1. मुक्तकं,
2. उत्कलिकाप्रायं,
3. वृत्तगन्धिः,
4. चूर्णकं इति चतुर्विधम् साहित्यदर्पणकारेणोक्तम्।

अन्ये तु-1. कथा, 2. निबन्धः, 3. वर्णनम्, 4. आत्मकथा, 5. नाटकम्, इति मन्यन्ते।

**( ख ) संस्कृतगद्यस्यविशेषता**

**( 1 ) समासवहुलाशैली**-समासबहुलैव ओजसः प्रधानं लक्षणमस्ति।

**( 2 ) भाषातत्त्वानां ज्ञानम्**-संस्कृतगद्यमाध्यमेन छात्राः शब्दानां संरचनानां, उपसर्ग-प्रत्यय-सन्धि-समासादीनाञ्च ज्ञानं सौविध्येन प्रप्नुवन्ति।

**( 3 ) गद्यपद्ययोःसम्मिश्रणम्**-'संस्कृतम्' एका ईदृशीभाषा अस्ति, यस्यां गद्यपद्ययोः

प्रयोगः युगपदेव भवति। हितोपदेश-पञ्चतन्त्र-कथासरित्सागर-भोजप्रबन्धाद्याः गद्यपद्यमिश्रित-शैलीनां रचनास्सन्ति।

**(4) विचारविनिमयसिद्धान्तयोः वर्णनस्य उचितमाध्यमम्**-भावानामभिव्यक्तिः सारल्येन भवति।

**(ग) संस्कृतगद्यशिक्षणस्य उद्देश्यानि:**

**उद्देश्यलेखनम्**–(1) ज्ञानात्मक-उद्देश्यम् (2) अर्थग्रहणात्मक-उद्देश्यम् (3) अभिव्यक्त्यात्मकउद्देश्यम् (4) अभिरुच्यात्मक-उद्देश्यम् (5) अभिवृत्त्यात्मक-उद्देश्यम् (6) कौशलात्मक-उद्देश्यम्

**(क) सामान्योद्देश्यानि (ख) विशिष्टोद्देश्यानि।**

**(क) गद्यशिक्षणस्यसामान्योद्देश्यानि:**—विभिन्नानां गद्यविषयाणां विभिन्नेषु स्तरेषु शिक्षणे यानि उद्देश्यानि समानानि भवन्ति तानि सामान्योद्देश्यानि। तथापि स्तरानुसारेण विभिन्नानि उद्देश्यानि साधनीयानि भवन्ति। यथा–

**1. प्रारम्भिकस्तरे**

1. संस्कृतशब्दानां परिचयः।
2. स्पष्टोच्चारण-शुद्धोच्चारण-कौशलस्य ज्ञानसम्पादनम्।
3. शब्दभण्डार-वृद्धिकरणम्।
4. सरल-संस्कृत-वाक्यानां प्रयोगस्य क्षमतोत्पादनम्।
5. सरलवाक्यानामर्थग्रहणम्।
6. संस्कृतभाषायामभिरुचिरुत्पादनम्।
7. नैतिकप्रसङ्गात् छात्राणां चरित्रस्य निर्माणम्।
8. भावग्रहणभावप्रकटनयोः ज्ञानसम्पादनम्।
9. संस्कृत-गद्यपाठाभ्यासः।

**2. माध्यमिक-स्तरे**

1. छात्राणां शब्दज्ञानस्याभिवर्धनम्।
2. गद्यांशानाम् अर्थग्रहणम्।
3. संस्कृतवाक्यानां शुद्धं स्पष्टं च वाचनम्।
4. व्याकरणनियमानां सामान्यज्ञानम्।
5. कल्पनाशक्तेः विकासः।
6. रचनाशक्तेः संवर्धनम्।
7. भाषण-लेखन-कौशलयोश्च विकासः।
8. सांस्कृतिकज्ञानस्य विकासः, नैतिकविकासश्च।
9. विशिष्टगद्यशैलीनां च परिचयप्रदानम्।

10. विरामादि-चिह्नानि अनुपालयन् गद्यपाठस्य दक्षतोत्पादनम्।
11. संस्कृतसाहित्ये अभिरुचिः।

**3. उन्नत-स्तरे**

1. छात्राणां संस्कृतशब्दभण्डारस्य, सूक्तिभण्डारस्य च विकासः।
2. कल्पनाशक्तेः रचनाशक्तेश्च विकासः।
3. धार्मिकज्ञानस्य दार्शनिकज्ञानस्य च सम्बर्धनम्।
4. गद्यसाहित्ये अभिरुच्युत्पादनम्।
5. विवेचनात्मकशक्तेः समीक्षात्मकशक्तेश्च विकासः।
6. संस्कृतभाषायाः मौखिकप्रयोगस्य व्यवहारिकप्रयोगस्य च ज्ञानम्।
7. गद्यस्य विभिन्नशैलीनां परिचयः।
8. चर्तुविधकौशलेषु दक्षतोत्पादनम्।
9. गद्यपठने प्रादेशिक-भाषायाः प्रभावं न्यूनीकरणम्।

**(घ) गद्यशिक्षणे अवधेयाः अंशाः**

1. भाषाज्ञानाभिवृद्धिकरणम् गद्यशिक्षणस्य प्रमुखं कर्तव्यम्।
2. भाषाज्ञानाभिवृद्धिः भाषायाम् अधिकारसम्पादनम्।
3. छात्रेषु एतत्सम्पादनार्थं प्रकारद्वयं पदजालं संवर्धनीयम्।

तद्यथा:—1. भावग्रहणपदजालम्। 2. भावव्यक्तीकरणपदजालम्। गद्यशिक्षणसमये छात्राः केषाञ्चन शब्दानामर्थान् सन्दर्भानुसारं जानीयुः। तेषां शब्दानामुत्पत्तिः व्यतिरेकशब्दान्, नानार्थान्, पर्यायशब्दान् कक्षायां श्रृणुयुः। एवं रीत्या शब्दानां परिचयानन्तरं छात्राः स्वीयसम्भाषणेषु रचनासु, तान् शब्दानुपयोक्तुं दक्षाः भवेयुः। गद्यशिक्षणे स्पष्टोच्चारणकौशलं वर्णक्रम- परिज्ञानं पूर्णतया सम्पादनीयम्। गद्यस्य पठनसमये नेत्रेण दृश्यमानस्य वर्णक्रमस्य मुखेनोच्चार्यमाणस्य उच्चारणस्य समन्वयस्सम्पादनीयः। यदैकं शब्दं छात्रः दोषपूर्णतया उच्चरति तदा पठनसमये एव सम्बद्ध वर्णक्रमं श्यामफलके विलिख्य स्पष्टोच्चारणाय प्रयत्नो विधेयः। गद्ये एकैकं वाक्यं स्वीकृत्य न बोधनीयम्, गद्ये एकस्याम् अन्वित्यां Paragraph पूर्णोभावः अन्तर्भूतो भवति। अतः वाक्यशिक्षणविधानं परित्यज्य अन्विति शिक्षणविधानं स्वीक्रियते चेत् समीचीनं भवेत् गद्यशिक्षणम्। संस्कृतभाषा संश्लेषणातिमका भाषा अस्ति। एतादृशी संश्लिष्टभाषां छात्राःसौविध्येन अवगन्तुं शक्नुयुः, एतदर्थ गद्यखण्डानां व्याख्यां विविधविधिभिः कारयेत्। गद्य शिक्षणेऽपि आदौ उन्मुखीकरणमावश्यकम्, तदर्थ प्रस्तावनागतैः प्रश्नैः पूर्वज्ञानं परीक्ष्य पूर्वज्ञानसाहाय्येन च नूतनपाठस्य समन्वयस्सम्पादनीयः। तदनन्तरं विषयप्रकटनम् स्यात्। गद्ये आद्ये एकः भागः पाठितश्चेत् श्वस्तनदिने पाठित गद्यादेव प्रस्तावना प्रश्नाः प्रष्टव्याः। प्रस्तावना सम्बन्धि प्रश्नैः अध्यापनीयविषयस्य भूमिका निर्मीयते। आवश्यकतानुसारं चित्रप्रदर्शनेन, सम्भाषणद्वारा वा प्रस्तावना क्रियते। अध्येतव्यस्य विषयस्य प्रस्तावनायाः अन्ते उद्देश्यस्य

स्पष्टीकरणम् अध्यापकस्य कर्तव्यं भवति। प्रस्तावनान्तरमध्यापकेन-आदर्शवाचनम् करणीयम्। आदर्शवाचनं स्पष्टोच्चारणयुतं अर्थवन्तं च स्यात्। आदर्शवाचनानन्तरं द्वित्रैः अथवा पञ्चषैः छात्रैः—अनुवाचनं कारणीयम्। प्रति छात्रस्यानुवाचनान्तरं इतरछात्रैः त्रुटिसंशोधनं करणीयम्। तदनन्तरं पाठप्रबन्धनाय काठिन्य-निवारणाय च प्रयुज्यमानाः विविध-प्रविधयः यथा-

(1) उद्बोधनविधिः,

(2) व्याख्यानम्

(3) प्रत्यक्षविधिः,

(4) अनुवादविधिः,

(5) कोशविधिः,

(6) प्रयोगविधिः,

(7) तुलनाविधिः,

(8) व्युत्पत्तिविधिः,

(9) प्रसङ्गविधिः,

(10) अभिनयविधिः,

(11) टीकाविधि, एतैःविस्तृतव्याख्यानं करणीयम्। ततः परं तु सारांशकथनम्, मौनवाचनम्, पुनरावृत्तिप्रश्नाः, कक्षा-कार्यम्, गृहकार्यम्, मूल्याङ्कनम् इत्यादि सोपानानां कृते अवकाशः प्रदेयः।

**(ङ) गद्य-शिक्षणपद्धतिः**

**1. परम्परागतपद्धतिः**—अस्याः पद्धत्याः अनुगुणं अध्यापकः कक्षायां प्रविश्य निर्दिष्यन्तरे यं गद्यखण्डं बोधयितुम् इच्छति तमुद्दिश्यादौ वदेत्, अध्यापकः स्वयमेकैकं वाक्यं पठन् कठिनपदानामर्थमावेदयन् व्याकरणादिअंशनिवेदनपूर्वकं गद्यं पाठयेत्। पूर्वगाथा व्युत्पत्तयः इत्यादयः अंशाः ये केचन भवेयुश्चेत् स्वयं वदेत्। अस्यां पद्धत्यां आदर्श- वाचनम्, अनुवाचनम्, श्यामफलकस्य साहाय्यमपि न स्वीक्रियते। उन्मुखीकरण- स्याभावः सक्रियतायाः अभावः मनोविज्ञानाभावः च वर्त्तते परम्परागतविधौ। अनेन व्याख्याविधिः, स्पष्टीकरणविधिः वा माध्यमेन अध्यापयेत्।

**2. प्रश्नोत्तरपद्धतिः**—प्रश्नोत्तरपद्धतिः प्राचीना पद्धतिरस्ति। पद्यशिक्षणे खण्डान्वय-पद्धतिरिति या पद्धतिरस्ति सैवात्र प्रश्नोत्तरपद्धतिरिति व्यवह्रियते। गद्ये प्रत्येकं वाक्यमुद्दिश्य प्रश्नोत्तररूपेण पाठप्रबर्धनं क्रियते चेत् तत्र प्रश्नोत्तरपद्धतिराश्रिता इति वक्तुं शक्यते। एपा समीचीनापद्धत्या प्रभावोत्पादकतया सम्पूर्णगद्यपाठे पूर्णमधिकारं सम्पादयितुं शक्यते। छात्राः सक्रिया भवेयुः। अनया पद्धत्या प्रभावोत्पादकतया गद्यपाठं पाठयितुं शक्यते।

**3. कथा-कथनपद्धतिः**—विधिरयं 'प्रवचनविधिः' इति नाम्ना अपि ज्ञायते। पुराणकथाः पञ्चतन्त्रम्, हितोपदेशः,, दशकुमारचरितम्, कादम्बरी इत्यादिषु बहव्यः कथाः भवन्ति। तासां

कथानां बोधनाय एषा पद्धतिरतीवोपयुक्ता भवेत्। अध्यापकः आदौ सम्बद्धां कथां श्रावयेत्। तदनन्तरं तद्गतां कथां छात्रेभ्यः एव अनुसंधानयेत्।

**4. आधुनिकी पद्धतिः—** एषा पद्धतिः हर्वार्टीय पञ्चपदीय समन्विताऽस्ति। आदौ पूर्वं ज्ञानमाश्रित्य प्रस्तावना क्रियते, तदनन्तरं आदर्शवाचनम्, अनुकरणवाचनम्, त्रुटि संशोधनं च भवेयुः। ततः परं पाठप्रबन्धनं भवेत्। पाठप्रबन्धने छात्रक्रियाणाञ्च प्रामुख्यं भवेत्, अर्थात् अत्र प्रश्नोत्तरपद्धतिः आश्रियते। अद्यतने काले प्रश्नाः अध्यापकेन पृष्टाश्चेत् समाधानानि छात्राः वदेयुः। तदनन्तरं सारकथनम्, मौनवाचनम्, पुनरावृत्ति प्रश्नाः, कक्षाकार्यम्, गृहकार्यम्, मूल्यांकनम् इत्यादीनां सोपानानां कृते अवकाशः प्रदीयते। अनया मनोवैज्ञानिकी पद्धत्या छात्राः सक्रियाः भवन्ति। अधीते अंशे झटिति अधिकारं प्राप्नुवन्ति।

## (ग) पद्यशिक्षणम्

पद्यम् अर्थात् श्लोकलेखकाः कवयः इति गद्य लेखकाः रचयितारः इति परिगम्यते। यथार्थतः कविताया कृते भावनाशक्तिः प्रधानास्ति। कवितायाः प्रधानं प्रयोजनमस्ति हृदयद्रवीकरणम्। येन रसानुभूतिः इति व्यवह्रियते। कविताशिक्षणे प्रधानं लक्ष्यं रसास्वादनमेव। रमणीयानि पदानि रमणीयक्रमे सामञ्जनमेव कविता भवेत्। श्लोकशिक्षणे सहृदयव्याख्याता इव व्यवहृतः स्यादध्यापकः। छात्रेषु समीचीन-रसास्वादन योग्यता, विमर्शनात्मकदृष्टिश्च संर्वधनीयाः। श्लोके सुलभतया भावं सम्पादयितुं शक्यते। सामान्यवस्तूनि सन्निवेशः दृश्यानि च कविः भावनायां यदा भावितानि भवन्ति तदा रमणीयता गोचरी भूतानि भवन्ति। लेखकः यदा भावाविष्टः भवति तदा तस्य मुखात् निस्सृतायां भाषायां कश्चन् लयः स्यात्। सः लयः एव छन्द इति व्यवह्नियते। श्लोकस्य भावं गद्येऽपि वक्तुं शक्यते। काव्यं जीवितस्य व्याख्यानं भवति, समाजस्य दर्पणञ्च। मानवीय-भावनानामभिव्यक्तिः हृदयाह्लादकरीत्या क्रियते। शब्दयोजना, वृत्तबन्धाः, अलंकाराणां चमत्कारः, भावसौन्दर्यं, रीतिवैचित्र्यं, रसनिर्भरता च काव्यमास्वादयोग्यं कुर्वन्ति। एवं काव्यशिक्षणं छात्राणां मानसिकविकासाय, कल्पनाशक्तेः, रचनात्मक- प्रवृत्तेश्च विकासाय, सौन्दर्यानुभूतये च उपयुज्यते। अनेकैराचार्यैः काव्यलक्षणं बहुधा व्याख्यातं वर्त्तते।

### (क) काव्यस्य परिभाषा लक्षणानि वा

1. वाक्यं रसात्मकं काव्यम्-**विश्वनाथः**।
2. रमणीयार्थप्रतिपादकः शब्दः काव्यम्-**जगन्नाथः**।
3. तददोषौ शब्दार्थौ सगुणानवलंकृती-पुनः क्वापि-**मम्मटः**।
4. रीतिरात्मा काव्यस्य-**वामनः**।
5. काव्यस्यात्मा ध्वनिः—**आनन्द वर्धनः**।
6. क्षणे-क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः—**कालिदासः**।
7. वक्रोक्तिः काव्यजीवितम्-**कुन्तकः**।

8. काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितम्- **अग्निपुराणम्।**

9. इष्टार्थव्यवच्छिन्ना पदावली काव्यमिति-**दण्डी।**

10. चिरन्तनसत्ये अभिव्यक्तजीवनस्य प्रतिच्छाया एव काव्यम्।

11. सर्वोत्तमक्रमे सर्वोत्तम शब्दमेव काव्यम्।

इत्येतादृशानि प्राचीनकाव्यलक्षणानि कविताया: प्रधानं प्रयोजनमस्ति हृदयद्रवीकरणम्, रसानुभूतिकृते आदिकवे: वाल्मीके: श्लोक: अवश्यं द्रष्टव्य:। यथा-

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वती:समा:।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।**

तमसा नदीतीरे व्याध: कश्चन क्रौञ्चमिथुनादेकमवधीत्। हृदयविदारकं तद्घटनां दृष्ट्वा वाल्मीकि: स्वीयामनुभूतिं श्लोकरूपेण व्यक्तीकृतवान्। अर्थात् शोक: श्लोकत्वमागत: एषानुभूतिरेव रसानुभूतिरिति कविता परिभाषायाम् उच्यते।

**( ख ) पद्यशिक्षणस्योद्देश्यानि:**

1. संस्कृतपद्यसाहित्येऽभिरूच्योत्पादनम्।
2. गति-यति-लय-भावाभिनयपुरस्सरं श्लोकपठने दक्षतोत्पादनम्।
3. पद्यगतसौन्दर्यास्वादने क्षमतोत्पादनम्।
4. रसानुभूते: सम्पादनम्।
5. छन्दस: सम्बद्ध-ज्ञान-सम्पादनम्।
6. पद्यसम्बद्धकविमनोगतभावाविष्करणम्।
7. पद्यगत-शिल्प-ज्ञानात्मकं सम्पादनम्।
8. रसालंकार-ध्वनि-ज्ञानसम्पादनम्।
9. सर्जनात्मकशक्ते: संवर्धनम्।
10. अनेक रसवत्तर श्लोकानां कण्ठस्थीकरणे प्रेरणादानम्।
11. विविधरीतीनां विवरणम्।
12. ऊहाशक्ते: कल्पनाशक्तेश्च संवर्धनम्।
13. शब्दभण्डारबृद्धिकरणम्।
14. उच्चारणज्ञाने दक्षतोत्पादनम्।
15. काव्यसौन्दर्यानुभूति:।
16. उदात्तभावानां, जीवनादर्शानाञ्च परिचयेन नैतिकविकास:।

**( ग ) पद्यशिक्षणस्य प्रयोजनानि:**

श्लोकस्य शिक्षणात् पूर्वं किमर्थमेष: श्लोक: मया पाठ्यते इति आत्मानमुद्दिश्य प्रश्न: प्रष्टव्य:। तस्य प्रश्नस्य आत्मना यत्समाधानं दीयते तदेव तस्य श्लोकस्य शिक्षणलक्ष्यम्। गद्यशिक्षणस्य लक्ष्यमस्ति भाषाज्ञानसम्पादनम्, भाषासामर्थ्यसम्पादनञ्चेति। किन्तु कविता-

शिक्षणे प्रधानं लक्ष्यं रसास्वादनमेव। रमणीयानां पदानां रमणीयक्रमे सामंजनमेव कविता भवेत्। कवितायां विद्यमानामेतां रमणीयतां पठित्वा आनन्दप्राप्तये छात्राणां सहाय्यश्लोक-शिक्षणं नामकेवलं कठिनपदानां अर्थकथनं नास्ति। श्लोकशिक्षणे सहृदयव्याख्याता इव व्यवहृतः स्यादध्यापकः। छात्रेषु समीचीन-रसास्वादनयोग्यता विमर्शनात्मकदृष्टिश्च संवर्धनीयाः, एतानि कविता शिक्षणे मुख्योद्देश्यानि।

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।**

काव्यस्य प्रयोजनानि अचार्यमम्मटः अकथयत्-"काव्यं कीर्त्तये, धनप्राप्तये, व्यवहार-ज्ञानाय, अमङ्गलनाशाय, सद्यः ब्रह्मानन्दप्राप्तये कान्तासदृशोपदेशाय च भवति। पाठकानां दृष्ट्या कवितायाः प्रधानप्रयोजनं लोकोत्तराऽऽनन्दस्य प्राप्तिरस्ति-सः तं रससिक्तं कृत्वा सौन्दर्यानुभूर्तिं कारयति। काव्यं खलु नैतिकगुणानां विकासकारि सर्वोत्तमं साधनं वर्तते।

**(घ) पद्यशिक्षणे अध्यापकस्य कृते आवश्यकाः गुणाः**

1. संस्कृताध्यापकस्य कृते प्राचीनसाहित्ये विश्वासः आवश्यकः।
2. स्वविवेकेन तस्मिन् समये अर्थात् प्राचीनसाहित्य निर्माणसमये आचारविशेषा आसन्, तेषां विषये सद्विमर्शः करणीयः, कुविमर्शाः कदापि न करणीयाः।
3. कवि-मनोगत-भावना विषये, शैलीविषये, शब्दार्थ-सौन्दर्य विषये च छात्राणां दृष्टिः प्रदर्शनीयाः।
4. प्राचीन-साहित्याध्यापनसमये कुल-मत-वर्ग-धर्म निरपेक्षः स्यात्। स्मृतिगतानां श्लोकानां शिक्षण-विषये संकुचितभावाः त्याज्याः संस्कृताध्यापकेन। आधुनिकं कालं मनसि निधाय स्मृतिगताः श्लोकाः नैव शिक्षणीया-यथा-बुद्धिमस्तु नराः श्रेष्ठाः नरेषु ब्राह्मणाः स्मृता, वर्णत्रयस्य शुश्रूषां कुर्याच्छूद्रः प्रयत्नतः आदि-मनु०।
5. सन्दर्भेऽस्मिन् अध्यापकस्य सहृदयता आवश्यकी।
6. गुण-दोषनिरूपणं कुर्वन् गुणानां विषये एव दृष्टिप्रसारणम् उत्तमाध्यापकस्य कर्त्तव्यम् भवति।

**(ङ) संस्कृतक्षेत्रे शिक्षणाय श्लोकपद्धतिः**

**1. परम्परागत पद्धतिः—(भाषानुवादविधिः)** अध्यापकः स्वयं आदर्शवाचनं, पदविभागं, अन्वयं, प्रतिपदार्थं वदति स्म। श्लोके नानार्थान् पर्यायपदानि, व्युत्पत्तयः, पूर्वगाथा, व्याकरणांशान्, अलंकारांश्च स्वयं वदतिस्म। विधिरयम् अमनोवैज्ञानिकोऽस्ति, यतः अस्मिन् छात्राः निष्क्रियाः, अध्यापकाः सक्रियाः भवन्ति। यथा-

**वसांसि जीर्णानि यथा विहाय, नवानि गृहणाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।।**

अध्यापकः उपर्युक्तश्लोकस्य वाचनं स्वयमेव अथवा छात्रैः कारयित्वा, वासांसि, जीर्णानि,

विहायादि शब्दानाम्, अर्थं कथयित्वा स्वयमेव श्लोकस्य अर्थम् अनेन प्रकारेण कथयति यत्-येन प्रकारेण जीर्णवस्त्राणि त्यक्त्वा मानवाः नवीनवस्त्राणि धारयन्ति, तद्वदेव आत्मा पुरातनं शरीरं त्यक्त्वा नवीनदेहे प्रविशति।

**परम्परागतविधेः गुणाः**

1. सन्धिगतानि पदानि शब्दस्वरूपज्ञानमावेद्यते।
2. अध्यापकः अर्थवन्तं श्लोकं पाठयेत्।
3. भाषाज्ञान संबर्द्धनं भवेत्।
4. प्रतिपदस्य पूर्णज्ञानं सम्पाद्यते।

**परम्परागतविधेः दोषाः**

1. सौन्दर्यानुभूति सम्पादनापेक्षया भाषाज्ञानसंवर्द्धनं भवति।
2. विना प्रस्तावनया श्लोकः पाठ्यते।
3. पठनकौशलस्य प्रामुख्यं न दीयते।
4. मनोवैज्ञानिक-सिद्धान्तस्योपेक्षा।
5. रसानुभूतिः लुप्ता भवति।

**2. दण्डान्वय-पद्धतिः**-गद्यम् अन्वयं विना पाठयितुं शक्यते, पद्यन्तु न तथा, गद्ये कर्ता, कर्म, क्रिया च क्रमशः भवन्ति, पद्ये न तथा भवन्ति। भावावगाहनाय कर्तृकर्म क्रियादीनां कश्चन क्रमः आवश्यकः। ईदृशक्रमज्ञानाय अन्वय आवश्यकः। एतदर्थं श्लोके विद्यमानं प्रधानं वाक्यमन्वेषणीयम्। प्रधानवाक्यस्यान्वेषणानन्तरं कर्ता-कर्म-क्रियादीनां ज्ञानमावश्यकम्। तदनन्तरं क्रिया-विशेषणानि अव्ययानि च योजनीयानि। एवं रीत्या कर्तृकर्मक्रियादीनां माध्यमेन यत्राध्यापनं भवति तत्र दण्डान्वयपद्धतिराश्रिता इति वक्तुं शक्यते। पद्यखण्डं पूर्णवाक्ये अर्थात् दण्डे बोधब्यः। यथा-

**उष्ट्राणां विवाहेषु गीतं गायन्ति गर्दभाः।**
**अन्योऽन्यं प्रशंसन्ति अहो रूपमहो ध्वनिः।**

अस्मिन् पद्ये कः कर्ता \ गर्दभः। का क्रिया \ गायन्ति, प्रशंसन्ति। किं कर्म ? गीतं, अन्योऽन्यम्। ''उष्ट्राणांविवाहेषु गर्दभाः गीतं गायन्ति तथा अहो रूपम् अहो ध्वनिः इति कथित्वा अन्योऽन्यं प्रशंसन्ति इति दण्डान्वयः।

**आद्ये विशेषणं योज्यं विशेष्यं तदनन्तरम्।**
**क्त्वाणमुल्यप् प्रभृत्येवं पूर्वं दण्डान्वये भवेत्।।**

अस्यां पद्धत्यां व्याकरणस्य प्रधानं स्थानमस्तीति। अत्र कर्त्ता-कर्म-क्रिया-विशेषण-विशेष्य-प्रभृतीनि उन्नतस्तरे विद्यमानाः छात्राः एव अनुस्मर्तुं प्रभवन्ति। अतः लघुबालकानां कृते समुचिता एषा प्रणाली। मनोवैज्ञानिकसिद्धान्तानुकूला प्रणाली।

**अस्याःपद्धत्याःगुणाः**

1. अर्थावगाहने क्लेशः न भवति।
2. विषयं सम्पूर्णरूपेण ज्ञातुं शक्यते।
3. श्लोकस्य भावावगाहनं सरलतया भवति।
4. उन्नतस्तरे एषा अत्यन्तोपयुक्ता इति।

**अस्याःपद्धत्याःदोषाः**

1. पद्धतिरेषा नीरसा।
2. प्राथमिक-माध्यमिक-स्तरेषु एषा नैवोपयुज्यते।
3. छात्राणां स्वयं कृते प्राधान्यं न भवेत्।
4. रसानुभूतिः सौन्दर्याभूत्याभावः।

**3. खण्डान्वयपद्धतिः**—खण्डान्वयपद्धत्याः नामान्तरमस्ति यत् प्रश्नोत्तरविधिरिति। दण्डान्वयपद्धति अपेक्षया एषा पद्धतिः उत्तमा अनया मनोरंजकतया प्रभावोत्पादकतया च कवितां शिक्षयितुं शक्यते। मनोविज्ञानसिद्धान्ताधारिता इति हेतोः छात्राः अपि अध्ययने आसक्तिं प्रदर्शयेयुरनया पद्धत्याः। इयम् दण्डान्वयप्रणाल्याः विपरीततया स्यात्।

**अन्वयप्रबोधो खण्डान्वयस्य परिभाषा**

**कर्तृकर्मक्रियास्तावत् श्लोके योज्यास्ततः परम्,**
**किम् रूपं पुरस्कृत्य तृतीयादिविभक्तिः नियोजयेत्।**
**ल्यबन्तञ्च तुमन्तञ्च क्तवान्तं कर्मविभूषितम्।**
**खण्डान्वये पुनः प्रश्नः पूर्वमन्ते प्रयोजयेत्।**

दण्डान्वय इव खण्डान्वयेऽपि प्रथमतया प्रधानं वाक्यमन्वेष्टव्यम् भवति। यदा प्रधानं वाक्यमन्विष्टं भवति प्रश्नानां एवं समाधानद्वारा वाक्यशेषांशस्य ज्ञानं सम्पादनीयम्। वाक्यशेषांशज्ञानाय पद्धत्यामुपयुक्तानां प्रश्नानां एवम् उत्तरद्वारा कर्त्ता, कर्म, क्रिया, विशेषणम्, अव्ययम् इत्यादीनि निष्कासनीयानि। दण्डान्वयप्रणाल्यां प्रश्नाः व्याकरणाधारिताः भवन्ति। किन्तु अस्यां पद्धत्यां प्रश्नाः साहित्यमाधारीकृत्य भवन्ति। कर्तृसम्बद्धान् अंशान् छात्रेभ्यः निष्कासनाय कः, किम्, केन, कस्मै, कस्मात्, कस्य, इत्यादीनां सर्वनामशब्दानां माध्यमेन प्रश्नाः पृष्टाः भवेयुः। विशेषणानां ज्ञानाय कीदृशम्, किं भूतम्, कथं भूतम्, इत्यादयः प्रश्नाः प्रष्टव्याः। क्रियाणां ज्ञानाय किं करोति, किं कृत्वा इत्यादयः प्रश्नाः प्रष्टव्याः। क्रिया विशेषणानां ज्ञानाय कुतः, कुत्र, कदा, कथं, किमर्थम् इति रीत्या प्रश्नाः प्रष्टव्याः। अस्यां पद्धत्यां प्रश्नोत्तराणां विशेषमहत्त्वं भवति। चयनीकृतप्रश्नानां एवं समाधान द्वारा श्लोकस्य भावं निष्कासयितुं शक्यते। खण्डान्वयप्रणाल्याः श्लोक-शिक्षणे सूक्ष्मात् सूक्ष्मभावग्रहणं काव्यगत सौन्दर्यानुभूतिं एवं च रसास्वादनं भविष्यन्ति। यथा–

**विद्या ददाति विनयं विनयाद् याति पात्रताम्,**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मः ततः सुखम्।**

**अत्र खण्डान्वयः प्रश्नाः**

1. विद्या किं ददाति? विनयम्।
2. विनयाद् किं याति? पात्रताम्।
3. धनं कस्मात् आप्नोति? पात्रत्वात्।
4. धनात् कं याति? धर्मम्।
5. ततः परं किं आप्नोति?

सुखम्। श्लोकशिक्षणस्य एषा पद्धतिः मनोविज्ञानसिद्धान्तानुकूला स्यात्।

**अस्याः पद्धत्याः गुणाः**

1. अनया पद्धत्याः सरलतया प्रभावोत्पादकरीत्या च पाठं पाठयितुं शक्यते।
2. पद्धतिरेषा मनोविज्ञानसिद्धान्ताधारिताऽस्ति।
3. संस्कृतभाषामाध्यमेन श्लोकः पाठ्यते, फलतः संस्कृतभाषणे निपुणा भवेयुः छात्राः।
4. छात्राणां सर्जनात्मकशक्तिः विकसिता भवेत्।
5. प्रत्यक्षपद्धत्या पाठनं भवतीति हेतोः संस्कृतशिक्षणे पठने लेखने च दक्षाः भवेयुः छात्राः।
6. छात्राः अर्थान् भावाञ्च जानीयुः।
7. सौन्दर्यानुभूतिं रसानुभूतिञ्च सम्पादयितुं शक्यते।
8. सूक्ष्मातिसूक्ष्मभावाः ज्ञातुं शक्यन्ते।

**अस्याः पद्धत्याः दोषाः**

1. व्याकरणांशानां कृते अवकाशः नास्ति।
2. प्राथमिकस्तरे एषां नोपयोक्तमर्हति।
3. सर्वेछात्राः संस्कृतभाषायां समाधानानि दातुं न प्रभवन्ति।
4. आरम्भिकस्तरे इयं पद्धतिः कठिना भवितुमर्हति।

**4. व्याख्यापद्धतिः**—संस्कृतक्षेत्रे पद्धतिरेषा अतीव प्राचीना, गद्य-पद्य-शिक्षणाय इयमत्यन्तौपकृता भवति। अनया पद्धत्या पूर्णभावं सम्पादयितुं शक्यते।

**पदच्छेदः पदार्थोक्ति विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं व्याख्यानं पञ्चधा स्मृतम्।।**

कश्चन् श्लोकः स्वीक्रियते चेत् श्लोकस्य पदविभागः, अन्वयः, क्रियापदज्ञानम्, प्रातिपदिकार्थज्ञानम्, शब्दज्ञानम्, धातुज्ञानम्, वचनज्ञानम्, लिङ्गज्ञानम्, प्रत्येकपदस्य साधुत्वासाधुत्वज्ञानम्, प्रत्येक-शब्दस्यान्तः, इतर-वचने, प्रत्येकलकारस्य सम्बद्ध पुरूषस्ये-तरवचने, अपेक्षित-शब्दस्य पूर्वगाथा, व्युत्पत्तिः, अपेक्षितशब्दस्य कोषज्ञानम्, इत्यादयः अंशा अत्र चर्चिताः भवन्ति। प्रतिपदस्यार्थकथनसमये समासविग्रह-सन्धिविच्छेदः—अलंकार-

भाव-रसोत्पत्तिविषया अस्यां पद्धत्यां चर्चिता भवन्ति। भावार्थस्य स्पष्टीकरणाय शब्दार्थः, वाक्यार्थश्च प्रतिपाद्यते। यथा-

**शुश्रूषस्य गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने,**
**भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।**
**भूयिष्ठा भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी,**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः।।**

प्रस्तुतोऽयं श्लोकः संस्कृतसाहित्यस्य देदीप्यमानकविकालिदासेन विरचितस्य 'अभिज्ञानशाकुन्तल' इत्यस्य नाटकस्य चतुर्थाङ्कात् उद्धृतोऽस्ति। श्लोकेऽस्मिन् कालिदासः सामाजिकव्यवहारस्य सुन्दरं चित्रणमकरोत्। शकुन्तलायाः गमनसमये महर्षिकण्वः उपदिशति, तस्य अयमुपदेशः वधूजनाय गृहस्थाश्रमे सानन्दजीवनं व्यतीकरणाय प्रसिद्धोऽस्ति। ते कथयति-

स्व-श्वशुरादयः सेवनीयाः, सपत्निभिः सह प्रियसखीसदृशः व्यवहारः करणीयः, तिरस्कृतोऽपि क्रोधात् स्वपत्युः प्रतिकूलं न गमनीयं, सेवकान् प्रति उदारता तथा स्वभाग्योपरि गर्वः न करणीयः, अनेन प्रकारेण आचरणीयाः तिस्रः गृहस्वामिन्यः पदं प्राप्नुवन्ति, तथातद्विपरीताचरणीयःस्त्रियः कुलस्य कृते अभिशापतुल्याः भवन्ति।

**अस्याः पद्धत्याः गुणाः**

1. व्याकरणज्ञानसम्पादनम्।
2. पदपदार्थज्ञानसम्पादनम्।
3. पूर्वज्ञानगाथासम्पादनम्।
4. व्याख्यापद्धत्याः सम्बद्धश्लोकभावः पूर्णतयावगाहन-सम्पादनम्।
5. भाषासम्वन्धी मार्मिकज्ञानसम्पादनम्।
6. अनुप्रयोग-ज्ञानसम्पादनम्।

**अस्याः पद्धत्याः दोषाः**

1. छात्राः निष्क्रियाः भवेयुः।
2. इयम् अमनोवैज्ञानिकी पद्धतिः।
3. छात्राणां सर्जनात्मकाशक्तिः लुप्ता भवितुमर्हति।

**5. गीतनाट्यपद्धतिः**—अस्यां पद्धत्यां क्रीडानां कृते प्रामुख्यमधिकं भवति। वस्तुतः छात्राः क्रीडासु तत्परा भवन्ति। "**बालस्तावत्क्रीडासक्तः**" इति श्री शंकराचार्यस्य वचनमेवात्रप्रमाणम्। अध्ययनं क्रीडा द्वारा भवति चेत् छात्राः अप्रयत्नेन अनायासेन विषयान् जानीयुः। ऑग्लमाध्यमपाठशालासु प्राथमिकस्तरे क्रीडानां माध्यमेन अध्यापनं प्रचलति। तत्र बालगीतानि, अभिनयगीतानि, कथाकथनम् इत्यादि प्रक्रिया द्वारा अध्यापनं प्रचलति। गीतनाट्यपद्धत्या कृते मुकुन्दमाला, भजगोविन्दश्लोकाः, भोजप्रबन्धाश्लोकाः, चाटुश्लोकाः, प्रहेलिकाः, सुभाषितानि इत्यादयः अतीवोपकृताः भवन्ति। यथा-

**नमामि नारायण-पादपङ्कजं, करोमि नारायणपूजनं सदा,**
**वदामि नारायण नाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम्**
**आगच्छ मार्जार ममान्तिके त्वं गृहाण दुग्धं दधि-शर्करान्वितम्।**
**नोचेदहं दंडबलेन शीघ्रं भग्नामि दंतावलिमाशु पूर्णाम्।।**

एवं रीत्या विद्यमाना: सरला:श्लोका: स्वीकरणीया अस्यां पद्धत्याम्। अस्या: पद्धत्या: उद्देश्यमिदमेवास्ति छात्राणां कृते शब्दजाल परिचयसम्पादनमेवेति। ताल:, लय:, गति:, इत्यादीनां परिचयोऽपि देय:। प्राय: अनुष्टुप्श्लोका: अत्र स्वीकरणीया: स्यु:।

**अस्या: पद्धत्या: गुणा:**

1. सहजापद्धतिरेषा।
2. अत्यधिकं शब्दजालं संबर्धयितुं शक्यते।
3. यथार्थत: सुलभतया विपयसंग्रहणं कर्त्तुं शक्यते।
4. गीताभिनयेषु सक्रियता स्यात्।
5. संगीतज्ञानमपि सम्पादयितुमवकाशोऽस्ति।

**अस्या: पद्धत्या: दोषा:**

1. एषा पद्धति उन्नतस्तरे नोपयुक्ता भवेत्।
2. अध्यापकस्य गौरवं नोपलभ्यते।
3. सर्वानंशान् अनया पद्धत्या: बोधयितुं न शक्यते।

**6. आकांक्षापद्धति:**—प्रत्येकं श्लोकं खण्डान्वयपद्धत्या अध्यापयितुं शक्यते। अस्यां पद्धत्यां श्लोके विद्यमानस्य प्रत्येकपदस्य परस्परं सम्बन्ध: भवति। आदौ क्रियापदं किम् ? इति छात्रेभ्य:निष्कासनीयम्। क्रियापदनिष्कासनानन्तरं कर्त्ता निष्कासनीय:। तदनन्तरम् कर्म निष्कासनीयम्। एवं एकं क्रममाश्रित्य शब्दार्था: निष्कासनीया:। क्रियापद केन्द्रतया भावावबोधनमेव आकांक्षापद्धत्या: मुख्यं उद्देश्यमस्ति। अनया पद्धत्या छात्रेषु आलोचना शक्ति:, रचनाशक्ति: भाषाज्ञानञ्च संवर्ध्यन्ते दण्डान्वयखण्डान्वयो: सम्मिश्रणमत्र दृश्यते। दण्डान्वये-कर्त्ता, कर्म, क्रिया, इत्यादि क्रम: अस्ति। अत्र क्रिया, कर्ता, कर्म इति क्रम: आगच्छेत्। दण्डान्वयप्रणाल्यां प्रश्ना: व्याकरणमाश्रित्य मातृभाषायां स्यु:। अत्र प्रश्ना: साहित्यमाश्रित्य संस्कृतभाषायां स्यु:। अर्थात् खण्डान्वयप्रश्ना: सिद्धा सरला: भवन्ति। खण्डान्वयप्रणाल्यां य: प्रश्नोत्तरक्रमोऽस्ति स: अत्राश्रियते। एषा उन्नतस्तरे उपयुक्ता भवेत्।

**नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम्।**
**पाणिनीय प्रवेशाय लघुसिद्धान्त कौमुदीम्।।**

**प्रश्न:**—किं करोमि? **उत्तर:**—लघुसिद्धातकौमुदीम्।

**प्रश्न:**—किं कृत्वा लघुसिद्धान्तकौमुदीं करोमि? **उत्तर:**—सरस्वतीं देवीं नत्वा।

**प्रश्न:**—कथं भूतां सरस्वतीं देवीं नत्वा? **उत्तर:**—शुद्धाम्।

**प्रश्नः—पुनः कथं भूताम्? उत्तरः—गुण्याम्।**

**प्रश्न-कथं लघुसिद्धान्तकौमुदीं करोमि? उत्तरः—पाणिनीयप्रवेशाय।**

**अस्याः पद्धत्याः गुणाः**

1. छात्राः समग्रानंशान् जानीयुः।
2. छात्राणां सर्जनात्मक शक्तिः विकसिता भवेत्।
3. समग्रश्लोके अधिकारं सम्पादयेयुः।
4. प्रश्नोत्तरविधिः संस्कृतभाषायां भवेत्, ततः भाषणकौशले निपुणा भवेयुः छात्राः।
5. व्याकरणज्ञानमपि सम्यक्तया प्राप्नुयुः छात्राः।

**अस्याः पद्धत्याः दोषाः**

1. मनोविज्ञानसमर्थिता नास्ति अयं विधिः।
2. छात्रैः क्रियाणां कदाचित् प्रामुख्यं न दीयन्ते।
3. लघुस्तरे एषा नोपयुक्ता भवेत्।

**7. आधुनिकप्रणाली:—**अद्यतने काले 'विशिष्ट प्रशिक्षण महाविद्यालयेषु', माध्यमिक विद्यालयेषु, च एषा प्रणाली आश्रियते। हर्वार्ट्र महोदयस्य पञ्चपद्यानुसारं एषाऽस्ति। नीतिश्लोकानां, मुक्तकश्लोकानाञ्च प्रतिवारं प्रस्तावना प्रश्नाः आलोच्य लेखनीयाः। प्रस्तावनागतैः प्रश्नैः यत्ज्ञानं सम्पद्यते तत् ज्ञानं पाठनीयपाठ्यांशेन सहयोजनीयम्। विषयप्रस्तुतीकरणस्य पश्चात् अध्यापकः पाठ्य- मानस्य श्लोकस्य आदर्शवाचनं कुर्यात्। तेनादर्शवाचनेन छात्राः स्थूलार्थं जानीयुः। श्लोके विद्यमानानि नूतनपदानि पाठप्रबन्धने विविध-उदाहरणानि छात्रेभ्यः निष्कासनीयानि। छात्रैः अनुवाचनं कारयेत् अध्यापकः। अनेनानुवाचनेन छात्रेषु पठनकौशलं सम्पाद्यते। छात्रानुवाचने त्रुटयः सम्भवेयुः ताः इतर छात्राणां साहाय्येन श्यामफलक-साहाय्येन वा निवारयेदध्यापकः। ततः परं श्लोकस्य भावं सम्पादयेयुः। अत्र विविध-दृश्यश्रव्यसाधनानि उपयुज्यन्ते। मध्ये-मध्ये मूल्यांकनमपि भवेत्। पाठप्रबन्धनम् छात्रमनोऽनुगुणं स्यात्। निम्नकक्षासु सारकथनम् उच्चकक्षासु सारनिष्कासनञ्च स्यात्। मौनवाचनानन्तरं पाठिते श्लोके पुनरावृत्तिप्रश्नाः पृष्टाः स्युः। ज्ञातांशस्य दृढीकरणाय नूतनज्ञानसम्पादनाय च गृहकार्यं देयात्। उन्मुखीकरणम्, प्रदर्शनम्, अमूर्तीकरणम्, सामान्यीकरणम्, अनुप्रयोगः इत्यादीनां पञ्च सोपानानां कृते अवकाशः प्रदेयः। सौन्दर्यानुभूतिः काव्यशिक्षणस्य प्रधानमुद्देश्यं भवति। रचनासौन्दर्यं, अलंकारप्रयोगं, भावसौन्दर्यञ्च विशदीकृत्य अध्यापकः छात्रेषु भावुकतामुत्पादयेत्। शब्दयोजनायाः, अर्थप्रतिपादनस्य च वैशिष्ट्यं बोधयेत्। एवं विस्तृतव्याख्यानं कृत्वा अध्यापकः संक्षेपेण सारांशं कथयेत्। यथा-चर्पटमञ्जरीतः—

**(क) प्राथमिकस्तरे**

**अंगं गलितं पलितं मुण्डं दशन विहीनं जातं तुण्डम्।**
**बृद्धो याति गृहित्वा दण्डं तदपि न मुञ्चत्याशापिण्डम्।।**

भज गोविन्दं ....

**( ख ) माध्यमिकस्तरे**

**निन्दन्तु नीतिनिपुणाः यदि वास्तुवन्तु, लक्ष्मीःसमाविशतु गच्छतु वा यथेष्टम्।**
**अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात्पथः प्रविचलन्ति पदं न धीराः।।**

**( ग ) उन्नतस्तरे**

**लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्, समालिंगन्नंगं दुततरमनंगं प्रवलयन्।**
**मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्, रजोवृन्दंविन्दत्किरति मकरन्दं दिशि दिशि।।**

नियमित-गति कारणात् काव्यम् तालमयं, तालमयकारणात् रागमयं भवति, रागमय-कारणात् तत् काव्यं हृदयग्राह्यं भवति। गीत तथा अभिनयप्रणाली प्राथमिक कक्षायां प्रयोगार्थं वर्तते। तत्र अर्थस्य प्रामुख्यं गौणं भवति।

## ( घ ) नाटकशिक्षणम्

संस्कृतसाहित्ये गद्यपद्ययोरनन्तरं रूपकस्य प्रमुखं स्थानमस्ति। अवस्थाविशेषस्य अनुकरणं कृत्वा आनन्दं मनोरंजनञ्च प्राप्तकरणमेव 'नाटकम्' इति कथ्यते। गद्यकाव्यानि, पद्यकाव्यानि च श्रव्यकाव्येष्वन्तर्भवन्ति, यथा-कथा, आख्यायिका आदयः। रूपकं तु दृश्यकाव्येष्वन्तर्भवति श्रव्यकाव्य-शिक्षणे श्रवणेन्द्रियमेव कार्यं करोति। दृश्यकाव्यशिक्षणसमये श्रवणेन्द्रियं चक्षुरिन्द्रियं उभेऽपि कार्यं कुरुतः। अतः श्रव्यकाव्यापेक्षया दृश्यकाव्यस्यैव अत्यधिकं प्रामुख्यम् अस्ति। नाटकस्य संस्कृते विशिष्टं स्थानं वर्त्तते। छात्राः अपि रूपकाध्ययने अहमहमिकतां प्रदर्शयन्त्येव। 'नाटकम्'शब्दोऽयं 'नट्'धातोः निष्पन्नो वर्तते यस्यार्थास्सन्ति-नृत्यम्, अभिनयः, अनुकरणञ्च। लोके विद्यमानानां इतिवृत्तानां घटनानां वा चित्रणमेव नाटकम्। कालिदासेन उक्तम्-''ना[illegible]ं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्।''

**( क ) नाटकस्य स्वरूपम्**

''रूपयतीतिरूपकम्''।''तद्रूपारोपातु रूपकम्''।''तद्रूपकमभेदो यः उपमा-उपमेययोः''। ''उपमानोपमेययोः साम्यप्रदर्शनाय काल्पनिकोऽभेदारोपः रूपकम्''। रूपकं संस्कृत साहित्यस्य एकं गौरवपूर्ण अंगमस्ति। ''नाटकान्तं कवित्वम्''। ''काव्येषु नाटकं रम्यम्''। रूपकस्य प्रवर्त्तकः भरतमुनिः रूपकं ''सार्ववार्णिकपञ्चमवेद'' इति वर्णितम्। यथा-

**जग्राह पाठ्यं ऋग्वेदात् सामभ्यो गीतमेव च।**
**यजुर्वेदादभिनयान् रसानाथर्वणादपि।।**

इत्यनेन सिद्धयति यत्-''नाट्याख्यं पञ्चमं वेदम्''। भारतीयपरम्परानुसारं रूपकस्योत्पत्तिः त्रेतायुगे संजाता। रूपकस्रष्टा ब्रह्मास्ति। भरतस्यानुसारं देवानां प्रार्थनया ब्रह्मदेवः ऋग्वेदात् पाठ्यम्, यजुर्वेदाभिनयम्, सामवेदात् गीतम्, अथर्ववेदाद्रसं स्वीकृत्य रूपकं रचितवानिति ज्ञायते। इन्द्रध्वज महोत्सवं पुरस्कृत्य इदं प्रथमतया भारतभूभागे अभिनयो जातम्। अतः इदं वेदतुल्यमेव। ''अवस्थानुकृतिर्नाट्यम्'' संस्कृतनाटकानि पद्यबहुलानि भवन्ति। नाटकाभिन-

याय रङ्गमञ्चः सज्जीकृतो भवति। पात्रधारिणः उचितैः वेषभूषादिभिः, हावभावैः, क्रियाकलापैश्च अभिनयं कुर्वन्ति। नाटके चतुर्विधः अभिनयो भवति।

1. सात्विकः,
2. आंगिकः,
3. वाचिकः,
4. आहार्यश्चेति।

रूपकाभिनयः छात्राणां मानसिकविकासे महत्त्वपूर्णसाधनं भवति। उत्तमरूपकेषु आदर्शपात्राणाम् अनुकरणेन जनानां सच्चारित्र्यं, सम्पादयितुं शक्यते। येन शब्दानां स्पष्टोच्चारणं आरोहावरोहपूर्वकं वर्णानामुच्चारणं प्रवाहरूपेण भाषणं, भावग्रहणं-भाव प्रकटनम्, इत्यादि गुणाः सुलभतया शिक्षयितुं शक्यते।

**( ख ) नाटकस्य प्रयोजनानि**

रूपकशास्त्रे भरतमुनिना रूपकस्य त्रीणि प्रयोजनानि उक्तानि-

**1. हितोपदेशजनकम्**-दैनन्दिन-श्रामिक-कार्मिक-कर्षक-जीवने श्रान्ताः जनाः मानसिकं आनन्दं प्राप्नुवन्ति।

**2. विश्रान्तिजनकम्**-दुःखार्त्तानां श्रमार्त्तानां, शोकार्त्तानां, तपस्विनां कृते विश्रान्तिकल्पनम्।

**3. विनोदजनकम्**-जनानां मनोरंजकम्। मनोरंजनस्य साधनेषु नाटकं लोकप्रियम् अस्ति। छात्राणां शिक्षणाय जनानां उपदेशाय च रूपकस्य प्रयोगो भवति। महाकविर्कालिदासेन मालविकाग्निमित्रे कथितम्-'प्रयोगप्रधानं हि नाट्यशास्त्रं'रूपकं प्रयोगप्रधाना कला भवति।

**( ग ) संस्कृतसाहित्ये रूपकस्य प्रकाराः**

रूपकस्य दशभेदाः सन्ति।

1. नाटकम्, 2. प्रकरणम्,
3. भाणम्, 4. व्यायोगः,
5. समवकारः, 6. डिमः,
7. ईहामृगः, 8. अङ्कः,
9. वीथी, 10. प्रहसनम्,।

एवमेव अष्टादश उपरूपकाणि सन्ति। तानि यथा-

1. नाटिका, 2. त्रोटकम्,
3. गोष्ठी, 4. सट्टकम्,
5. नाट्यरासकम्, 6. प्रस्थानम्,
7. उल्लाप्यम्, 8. काव्यम्,
9. प्रेङ्खनम्, 10. रासकम्,

11. संलापकम्, 12. श्रीगदितम्,
13. शिल्पकम्, 14. विलासिका,
15. दुर्मल्लिका, 16. प्रकरणी,
17. हल्लीशः 18. भणिका, इति।

एतेषां लक्षणादिविवेचनं नाट्यशास्त्रे दृश्यन्ते। रूपक-नाटकयोर्मध्ये विद्यमानमन्तरम्-रूपकम् नाटकम् इति शब्दस्य पर्यायपदं भवितुं नार्हति। रूपकम् अङ्गी, नाटकम् तस्याङ्गम्। संस्कृतरूपकसाहित्ये नाटकाख्यरूपकविभागस्य प्राथम्यं विद्यते। "काव्येषु नाटकम् रम्यम्" इति वचः दृढीकरोति। "नाटकान्तं हि साहित्यम्" इतीदं वचनं रूपकस्य महत्त्वमावेदयति। दशरूपकेषु नाटकम् प्रथमो भेदः। नाटकम्, नाटिका, प्रकरणम्, इत्यादीनि रूपकाणि पाठ्यक्रमे निर्दिष्टानि सन्ति। संस्कृतसाहित्ये रूपकाणि बहूनि सन्ति। तानि यथा-

**(घ) रूपककाराः**

(1) **अश्वघोषः**—शारिपुत्रप्रकरण-षट् अङ्का सन्ति।

(2) **कालिदासः**—अभिज्ञानशाकुन्तलम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयं च,

(3) **विशाखदत्तः**—मुद्राराक्षसम्, मुद्रया गृहीतो राक्षसःयत्रेति तन्मुद्राराक्षसमिति।

(4) **भवभूतिः**—महावीरचरितम्, मालतीमाधवम्, उत्तररामचरितम्।

(5) **हर्षनृपतिः**—रत्नावलीः, प्रियदर्शिका, नागानन्दनम् (पञ्चाङ्काः)।

(6) **भट्टनारायणः**—वेणीसंहारम् (महाभारतकथामाश्रित्य वीररसः)

(7) **शुद्रकः**—मृच्छकटिकम् (दशाङ्काः सन्ति)।

(8) **भासः**—(त्रयोदशरूपकाणि)

1. प्रतिज्ञायौगन्धरायणम्, 2. अविमारकम्,
3. स्वप्नवासवदत्तम्, 4. प्रतिमानाटकम्,
5. अभिषेकनाटकम्, 6. मध्यमव्यायोगः,
7. पञ्चरात्रम्, 8. दूतवाक्यम्,
9. दूतघटोत्कचम्, 10. कर्णभारः,
11. उरुभङ्गम्, 12. बालचरितम्,
13. दरिद्रचारुदत्तम् चेति।

**(ङ) नाटकशिक्षणस्योद्देश्यानिः**

1. मानवस्वभावस्य अध्ययनम्।
2. रसानुभूति-सम्पादनम्।
3. व्यावहारिकपदजालसंवर्धनम्।
4. नाटकगत नायकगुणानामात्मसात्करणम्।

5. चतुर्विधकौशलेषु नैपुण्यसम्पादनम्।
6. छात्रेषु विद्यमानस्य सभाकम्पस्य दूरीकरणं धैर्योत्पादनञ्च।
7. छात्रेषु हावभावाभिनयनैपुण्यसम्पादनम्।
8. भारतीयसंस्कृतिसम्प्रदायानामावेदनम्।
9. व्यक्तेः समाजस्य च स्वस्थमनोरञ्जनम्।
10. अनुकरणस्य अवसरः।
11. रूपकरचनासमये विद्यमानानां सामाजिक-आर्थिक-राजकीय परिस्थितीनां ज्ञानम्।
12. नृत्त-नाट्य-ताल-लयादीनां ज्ञानम्।
13. आरोह-अवरोह क्रमेण विभिन्नभावानां ग्रहणं व्यक्तीकरणं च।
14. हितोपदेशजननम्, विश्रान्तिजननम्, विनोदजननम्।

## (च) रूपकशिक्षणम्:

संस्कृतपाठ्यपुस्तकेषु गद्य-पद्य-व्याकरण-पाठैःसाकं रूपकसम्बद्धाः पाठाः अपि सन्ति। संस्कृतरूपकेषु विद्यमानाः रसवत्तराः अंशाः माध्यमिकस्तरे उन्नतस्तरे च योजिताः भवन्ति। प्राथमिकस्तरे-पाठशाला, पत्रालयः, गृहम्, इत्यादयः सम्भाषणपाठाः भवन्ति। एवमेव सन्दर्भोचितं वाचकाभिनयस्य, अङ्गिकाभिनयस्य च शिक्षणं प्रदीयते। नाटकशिक्षणे पात्राणां स्वरूपं, स्वभावं, कथाभागाः, रसादयश्च सम्यक्तया आवेदनीयाः। रूपकेषु कविः प्रत्यक्षी भूत्वा प्रेक्षकाणां हृदयेषु स्थाप्यते। एवं सम्भाषण-रूपकपाठानां द्वारा छात्रेषु विमर्शनशक्तिः, सर्जनात्मकशक्तिः, साहित्याभिरूचिः, आनन्दानुभूतिश्च संवर्धनीया। रूपकपाठेषु पात्राणां गुणशीलस्वभावं यदस्ति तदावेदनीयम्। रूपकेषु शैली एकयैव रीत्या न भवति। रूपकेषु आकाशभाषितम्, जनान्तिकम्, अर्धोक्तिः, स्वगतम् इत्यादयः अंशा यदा आगच्छन्ति तदा तत्र-तत्र विद्यमानानि रूपकगतानि रहस्यानि सम्यक्तया बोधनीयानि। रूपके विद्यमानानि पद्यानि गीतादि च पद्यशिक्षणे इव न बोधनीयानि। प्रायः रूपकपाठे आद्यन्तौ न भवतः। प्रस्तावनासमये पूर्वसन्दर्भं ज्ञापयित्वा पाठपूर्त्यनन्तरं उत्तरसन्दर्भेऽपि ज्ञापनीयः। रूपकशिक्षणानन्तरम् कतिपयैः छात्रैः अभिनयः सम्पादनीयः।

### (छ) रूपकशिक्षणपद्धतयः

**1. व्याख्यापद्धतिः**—अनेनविधिना शिक्षकः पाठ्यमानरूपक-भागस्य अर्थं बोधयित्वा कठिनांशानां भावानाञ्च व्याख्यानं करोति। अनेन विधिना नाटकस्य बोधनमपि गद्यपद्यबोधनसमानं भवति। पात्राणां स्वभावं, चरित्रचित्रणञ्च विशदयति।

**2. पठनपद्धतिः**—पठनपद्धतिः प्राचीना पद्धतिः। अध्यापकः कक्षायां प्रविश्य तस्मिन् दिने (अन्तरे) यावत्पर्यन्तं पाठनीयम् भवति तावत्पर्यन्तं पठति। इच्छा अस्ति चेत् पाठ सम्बद्धान् अंशान् एकैकशः विवृणोति। अस्यां पद्धत्यां छात्राः सक्रिया न भवेयुः। इयमेका अमनोवैज्ञानिकी पद्धतिः।

**3. अभिनयपद्धतिः—**रूपकशिक्षणे अभिनयपद्धतिः प्रशस्ततरा। अभिनयं कृत्वा पाठं पाठयति अध्यापकः। अध्यापकः पाठं पाठयन् रूपकगतस्वरूपं स्वभावं च ज्ञात्वा स्वभेदेन शरीरावयवान् परिवर्त्य अभिनयं कृत्वा पाठयेत् पाठपूर्त्यनन्तरं छात्रैः कक्षायामेव अभिनयं कारयेत्। पात्राणां स्वभावं ज्ञात्वा, यथोचितं संभाषणं कुर्वन्ति। अध्यापकः मार्गदर्शनं करोति। कक्षाभिनयः, रङ्गमञ्चाभिनयः इति द्विधा सम्पादयितुं शक्यते। रूपकाभिनयेन वाचिकम्, आङ्गिकम्, सात्विकमभिनयस्य ज्ञानं प्राप्नुवन्ति छात्राः।

**4. प्रयोगविधिः—**रूपकसम्बद्धपाठं सम्यक्तया अध्याप्य रङ्गमञ्चे छात्रैः प्रदर्शयितुं व्यवस्था प्रकल्पनीया। प्रायः स्वातन्त्र्यदिवसोत्सवे, गणतंत्रदिवसोत्सवे, बालदिवसोत्सवे, पाठशालावार्षिकोत्सवे च एतादृशी व्यवस्था परिकल्पनीया। प्रयोगपद्धत्यां धनव्ययमधिकं भवेत्, तथापि छात्राणामन्तर्गता शक्तिः वहिरानयनाय प्रयोगपद्धतिः आवश्यकी। नाटकशिक्षणस्य सर्वोत्तमो विधिरयम्। चयनिताः छात्राः अधीतस्य नाटकस्य अभिनयाय अभ्यासं कुर्वन्ति। सुसज्जिते रङ्गमञ्चे वेषभूषाद्यलङ्करणैः अलङ्कृतानि पात्राणि सामाजिकानां पुरतःप्रत्यक्षीभूय स्वाभिनयकौशलेन, सम्भाषणचातुर्येण च सामाजिकान् आनन्दयन्ति। रूपकशिक्षणे उपरि लिखिताः पद्धतयः आवश्यकाः। पठनपद्धतिः श्लाध्यतरा नास्ति। अभिनयपद्धतिः प्रयोगपद्धतिश्च श्लाध्यतरा वर्तेते। एते पद्धत्यौ आश्रित्य रूपकगताः पाठाः शिक्षणीयाः।

मानवानां सर्वाङ्गीणविकासे रूपकस्य महत्त्वपूर्णं योगदानं दृश्यते। जनानां चितं स्पृशति। रूपकशास्त्रे अस्य प्रशंसा कृता विद्यते। मन्यन्ते यत्-

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**
**न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।**

रूपकं सार्ववार्णिकलाभार्थं नटराजशिवेन रूपकं संसृज्य समभाव (धर्म निरपेक्ष) भावना स्थापिता। एतेन रूपकशिक्षणस्य सर्वाणि उद्देश्यानि, प्रयोजनानि च साधयितुं शक्यते।

### (ङ) उपाख्यानशिक्षणम्

संस्कृतसाहित्यस्य विविधविधासु उपाख्यानमपि एका महत्त्वपूर्ण विधा वर्तते। कथाशिक्षणं छात्रेषु तर्कस्य निरीक्षणशक्तेश्च विकासं करोति, एवमेव तेषां जिज्ञासानां समाधानं कृत्वा अनुरञ्जनमपि करोति। कथामाध्यमेण बालानां नीतिज्ञानं भवति। भारतीयकथासाहित्यस्य उद्गमःसंस्कृतसाहित्यात् एव अभवत् एवञ्च एषा विश्वस्य सर्वेषां देशानां साहित्यस्य क्षेत्रे प्रमुखं स्थानं प्राप्तवती। संस्कृते कथायाःद्वौ प्रकारौ भवतः। 1. मनोरञ्जनात्मककथाः, 2. उपदेशात्मककथाश्च।

संस्कृतसाहित्यस्य इतिहासे कथासाहित्यस्यस्वरूपमित्थं दृश्यते।

## कथासाहित्यम्

| कथा | आख्यायिका |
|---|---|
| नीतिकथा लोककथा<br>उपदेशप्रधानम् मनोरञ्जनप्रधानम्<br>पञ्चतन्त्रम् हितोपदेशम् बृहत्कथा<br>वेतालपञ्चविंशति<br>तन्त्रोपाख्यानम् सिंहासनद्वात्रिंशिका | ऐतिहासिकी पौराणिकी च<br>घटनासु आधारितवृत्तम् |

**1. नीतिकथा**–आसां कथानां विषया: सदाचार:, नैतिकता, राजनीति:, व्यावहारिकज्ञानञ्च सन्ति। पुराणेषु तु बहव्य: नीतिकथा प्राप्यते। जातक इत्यस्य नाम्न: बौद्धग्रन्था: 380 ईसवीयपूर्ववर्षे एव विद्यमाना: आसन्। एतदतिरिच्य 668 ईसवीयवर्षस्य चीनीविश्वकोषे अनेकभारतीय-नीतिकथानाम् अनुवादा: समुपलभ्यन्ते।

**2. पञ्चतन्त्रम्**–अयं संस्कृतनीतिकथासाहित्यस्य विश्वे अतिप्राचीनतम् महत्त्वपूर्णश्च ग्रन्थोऽस्ति। पञ्चतन्त्रस्य इतोऽपि अधिकासु भाषासु अनुवादा: अभवन्, यस्य माध्यमेन पश्चिमीजगति अपि इयं कथा सुप्रसिद्धा अभवत्। पञ्चतन्त्रस्य रचनाया: मूलोद्देश्यं महिलारोप्य इत्यस्य नाम्न- नगरस्य राजा अमरशक्ते त्रिमूखपुत्रेभ्य: राजनीते: शिक्षाप्रदानम् आसीत्। अस्य लेखकेन 'विष्णुशर्मा' महाभागेन स्वयं प्रस्तावनायाम् अस्योल्लेख: कृत:। ग्रन्थेऽस्मिन् सम्पूर्णराजनीते: सार: विद्यते य: कथामाध्यमेन सरलरीत्या स्पष्टीकृत:। स्वरूपम्-ग्रन्थेऽस्मिन् पञ्चतन्त्राणि सन्ति–1. मित्रभेद:, 2. मित्रलाभ:, 3. सन्धिविग्रह:, 4. लब्धप्रकाश:, 5. अपरीक्षितकारकश्च।

**3. तन्त्रोपाख्यानम्**–तन्त्रोपाख्यानं पञ्चतन्त्रस्य एव एकं विशिष्टंस्वरूपम् अस्ति।

**4. हितोपदेशम्**–नीतिकथासु पञ्चतन्त्राननतरं हितोपदेशस्य स्थानं सुरक्षितमस्ति। अस्य ग्रन्थस्य रचयिता नारायणपण्डित: आसीत् यस्य आश्रयदाता धवलचन्द्र: बङ्गप्रदेशस्य कोऽपि राजा आसीत्। 1373 ईसवीयवर्षस्य अस्य ग्रन्थस्य एकापाण्डुलिपि: प्राप्ता। अस्य ग्रन्थस्य आधार: पञ्चतन्त्रमस्ति।

**5. लोककथा**–लोककथा: कल्पनाधारिता: सन्ति। एता: मानवानां जीवनात् अनुस्युता: एव न अपितु अनुप्राणिता: अपि वर्तन्ते।

**6. वृहत्कथा**–लोककथानां प्रचीनतम: संग्रह: बृहत्कथा वर्तते। इदानीं तु अस्या: त्रीणि संस्करणानि प्राप्यन्ते। 1. बृहत्कथा श्लोक संग्रह:, 2. बृहत्कथामञ्जरी, 3. कथासरित्सागरम्।

**7. वेतालपञ्चविंशका**–अस्या: आधार: बृहत्कथामञ्जरी कथासरित्सागरञ्च अस्ति। अस्यां प्रहेलिकाया: स्वरूपे 25 जिज्ञासायुक्तानां कथानां संग्रह: वर्तते।

**8. सिंहासनद्वात्रिंशिका**–जैनमुनिक्षेमकरेणरचिता सिंहासनद्वात्रिंशिका, द्वात्रिंशित्पुत्तलिका, विक्रमचरितमपि वा एक: मनोरंजक: कथासंग्रह: वर्तते।

**9. शुकसप्तति:**–एष: एक: रुचिकर: लोकप्रियश्च कथासंग्रह: वर्तते।

**संस्कृतकथानां वैशिष्ट्यं महत्त्वञ्च**

1. कथाया: विभिन्नतत्त्वानि कथानकं, चरित्रचित्रणं, कथोपकथनं, भाषा-शैली, शीर्षक: एवञ्च उद्देश्यस्य दृष्ट्या संस्कृतकथा:उच्चस्तरीया:सन्ति।
2. कथा: जटिलभावानां स्पष्टीकरणे सहायिका: भवन्ति।
3. आभि: मनोरञ्जनेन सह नीते:सदाचारस्य च शिक्षा अपि प्राप्यते।
4. इमा: कथा: देवभाषाया: पाठनशैल्या: आदर्शमपि उपस्थापयति।
5. इमा:कथा:कौतूहलपूर्णा:सन्ति। कल्पना एव आसां विकासस्य प्रादुर्भावस्य च स्रोतोऽस्ति।
6. कथा: मानवेषु व्यवहारकौशलोत्पादने सहायिका: भवन्ति, यतो हि आभि:पाठकेषु नैतिकगुणानां विकासो भवति।
7. आभि: धर्म-अर्थ-कामश्चेति त्रिवर्गस्य प्राप्तिर्भवति।
8. कथाप्रसंगे आगतानां शब्दानां, वाक्यानां, लोकोक्तीनाञ्च वास्तविकार्थं ते सरलतया ग्रहणन्ति।
9. कथामाध्यमेन छात्रेषु तर्कशक्ति-विवेक-संकल्प-इत्यादीनां सद्‌गुणानां वृद्धिर्भवति।
10. कथामाध्यमेन सांसारिकज्ञानस्य वृद्धिर्भवति।
11. इमा: छात्रान् संयमितानुशासितजीवनयापनयोश्च प्रेरणां ददाति।

**शिक्षणाय कथाया: चयनम्**

1. छात्राणां मानसिकविकासं स्तरञ्च मनसि निधाय कथानां पाठनं भवितव्यम्।
2. तस्या: भाषाशैली सरला बोधगम्या च भवति।
3. कथा रुच्यात्मिका जिज्ञासानां समाधात्री च भवेत्।
4. प्रत्येकं कथा सोद्देश्या स्यात्।
5. कथासु संवादा: पर्याप्तमात्रायां भवेयु:।
6. कथा: सुखान्ता:स्यु: ताभि:छात्रा: अपि आशान्विता: भविष्यति।
7. कथायां पात्राणां संख्या अधिका न भवेत्।

**कथाशिक्षणकाले ध्येया: कतिपयंबिन्दव:**

1. अध्यापक:कथां एकाग्रचितो भूत्वा श्रावयेत्।
2. छात्रान् कथाया: वेशिष्ट्यात् परिचाययेत् कारयितव्यम्।
3. कथासु आगतानां स्थलानां /शब्दानां व्याख्या कर्त्तव्या।
4. छात्रेषु रचनात्मकशक्ते:विकासार्थं कथाया: वाक्याधारेण लिखितकार्यमपि कारयितव्यम्।

**कथा शिक्षणस्य प्रविधय:**

**1. कथनप्रविधि:**—कथाश्रावणमपि एका कला वर्तते। वस्तुत:कथाया: प्रस्तुतीकरण-मध्यापकेन यावता प्रभावे क्रियते तावदेव अस्या: शिक्षणं सफलं भवति।

**2. चित्रप्रविधि:**—कथासम्बन्धितचित्राणि स्वीकृत्य अध्यापक: क्रमश:कथयन् विकासयति एतेषां प्रदर्शनं करोति एवञ्च कथां विकासयति।

**3. प्रश्नोत्तरप्रविधिः**—अध्यापकः क्रमबद्धतया लघुप्रश्नान् पृच्छति। छात्रा:विषयाधारेण प्रश्नानामुत्तरं ददाति।

**4. संवादप्रविधिः**—अध्यापकः कथापात्राणां कथनसन्दर्भे छात्रैः सह वार्तालापं करोति तथा छात्राणां साहाय्येन च सम्पूर्णकथां कथयति।

**5. कक्षाभिनयप्रविधिः**—अध्यापकः उचितहावभावसहितः कथायाः वाचनं करोति तथा छात्रान् पात्रानुसारं वाचनस्यकृते आदिशति।

**6. गहनाध्ययनप्रविधिः**—अनेन प्रविधिना कथायां स्थितानां क्लिष्टानां शब्दानां, नूतनविचाराणां, सुभाषितवाक्यानां लोकोक्तीनाञ्च व्याख्यां स्पष्टरूपेण करोति अध्यापकः।

## ( च ) व्याकरणशिक्षणम्

वेदाङ्गेषु प्रधानं व्याकरणं, न केवलं वेदमन्त्रेषु विद्यमानानां अर्थावबोधनं करोति परं तु तेषां रक्षणमपि करोति। व्याक्रियन्ते-व्युतपाद्यन्ते शब्दाः अनेनेति व्याकरणम्।

### ( क ) व्याकरणस्य निर्वचनानि-( निश्चित् वचनानि निर्वचनानि )

(1) ''व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्यय-विभाग-द्वारा निष्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्'', वि आङ् इत्युपसर्ग पूर्वक कृञ् धातो:''करणाधिकरणयोश्च''इति सूत्रेण ल्युटि प्रत्ययेन सिद्ध्यति व्याकरणमितीदं पदं भवति।

(2) व्याक्रियन्ते-पृथक्क्रियन्ते साधुशब्दा:, असाधुशब्देभ्यः प्रकृतिप्रत्ययादिज्ञान महिम्नाऽनेनेति व्याकरणम्।

(3) व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा:येनेति व्याकरणम्।

(4) व्याक्रियन्ते-परिज्ञायन्ते शब्दा:अनेनेति व्याकरणम्।

(5) शब्दानुशासनं व्याकरणम्।

### ( क ) व्याकरण शिक्षणस्योद्देश्यानि

भाषायाः अध्ययने व्याकरणं मार्गदर्शकं भवति। यथा भाषायाः अध्ययनम् आजीवनं प्रचलति तथैव व्याकरणस्यापि। भूगोलशास्त्रस्याध्ययने मानचित्रमिव भाषाध्ययने व्याकरण-शिक्षणस्य उद्देश्यानि समानानि भवन्ति। यथा–

1. विभिन्नशब्दरूपाणां शुद्धस्वरूपज्ञानम्।
2. तर्करचना शक्तयोर्विकासः।
3. व्यवहारे भाषागतगुणदोषान् पृथक्कर्तु योग्यता प्रदानम्।
4. व्याकरणनियमानां ज्ञानम्।
5. व्याकरणतत्त्वानि व्यवहारे प्रयोक्तुं क्षमतोत्पादनम्।
6. ध्वनितत्वानां परिचयः।

7. वाक्य-रचना-विषयकं ज्ञानम्।
8. संस्कृतभाषायाः वैशिष्ट्यविषये ज्ञानप्रदानम्।
9. संस्कृते विचारान् आविष्कर्तुं क्षमतोत्पादनम्।
10. पठितान् व्याकरणनियमान् प्रयोगे आनेतुं अवसरस्य परिकल्पनम्।
11. स्थानप्रयत्नानुसारं वर्णानामुच्चारणम्।

**(क) आगमनपद्धतिः (विधि)** (Inductive method)

**अर्थः**—उदाहरणानि प्रस्तूय ततो नियम निर्धारणन्नाम आगमनम्। जोसफलेण्डन् प्रतिपादयति- "यदि छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वा अस्माभिः प्रस्तूयन्ते, ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिरनुसर्यत इत्यर्थः"। प्रयोग प्रामाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रियते। इयमेका मनोवैज्ञानिकी पद्धतिः। अनया पद्धत्या सर्वासु भाषासु मनोवैज्ञानिक- रीत्या व्याकरणं अध्यापयितुं शक्यते। लक्ष्यं प्रदर्श्य लक्षणपरिकल्पन्नाम आगमनम्। लोके लक्ष्यमेव प्रथमं गण्यम्। "असत्येवर्त्मनि स्थित्वा ततः सत्यं समीहते" इति भर्तृहरीणां कथनं चरितार्थत्वे-लक्ष्यं प्रथमं लक्षणं तदनुयायि इति फलति। पाणिनिना लक्ष्यमवलम्ब्यैव लक्षणमकारीत्यागमनमेव प्रक्रियाग्रन्थाः लक्ष्यप्रदर्शनार्थमेव प्रवृत्ताः, ततः लक्षणसमन्वय इति तेषां क्रमः। एवं भट्टिकाव्यमित्यादयः ग्रन्थाः आगमनविधिमनुसरन्ति। तत्र प्रयोगस्य प्राधान्यम्। न्यायशास्त्रेऽपि "**इन्द्रियार्थसन्निकर्षजन्यज्ञानं प्रत्यक्षम्**" इति लक्षणमुक्त्वा यदनुव्याख्यान द्वारा सोदाहरणं विशदी क्रियते। साहित्यशास्त्रेऽपि "**गद्यपद्य मयं काव्यं चम्पूरित्यभिधीयते**" इति परिकल्पनानन्तरं तथा विधस्य काव्यस्य उत्पत्तिरिति। एवमेव "वाक्यं रसात्मकं काव्यम्" "रमणीयार्थ प्रतिपादकः शब्दः काव्यम्" इति लक्ष्यमनुलक्षण-प्रकल्पनम्। भगवान् पतञ्जलिरपि "लक्ष्यलक्षणं व्याकरणम्" इति आगमनविधिं स्वीकुर्वन्ति। छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वाऽस्माभिः प्रस्तूयन्ते। ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिः अनुसर्तव्यः इत्यर्थः। प्रयोग प्रमाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रियते। तत्सम्बन्धिनी तत्त्वानि उदाहरणानि वा निरीक्ष्य, तुलनां वर्गीकरणं च विधाय स्वयमेव नियमानां निर्धारणं छात्राः कुर्युः। अत्र विधौ ज्ञातादज्ञातं प्रति, विशेषात्सामान्यं प्रति, स्थूलात्सूक्ष्मं प्रति, इत्यादीनि शिक्षण-सूत्राण्यन्तर्निहितानि वर्त्तन्ते। Induce इति आंग्लधातोः अंगीकरणम् तत् Induce ment इति व्यवह्रियते। Induce ment माध्यमेन या पद्धतिः प्रचलति सा आगमन पद्धतिः [Inductive method] इति व्यवह्रीयते। समानधर्मसहितपदसमूहान् समानवर्गेषु वर्गीकृत्य छात्राणां साहाय्येन तानि श्यामफलके लेखापनीयानि। यथा- नर+इन्द्र=नरेन्द्र, देव+इन्द्र=देवेन्द्रः, लंका+ईश=लंकेशः, पुरूष+उत्तमः= पुरूषोत्तमः, यथा+उचितम्=यथोचितम्, महा+ऋषिः=महर्षि, अत्र प्रथम पदस्यान्ते विद्यमान अज्वर्णः कः? द्वितीय पदस्यादौ विद्यमान अज्वर्णः कः इति प्रष्टव्यः। प्रतिपूर्वपदस्यान्ते ह्रस्व/दीर्घ अकारः स्यात्। प्रत्युत्तरपदस्य आदिमवर्ण अज्वर्णेषु कोऽपि वर्णः स्यात्। (अ आ+इ ई=ए, अ

आ+उ=ओ, अ आ+ऋ=अर्,) ह्रस्व दीर्घ अकारस्य ह्रस्व दीर्घ इ उ ऋ वर्णाः परतो भवन्ति चेत् क्रमशः ए ओ अर् आदेशाः भवन्ति, एतदपि छात्रैः स्वयं निष्कासनीयम्।

**आगमनविधेः सोपानानि**–अत्र प्रमुखतया चत्वारि पदानि शिक्षणोपयोगीनि अनुस्रियन्ते। यथा–

**1. उदाहरण प्रस्तावः**—छात्राणां समक्षं समानोदाहरणानि प्रस्तूयात् शिक्षकः। व्याकरण-शिक्षणावसरे अध्यापकः गणेशः, छात्रोपस्थिति, महर्षि, शब्दान् प्रस्तौति। छात्राः सावधानं उदाहरणानि श्रृण्वन्ति, पश्यन्ति, पठन्ति च।

**2. निरीक्षणम्**–प्रस्तुततत्त्वानां तुलनात्मकं निरीक्षणमेव द्वितीयं पदं भवति। प्रस्तुतोदाहरणे छात्राः विश्लिष्य विवेचयन्ति।

**3. नियमनिर्धारणम्**–तत्त्वानां निरीक्षणात्परं नियमपरिकल्पनन्नामेव तृतीयं पदम्। पूर्वोक्तान् शब्दान् विच्छिद्य नियमं परिकल्पयन्ति। "अकाराकाराभ्यां सह इकारईकारयोः मेलनेन एकारः एकादेशः भवति। एवं अकाराकाराभ्यां सह उऊकारयोः मेलनेन ओकारः भवति। तथा अकाराकाराभ्यां सह ऋकारस्य मेलनेन 'र' इति च भवति" इति नियमं निर्धारयन्ति।

**4. परीक्षणम्**-निर्धारितस्य नियमस्य लक्ष्ये पुनः परीक्षणमेव चतुर्थ सोपानम्। यथा–उपेन्द्र, गंगोदकम्, राजर्षि, इत्यादि नवोदाहरणैः स्वीकृतं नियमं परीक्ष्य प्रमाणयन्ति।

**आगमनपद्धत्याः गुणाः**

1. छात्राः सूत्राणि सूत्रार्थानि च स्वयं जानीयुः।
2. सूत्र निर्माणं परिभाषा निर्माणं च स्वयं क्रियते, अतः बहुकालपर्यन्तं विस्मर्तुमवकाशो नास्ति।
3. सूत्राणि परिभाषाश्च स्वयं निर्मिता इति हेतोः कण्ठस्थीकरणस्यावश्यकता नास्ति।
4. उदाहरणान्याधारीकृत्य व्याकरणाध्यापनं प्रचलेत्।
5. अनया व्याकरणाध्ययने छात्राः अभिरूचिं प्रदर्शयेयुः।
6. स्वयं कृते अधिकतया प्राधान्यं भवेत्।
7. सन्दर्भानुसारम् व्याकरणमधीयते।
8. पाठ्यपुस्तकानां साहाय्येन व्याकरणाध्ययनं भवति, अतः अध्ययने छात्राः भीता न भवेयुः।
9. व्याकरणाध्ययनाय एषा सुलभा पद्धतिः।
10. लक्ष्यं प्रदर्श्य लक्षणं कल्प्यते अतः छात्राः रुचिं प्रदर्शयेयुः।
11. छात्राः अत्यन्तं सक्रियाः भवन्ति।

**आगमनपद्धत्यां विद्यमानाः दोषाः**

1. अध्यापकानां कृते क्लेशः अधिकः भवति अस्यां पद्धत्याम्।
2. शास्त्रगतानि उदाहरणानि ज्ञातुमवकाशो नास्त्यस्याम्।

3. व्याकरण शिक्षणे समय: बहु: अपेक्षित: भवेदस्याम् पद्धत्याम्।
4. सम्बद्धोदाहरणानामनुस्मरणमपि क्लेश: भवेत् छात्राणाम्।

**( ख ) निगमनविधि:—**(Deductive method)

**अर्थ**–लक्षणमनुलक्ष्यप्रदर्शनन्नाम निगमनविधिरिति। जोसफ लेण्डन् स्पष्टयति– ''शिक्षणं निगमनविधिद्वारा प्रथमं परिभाषा नियमो वा पाठ्यते। तत: सावधानमर्थं व्याख्याय, प्रयोगान् प्रदर्श्य तत्वानि स्पष्टीक्रियन्ते'' इति। ''अस्मिन् विधावध्यापक: प्रथमं नियमान् समुपस्थापयति। काचनोदाहरणानि प्रदर्श्य उक्तनियमान् लक्ष्ये समन्वेति''। लक्षणात् लक्ष्यं प्रति गच्छति निगमनविधि:। नियमान् प्रस्तूय प्रयोगप्रदर्शनं निगमनं भवति। लक्षणमनु लक्ष्य प्रदर्शनन्नाम निगमनविधिरिति। वस्तुत: आगमन–निगमन–पद्धत्योर्मध्ये विरोध: न भवति। आगमनपद्धत्या: कृते निगमन पद्धति: पूरका भवितुमर्हति। सूत्रं सम्पूर्णतयावगाहनपर्यन्तं आगमन– पद्धति–राश्रयणीया, तदनन्तरम् निगमन–पद्धति: आश्रयणीया। निगमन पद्धते: परम्परागत पद्धति:: सूत्रपद्धति: लक्षणपद्धतिरिति नामान्तराणि सन्ति।

Deduce इति आंग्ल भाषाया: धातु: अस्य मूलम्। तेन Deductive method प्रचलन्ति। सूत्रमनुसृत्य लक्ष्यानुस्मरणम् इति अस्यार्थ: भवति। विधिरयं सामान्याद्विशेषं प्रति, काल्पनिकात्सत्यं प्रति, स्थूलात्सूक्ष्मं प्रति, इत्यादीनि शिक्षण–सूत्राण्याश्रित्य वर्तते। उपरि निर्दिष्यानां समालोचनेनेदं स्पष्टं प्रतीयेत यत् निगमनन्नाम नियमानां, सूत्राणां, लक्षणानां वा प्रस्तावानन्तरं उदाहरणरूपेण प्रयोगप्रदर्शनमेवेति। यथा–''इको यणचि''इत्यत्र ''इक: स्थाने यण् स्याद् अचि परे'' इति नियममुक्त्वा 'प्रति+अपि 'इत्युदाहरणे नियमस्य समन्वय: क्रियते निगमनविधौ।

**निगमनविधेस्सोपानानि**–अस्य विधे: प्रयोग: क्रमबद्धरूपेण कानिचन् सोपानान्याश्रित्य क्रियते। तत्रक्रमे अधोलिखितपदानि भवितुमर्हन्ति–

**1. नियम:—**छात्राणांपुरत: कस्यचित्नियमस्योपस्थापनं क्रियते। यथा–शिक्षक: ''नम: स्वस्ति स्वाहास्वधाऽलं वषट्योगाच्च'' इति नियममुपस्थापयति।

**2. स्पष्टीकरणम्**–उक्त नियमस्य सरलै: वाक्यै: स्पष्टतया प्रतिपादनमेव भवति। यथा–पूर्वोक्तस्य सूत्रस्य स्पष्टप्रतिपादनं एवं भवितुमर्हति–नम:, स्वस्ति, स्वाहा, स्वधा, अलं, वषट् इति पदानां योगे चतुर्थी विभक्तिरेव भवति। **3. प्रयोगप्रदर्शनम्**– उक्त नियमस्य लक्ष्ये समन्वय: अत्र क्रियते। यथा– प्रकृतोदाहरणे शिक्षक: ''**हरये नम:, पुत्राय स्वस्ति, अग्नये स्वाहा, पितृभ्य: स्वधा, इन्द्राय, वषड्**'' इति प्रयोगान् प्रदर्श्य पूर्वोक्तं नियमं समन्वेति। तत: नियमं स्पष्टयति च।

**4. पुन: परीक्षणम्**–पृथगुदाहरणं प्रस्तूय नियमस्य परीक्षणं विधीयते। यथा– व्यवहारे एषां शब्दानां योगे नियम: कथं प्रवर्तते इति दर्शयितुं शिक्षक: व्यावहारिकाणि वाक्यानि उपस्थापयति। ''शिवाय नम:, शिष्याय स्वस्ति, ब्रह्मणे नम:, ''इति व्यवहारान् प्रदर्श्य नियमस्य पुन: परीक्षणं कारयति। उदाहरणानि प्रस्तौतुं छात्रानपि प्रेरयति।

**निगमनपद्धत्या:गुणाः**

1. अनया पद्धत्या स्पष्टतया व्याकरणमध्यापितुं शक्यते।
2. छात्रा:अनया पद्धत्या व्याकरणनियमान् ज्ञात्वा सुशब्दापशब्दनिर्णायका:भवितुं शक्नुवन्ति।
3. एषा मनोविज्ञाननियमविरूद्धा तथापि उच्चकोटौ विद्यमानाः बहवः वैयाकरणाः अनया पद्धत्या एव व्याकरणमधीत्य प्रख्याताः जाताः।
4. अनया पद्धत्या व्याकरणमधीताश्छात्राः भाषागताशुद्धीः न्यूनं कुर्युः। अल्पं लिखतु वदतु वा तेषां लेखने पठने च दोषाः न स्युः।
5. अस्यां भाषायां विशिष्ट ज्ञानसम्पादनार्थं एषा पद्धतिरावश्यकी इति।
6. अध्यापकस्य कार्यं सरली करोति।
7. छात्राः सक्रियाः भवन्ति, अल्पीयसि काले ज्ञानं प्रापयन्ति।
8. स्मरणशक्तिः वर्धयति, अतः छात्राः नियमान् कण्ठस्थं कुर्वन्ति।

**निगमनपद्धत्याः दोषाः**

1. पद्धतिरेषा अमनोवैज्ञानिकी।
2. अस्यां पद्धत्यां संज्ञा, परिभाषा, सूत्राणि च अत्यधिकानि भवन्ति, अतः एतेषां सर्वेषां कण्ठस्थीकरणम् वहुक्लेशकरमेव।
3. अनया पद्धत्या छात्राः व्याकरणम् अध्येतुं अभिरूचिं न प्रदर्शयेयुः।
4. व्याकरणाध्ययने छात्राः वहून् क्लेशानुभवेयुः।
5. नीरसतामुत्पादयति च।

विस्तृतरूपे व्याकरणशास्त्रशिक्षणं पश्यन्तु।

## (छ) रचनाशिक्षणम्

### (क) रचनायाः प्रकृति

रचनायाः शाब्दिकार्थः ''व्यवस्थापनं'' ''सज्जीकरणम्'' च वर्त्तते। रचना आंग्लभाषायां [Composition] कथ्यते। 'रचना' इत्यस्य शब्दस्य व्युत्पत्तिः 'रच्' धातोः युच् प्रत्ययेन सञ्जाता। भाषाक्षेत्रेषु रचनायाः तात्पर्यं विचाराणां भावानां च मौखिकी लिखिता वा क्रमबद्धा अभिव्यक्तिभिः वर्तन्ते। रचना लेखन-कौशलेन सम्बन्धितः अस्ति। संस्कृतभाषाशिक्षण प्रक्रियायां रचनाशिक्षणस्य महत्त्वपूर्णं स्थानं वर्तते। लेखनकौशलस्य महत्त्वपूर्ण- सोपानं रचनाकार्येण सम्पन्नं भवति। रचनाशिक्षणान्तर्गतं वाक्यरचना, अनुच्छेदरचना, निबन्धरचना, कथा-पत्र-लेखनादि च आगच्छन्ति। बेकलमहानुभागेनोक्तम्-''सम्भाषणकला विलक्षणमतिं प्रसाधयति, लेखनकला मानवस्य विचाराभिव्यक्तये निश्चितदिशां ददाति।'' रचना कार्येषु-

1. **आकांक्षा (Desire)** उद्देश्यविधेयश्च (कर्ताक्रियाच) समञ्जनम्।
2. **योग्यता (Deserts)** वाक्येषु शब्दार्थसम्बन्धः समुचितः स्यात्।

3. **आसक्तिः—**[Connection] कर्ता-क्रिया-मध्ये निकटता एव। त्रितयज्ञानयुक्तः एव रचनाकार्ये सक्षमो भवति।

## (ख) रचना-शिक्षणस्योद्देश्यानि

1. सरलसंस्कृते मौखिक-लिखितभावाभिव्यक्तिभिःक्षमतायाः विकासः करणीयः।
2. स्पष्टं क्रमबद्धं शुद्धभाषायां लेखनाभ्यासः कर्त्तव्यः।
3. श्लोकोपरि टीका, भावार्थादि-लेखनस्य दक्षतोत्पादनम्।
4. वर्णनात्मक-विचारात्मक विषयोपरि प्रभावशाली संस्कृते लेखनयोग्यताः।
5. शब्दानां सफलप्रयोगेण सह मातृभाषातः संस्कृते अनुवादः कार्यः।
6. रचनायाः विभिन्नशैलीनां परिचय-प्रदानम्।
7. प्रसंगानुसारं भावानुकूलभाषायां प्रयोगक्षमतायाः विकासः कर्त्तव्यः।
8. संक्षेपेण भावाभिव्यक्तिभिः क्षमतायाः विकासः करणीयः।
9. छात्रैः स्व भावनां स्वतंत्रतापूर्वकं स्वतंत्रशैल्यां अभिव्यक्त्यात्मक-ज्ञानसम्पादनं कार्यम्।
10. भावग्रहण-भावप्रकटयोः ज्ञान-सम्पादनम्।
11. कल्पनाशक्तेः सर्जनात्मकशक्तेश्च संवर्धनम्।
12. अनुसंधानप्रक्रियायां नैपुण्यसम्पादनम्।

## (ग) रचनाशिक्षणविधयः

1. **चित्रविधिः—**(चित्रोपरिप्रश्नकारित्वशिक्षणम्)

2. **व्याकरणानुवादविधिः—**( छात्रान् संस्कृतमाध्यमेन विचारस्यादानप्रदानम्)

3. **भाषायन्त्रविधिः—**( भाषाप्रयोगशालायां व्यवस्थापितयन्त्रैः सह शिक्षणम्)

4. **प्रश्नोत्तरविधिः—**( उपर्युक्तविधिः परिपालनमेव प्रश्नोत्तरविधिः)

5. **प्रत्यक्षविधिः—**( वार्तालापेन शिक्षणं, स्वतंत्रभावाभिव्यक्ति-संवर्धनम्।

6. **संरचनात्मकविधिः—**( भावग्रहणं भावाभिव्यक्तिः एव भाषासंरचनायाः मनोवैज्ञानिक-व्यवहारवादस्य परिकल्पनायाः संवर्धनम्) व्याकरणानुवादविधिः सिद्धान्तानुसारेण कार्यं कुर्वन्ति। प्रत्यक्षविधिः स्वतः संस्कृतभाषायामेव वाचने लेखने च दक्षः परिकल्पयति, संरचनाविधिः अनुत्तरितक्रमेण-''सरलात् काठिन्यं प्रति'' संरचना कुर्वन्ति। व्याकरणानुवादविधिं शिक्षयित्वा तरणार्थं प्रेरयति। प्रत्यक्षविधिः जले धक्कयित्वा स्वतः शिक्षणार्थं प्रेरयति। किन्तु संरचनाविधिः हस्तं गृहीत्वा तरणं शिक्षयति। अनुस्तरितक्रमेण परिपूर्णजले गृहीत्वा गच्छति।

7. **अभिक्रमितस्वाध्यायविधिः—**अयं विधिः सुनिश्चितसोपानमाध्यमेन पूर्णनियोजित-कार्यसम्पादनाय प्रोत्साहयति।

## (घ) रचनायाःप्रकारः

**प्रथमदृष्ट्या**–1. प्रतिलिपिः, 2. श्रुतिलिपिः, 3. अनुलिपिः, 4. अनुकरणम्, 5. उद्बोधनम्, 6. निरीक्षणम्, 7. सूत्रम्, इत्यादि माध्यमेन ज्ञान-विज्ञानसंवर्धनं भविष्यति।

**द्वितीयदृष्ट्या**–नियंत्रितरचना, मुक्तरचनाश्च। (1) नियंत्रितरचना–शिक्षक: शिक्षणबिन्दूनां निर्धारणं करोति। छात्रा:नियंत्रित बिन्दूनान्तर्गतं अभ्यासकार्यं कुर्वन्ति। यस्यान्तर्गतं–वाक्यरचना, अनुच्छेदरचना, भावार्थलेखनम्, वाच्यपरिवर्तनं, वाक्यसंशोधनम्, पत्रादिलेखनं वर्त्तते। (2) मुक्त (स्वतंत्र) रचना–छात्रा: स्वतंत्ररूपेण भावाभिव्यक्ति:=लेखनं भाषणं वा कुर्वन्ति। स्वतंत्ररचनान्तर्गत-निबन्ध-लेख-प्रबन्ध-कथा-उपन्यास: अन्यान्य पुस्तकादि लेखनकार्याणि च आगच्छन्ति।

**रचनायां वर्तनीप्रयोग:**—वर्तनीशब्द: संस्कृतस्य वर्तन शब्देन निर्मित:। यस्यार्थ: ''व्यवहारे प्रयुज्यमान:'' अर्थात् ''वर्णानां सार्थकसंयोजनमेव वर्तनी'' अनेन शब्देन 'अक्षर, ' 'हिज्जे, ' वर्णविन्यास: Spelling बोध्यते। लेखन शिक्षणे (वर्तनी) वर्णविन्यासस्य महत्त्वपूर्णंस्थानं वर्त्तते। उच्चारणानुगामी वर्तनी एवं च परम्परानुगामी रूपेण व्यवह्रियते। यथा–परिणाम= परिमाण, तिष्ठ, गच्छ, ऋषि=रिषि, ज्ञान=ग्यान, ब्रह्म=ब्रम्ह, इत्यादि दृश्यते। तत्तु सर्वथा अशुद्धमिति।

**( ङ ) रचनाया: आवश्यकगुणा:**

1. रचनायां सुलेख:, स्पष्टता, शुद्धता, आवश्यका:।
2. रचनालेखने क्रमबद्धता आवश्यकी।
3. भाषाशैली सरला, एवं च व्याकरणं नियमानुकूलं स्यात्।
4. विरामचिह्नानां प्रयोग: यथास्थानं भवेत्।
5. रचनायां तर्क–वितर्क:, चिन्तनशीलं विवेचनं स्यात्।
6. भावानुकूलभाषाया: प्रयोग: करणीय:।
7. अनावश्यकं निरर्थकशब्दानां प्रयोग: न कर्त्तव्य:।

## ( ज ) अनुवादशिक्षणम्

यदा प्रादेशिकभाषाणामुत्पत्ति: जाता तदारम्भ्यानुवादपद्धति: संस्कृतक्षेत्रे प्रचारिता जाता। अत: सिद्धयति यत् एषा पद्धति: प्राचीना अस्ति। नाटकानि, इतिहास:, व्याकरणम्, ज्योतिषम् इत्यादय: अंशा: प्रत्यक्षपद्धत्या पठिता: भवन्तीति वेदान्तशिक्षा, प्रादेशिक–भाषासु पाठिता: भवन्तीति विदुषामभिप्राय:। चार्लेस्वुड्स् घोषणापत्रात् आरभ्य 1986वर्षे नूतन- शिक्षानीतिपर्यन्तं प्रादेशिकभाषा एव शिक्षणमाध्यमं स्यु: इति स्पष्टम् उद्घोषितवन्त:। अनेन अनुवादपद्धत्या: कृते सर्वोच्चस्थानं लब्धम्। केषाञ्चन् विदुषां मतं यत् मातृभाषां विहाय अवशिष्यास्सर्वा: भाषा: अनुवादपद्धत्या अध्येतव्या इति। अनुवाद: समीकरणस्य प्रथमं सोपानम् अस्ति। अनुवादस्य कृते इदम् आवश्यकं भवति यत् भाषाया: भाषान्तरेण य: अनुवादो भवति तत्र छात्रस्य उभयो: भाषयो: पूर्णाधिकार: स्यात्।

**( क ) अनुवादशिक्षणस्योपयोगित्वम्**

1. छात्राणाम् शब्दकोशे वृद्धिर्भवति।

2. उभयो: भाषयो: ज्ञानं भवति।
3. अन्यासु भाषासु विद्यमानं नवीनं ज्ञानम् भवति।
4. मूलभावानां रक्षणं भवति।
5. अनुवादमाध्यमेन संस्कृतशिक्षणं रोचकं सरलम्, आकर्षकं, सुग्राह्यञ्च भवति।
6. सर्जनात्मिकां शक्तिं विकासयितुं सहायको भवति।

**( ख ) अनुवादशिक्षणस्योद्देश्यानि**

1. सरलतया स्पष्टतया विषयावबोधनम्।
2. शब्दानां धातूनां अर्थावगाहनम्।
3. भाषान्तरीकरणशक्तेस्संबर्धनम्।
4. मातृभाषात: संस्कृतभाषायां, संस्कृतभाषात: मातृभाषायाञ्च वाक्यरचना- ज्ञानसम्पादनम्।
5. संस्कृतभाषायां दोषरहित-ज्ञान-सम्पादनम्।
6. संस्कृतभाषायां भावग्रहणं भावव्यक्तीकरणं अनयो: ज्ञानसम्पादनम्।
7. तुलना, निरीक्षणं भाषागतमर्यादाया: निवेदनम्।
8. मातृभाषायां संस्कृतभाषायां च अभिनिवेशसम्पादनम्।
9. संस्कृतभाषायां दक्षतोत्पादनम्।

**( ग ) अनुवाद-शिक्षणविधि:**

**1. मातृभाषाविधि:**—मातृभाषायां समीचीनाभिवेश: भवति छात्राणाम्। छात्रा: मातृभाषायां स्वीयान् अभिप्रायान् सरलतया स्पष्टतया प्रकटयेयु:। संस्कृतभाषा छात्राणां मातृभाषा नास्ति। एषैका नूतना भाषा। नूतनाभाषा तथैव भाषामाध्यमेन अध्यापिता चेत् विषयावगाहनं क्लिष्टतरं भवेत्। अत: अध्यापनविषयेऽपि मातृभाषामाध्यमं अत्यन्तोपयुक्तम्। यतोऽहि मातृभाषायां छात्रा: भावव्यक्तीकरणं, भावग्रहणं च सम्यक्तया कुर्यु:। मातृभाषायां छात्रा: विषयं झटिति जानीयु:। एतदर्थं मातृभाषा बोधन-माध्यमभाषा एव स्यात्। एवं मातृभाषा-बोधन-माध्यमत्वेन यत्र व्यवह्रियते, तत्र अनुवाद-शिक्षणपद्धतिराश्रिता इति ज्ञायते। एवं क्रियते चेत् छात्राणां अध्ययने शीघ्रतया साफल्यमुपलभ्यते। संस्कृतमपि मातृभाषायामध्यापितं चेत् छात्राणां समीचीनं सौलभ्यञ्च भवेत्। विषयमपि सत्वरं जानीयु:। इदानीं समग्रभारते एषैव पद्धति: संस्कृतक्षेत्रे आश्रीयमाणास्ति औन्तरा: हिन्दीभाषा- माध्यमेन। दाक्षिणात्या: स्वीयासु भाषासु संस्कृतमध्यापयन्ति। शिक्षणे मातृभाषामाध्यम एव क्षेमकरं इति सर्वै: स्पष्टीकृता। एतदर्थं संस्कृतभाषाऽपि मातृभाषामाध्यमेन अध्यापनीया इति बहव: वदन्ति। परमाधुनिका: वदन्ति यत् मातृभाषामाध्यमेन संस्कृतमध्यापितञ्चेत् संस्कृतभाषायां प्रयोगनैपुण्यं, भाषणकौशलं, कथन-शक्ति: भाषारचनाञ्च ज्ञातुमवकाश: नोपलभ्यतेति।

**2. पुस्तकविधि:**—पुस्तकाध्यापनसमये अवलम्बनीय:।

**3. दुभाषिया विधि:**—देशी-विदेशी भाषणक्रमे दुभाषियाविधि: कल्पनीय:।

**4. तुलना एवं अनुवाद विधिश्च**–तुलनात्मकाध्ययने अनुवादविधिः अवलम्बनीयः।

**नोट**–संज्ञा-सर्वनाम शब्दाः, धातवः, अव्यय, विशेषण, क्रियाविशेषणशब्दाः, व्याकरण-नियमानामनुवादः आदि।

**( घ ) अनुवादस्यरूपम्**

1. अक्षरानुवादः,
2. छायानुवादः,
3. शब्दानुवादः,
4. तथ्यानुवादः,
5. व्याकरणांशः,
6. उदाहरणम्,
7. अभ्यासः,
8. अभीष्टसंकेतः,

**( ङ ) अनुवादशिक्षणे अवधेयाः अंशाः**

1. अनुवादकार्यं छात्राणां मानसिकस्तरानुकूलं भवेत्।
2. तुलनात्मकशक्तेः विकासाय अवसरः प्रदातव्यः।
3. अधिकाधिकम् अभ्यासकार्ये बलं दातव्यम्।
4. व्याकरणनियमानां ज्ञानं तेषां कण्ठस्थीकरणे च बलं दद्यात्।
5. लिखितमौखिककार्याणां संशोधनं कुर्यात्।

卐 卐 卐

# 8
# पाठ्य-योजना
# Lesson Plan

## (क) हरवर्टपञ्चपदी
## 8.1 Herbartian Five Steps

**हरबार्ट जान् फेडरिक्**–(1776–1841) जर्मन्देशीयः। अयमादौ शिक्षावेत्ता तदनन्तरं तत्त्ववेत्ता च। अयं शास्त्रीयशिक्षणपद्धतिं प्रतिपादितवान्। शिक्षणविधाने अनेन प्रतिपादितानि पञ्चसोपानानि सर्वत्र विख्यातानि। अध्यापक-शिक्षणगतायाः पाठयोजनायाः निर्माणे अनेन प्रतिपादितानि सोपानानि सर्वत्र उपयुज्यन्ते।

हरबार्ट महोदयेन प्रतिपादितानि सोपानानि पञ्च। तानि यथा–

**1. प्रस्तावना-(उन्मुखीकरणम्)** [preparation or motivation] पूर्वज्ञानात् परिचितं भूत्वा नवीनज्ञान प्रस्तुतीकरणदिशायां स्पष्टविवेचनम्, उद्देश्यकथनम्, उत्साह-वर्द्धनम्, पाठोन्मुखीकरणम्, सामान्य-विशेष्योद्देश्यानि।

**2. प्रस्तुतीकरणम्-( प्रदर्शनम् )** [Presentation] छात्राणां मानसिक-क्रियाः सक्रियं कारयित्वा नवीनपाठ-प्रस्तुतीकरणम्। विषयोपस्थापने अध्यापकद्वारा आदर्शवाचनम्, छात्रैः अनुकरणवाचनम्, सन्धि-विच्छेदः, समास-विग्रहः, दण्डान्वयः, खण्डान्वयः, विवेचनम्, भावपरीक्षायाः प्रश्नाः आगच्छन्ति।

**3. तुलना-अमूर्तीकरणम्**-[omparision and abstraction] पाठ्यविषयं स्पष्टी-करणार्थं अन्येन उद्धरणेन तुलनां कारयित्वा अर्थः बोधगम्यः करणीयः। भाषाशिक्षणे काठिन्य-निवारणम्, विस्तृत-व्याख्यानम्।

**4. सामान्यीकरणम्**=[Generalisation] सम्पूर्णपाठस्य सारांशः, पुनरावृत्तिः, शब्दार्थ-विवेचनम्। भावार्थ-कथनम्। कविताशिक्षणे समानभावस्य कविताः बोधगम्याः करणीयाः।

**5. प्रयोगः—अनुप्रयोगः**=[Conclusion/Application] अर्जितज्ञानस्यावश्यकतानुसारं प्रयोगः (अभ्यासकार्यः) करणीयः। कक्षा-कार्यम् एवं गृह-कार्यमपि प्रयोगाय प्रदातव्यम्।

**अस्याः पद्धत्याः उद्देश्यानि**

1. खण्डशः पाठ्यांशबोधनम्।
2. प्रस्तावनातः आरभ्य गृहकार्यं यावत् छात्रेषूत्साहसंवर्धनम्।
3. प्रस्तावनया पाठोन्मुखीकरणसम्पादनम्।
4. तुलनात्मकज्ञानसम्पादनम्।
5. अर्जितज्ञानेन साकं प्रस्तुत-ज्ञानेन सह सम्बन्धस्थापनम्।
6. ज्ञातांशस्य दृढीकरणाय गृहकार्यदानम्।

**अस्याः पद्धत्याः गुणाः**

1. छात्राणामवगाहनशक्तिस्संवर्धिता भवेत्।
2. छात्राणां स्वयंशक्तिः संवर्धिता भवेत्।
3. इयमेका मनोवैज्ञानिकी पद्धतिः।
4. अनया पद्धत्या प्रतिपदं प्रतिवाक्यं च पूर्णतयाध्येतुं शक्यते।
5. छात्रः निरन्तरं परीक्षिताः भवेयुः।
6. कक्षात्यागानन्तरमपि छात्राः पाठ्यांशे संलग्नाः भवेयुः।
7. अनया पद्धत्या बोधनाय अध्यापकाः अपि उत्साहिनः, छात्राश्च सदा सक्रियाः भवेयुः।

**अस्याः पद्धत्याः दोषाः**

1. पाठ्यक्रमः समये पूर्णः न भवेत्।
2. ज्ञानार्जनाय सुदीर्घः कालः भवेत्।
3. बुद्धिमतां छात्राणां कृते एव एषा उपयुक्ता भवेत्।

**निष्कर्षः**

हरबार्ट-पञ्चपदी-नाम्ना विख्याता, एषा पद्धति इदानीं विश्वविख्यातास्ति। बहूषु विद्यालयेषु महाविद्यालयेषु प्रशिक्षण-महाविद्यालयेषु च एषा पद्धतिराश्रीयमाणास्ति। ज्ञाताज्ञातं प्रति, सरलात् काठिन्यं प्रति, इत्यादयः शिक्षासिद्धान्ताः अस्यां पद्धत्यामन्तर्भूतास्सन्ति। प्रस्तावनया छात्राणां पूर्वज्ञानं-परीक्षितं भवति। उद्देश्यकथनेन पाठोन्मुखीकृता छात्राः, आदर्शवाचनेन प्रेरिताः भूत्वा छात्राः आदर्शवाचनं अनुसृत्य अनुवाचनं कुर्युः। अनुवाचनसमये समागताः दोषाः इतरछात्रैः निवार्यन्ते। पाठप्रबन्धने सर्वेषां लक्षिताधिगम-विशेषाणां कृते प्रामुख्यं प्रदीयते। पाठप्रबन्धनानन्तरं सारकथनम्, मौनवाचनम्, पुनरावृत्ति-प्रश्नान् पृच्छति। ज्ञातांशदृढीकरणाय गृहकार्यं प्रदीयते। अनया छात्राः पूर्णतया पाठितपाठे निष्णाताः भवितुमर्हन्ति। अनया पद्धत्या पाठ-पाठनाय अत्यधिक-समय-अपेक्षितेऽपि एषा पद्धतिः श्रेष्ठतमा वर्त्तते। अस्यां पद्धत्यां बहवः गुणाः सन्ति। अतः विश्वे बहुत्र प्रशिक्षणस्तरे उपयुज्यते एषा पद्धतिः। ईषत्परिवर्त्तनैः सर्वत्र प्रशिक्षणक्षेत्रे एपैवाश्रीयते।

## ( ख ) पाठ्ययोजनायाःप्रकृतिः, उद्देश्यानि, आवश्यकता च।
## 8.2 Lesson Plan–Nature, Objectives and Needs.

निश्चितलक्ष्यस्य प्राप्तये, निश्चितानामुद्देश्यानां साधनाय कार्यप्रणाली सुनिश्चिता स्यात्। एषैव 'योजना' इति कथ्यते। गृहनिर्माणात् पूर्वं यथा योजना निर्मीयते, तथा तदनुसारं कार्यं क्रियते तथैव अध्यापकेन कक्षायां पाठस्य बोधनात् पूर्वं बोधनकार्यस्य योजना निर्मेया भवति। एषा योजना विषयानुगुणं, छात्राणां स्तरानुसारञ्च स्यात्। अध्याप्य विषयाणामपि त्रिधा विभागः सिध्यति। यथा:—

**1. ज्ञानपाठेः**—नूतनशब्दज्ञानम्, गद्यपाठः, व्याकरणं, रचना, अनुवादः, इत्यादयः।

**2. कौशलपाठे :**—उच्चारणं, मौखिकनिबन्धः, भाषणं, दृष्टलेखनं श्रुतलेखनं, वाचनम् इत्यादयः।

**3. सौन्दर्यपाठे :**—पद्यपाठः, वर्णनं, नाटकम् इत्यादयः।

**पाठयोजनायाः अर्थः, परिभाषाश्च**

कक्षाप्रवेशात् प्राक् पूर्वपाठसम्बद्धतथ्यानां क्रमशःएकत्रीकरणम् एव पाठयोजनायाः सामान्यप्रयोजनं भवति। पाठयोजना नाम पाठस्य तादृशसन्नाहःयत्र अध्यापकःकक्षायां पाठं विषयवस्तु वा छात्राणां पुरतः केन क्रमेण, केन विधिना, कैः सहायकसाधनैः कियति काले उपस्थापयेत् इति निर्धारयति। बॉसिंग (Bossing) महोदयानुसारं ''शिक्षणोद्देश्यानि ज्ञातुं निश्चिते समये शिक्षकः याः क्रियाः नियोजयति, तासां क्रियाणां वर्णनरूपमेव पाठयोजना इत्युच्यते।''

बिनिंग् तथा बिनिंग् (Bining &Bining) महोदयौ लिखतः—''दैनिकपाठयोजनायाः निर्माणे उद्देश्यानां परिभाषीकरणं, पाठ्यवस्तूनां चयनं, व्यवस्थीकरणं, विधानां प्रस्तुतीकरण-निर्णयश्च प्रमुखाः अंशाः भवन्ति।''उपर्युक्तपरिभाषाभिः इदं स्पष्टं भवति यत् वैज्ञानिकयन्त्रेण या क्रमबद्धशिक्षणयोजना शिक्षणात् प्राक् सज्जीक्रियते सा पाठयोजना इति उच्यते।

**पाठयोजनायाःउद्देश्यानिः**—(Objectives of Lesson plan)

1. समयानुसारं पाठनीयस्य विषयस्य निर्धारणम्।
2. शिक्षणोपकरणानां, दृश्यश्रव्योपकरणानाञ्च सञ्चयः।
3. पाठनीयविषये सामान्य अंशानां, विशिष्ट अंशानाञ्च विवेचनम्।
4. मूल्याङ्कनप्रविधीनामुपयोगः।
5. विभिन्नानामंशानां पाठनाय अपेक्षितानां पद्धतीनां, शिक्षणयुक्तीनाञ्च निर्णयः।
6. छात्राणां बौद्धिकस्तरस्य उन्नयनम्।
7. पाठ्यक्रमे सक्रियतासम्पादनम्।
8. विविधपद्धत्यनुगुणं विषयाणां प्रस्तुतिकरणम्।
9. अध्यापनसमये छात्रप्रतिक्रियाणाम् अवगमनम्।

10. छात्राणां नूतनज्ञानार्जने साहाय्यम्।
11. शिक्षणकार्ये मनोवैज्ञानिकोद्देश्यानां पूर्ति।
12. शिक्षकस्य शिक्षणधाराया:व्यवस्थीकरणम्।
13. कक्षायां छात्राणां ज्ञानार्जनक्षमतानाम् अभिज्ञानम्।

एतानि उद्देश्यानि मनसि निधाय पाठयोजनाया: निर्माणं कर्तव्यम्। प्रशिक्षणार्थिन: छात्राध्यापका: विस्तृतपाठयोजनां निर्मान्ति। अनुभवशालिन: अध्यापकास्तु संक्षिप्तां योजनां लिखन्ति।

**पाठयोजनाया: आवश्यकता: महत्त्वञ्च।**

(Needs and importance of lesson plan)

पाठयोजना किञ्चन सर्जनात्मकं कार्यं विद्यते। केषाञ्चन विदुषां विचारे इयं मनोवैज्ञानिक-सम्प्रत्ययानां कौशलानां च विकास: अपि भवति। संक्षिप्तरूपेणपाठयोजनाया: आवश्यकतामहत्त्वयो: विषये एतानि कारकाणि (Factors) महत्त्वपूणानि वर्तन्ते–

1. कक्षायां शिक्षणात् प्राक् शिक्षणे प्रयोक्ष्यमाणानां सहायकसाधनानां विषये पाठयोजना शिक्षकं पूर्णतया बोधयति।
2. बोधनालक्ष्याणां विषये पाठयोजना सदवगाहनं कल्पयति।
3. पाठ्यांशान् क्रमपद्धतौ बोधनाय सहकरोति।
4. छात्राणां पूर्वज्ञानेन सह नूतनज्ञानं योजयति।
5. बोधनोपकरणानि, पद्धती:, विधानश्च पाठ्यांशे प्रावेशयितुम् उपकरोति।
6. उपाध्याय: बोधनाविषये एव स्थित्वा क्रमपद्धतौ बोधनाय सहायं करोति।
7. छात्राणां प्रवर्तना: नियन्त्रयति।
8. छात्राणां वैयक्तिकभेदान् आधारीकृत्य कक्ष्यावोधनकृत्यानि व्यवस्थीकरोति।
9. पाठयोजना शिक्षणक्रियाणाम् अधिगमस्वरूपै: सम्बन्धं स्थापयति।
10. पाठयोजना पाठस्य विभिन्नस्तरेषु क्रियासु च सम्बन्धं स्थापयति।
11. उपाध्यायस्य तथा छात्राणां कल्पनाशक्तिं वर्धयति।
12. बोधने छात्राध्यापकानाम् आत्मविश्वासं दृढयति।
13. पाठयोजना विभिन्नविषयवस्तूनां मध्ये सम्बन्धं स्थापयति। एतेन अध्यापक: प्रतिदिनं पाठ्यमानपाठस्य परस्परसम्बन्धं कल्पयित्वा पाठयति।

**(ग) गद्य-पद्य-नाटक-अलंकार-व्याकरणादिनां-पाठ्ययोजना।**

8.3 Lesson Plan of Prose, Poetry, Drama, Alankar and Grammar.

1. विद्यालयस्यनाम- 2. दिनांक:—
3. अवधि:— 4. अन्तरम्
5. विषय:—**गद्यशिक्षण** 6. छात्राध्यापकस्यनाम-

7. कक्षा- 8. छात्रसंख्या-
9. वासर :— 10. प्रकरणम्-
11. पाठ्यविषय:— 12. छात्राणांमध्यायु:

## (क) गद्यशिक्षण

**1. सामान्योद्देश्यानि:—स्तरानुसारेण सामान्य गद्यशिक्षणस्योद्देश्यानि प्रदेयु:।**

**2. विशिष्टोद्देश्यानि:**—1. नूतनशब्दानां परिचय:, व्याकरणांशानां ज्ञानम्, विचार-विश्लेषणम्, बोधनोपकरणानि-पुस्तकं, श्यामफलकं, सुधाखण्डं, मार्जनी, सूचिकादण्ड:, कथाविषय-प्रतिपादकं चित्रम्, इत्यादि।

**3. सहायकोपकरणानि**-श्यामपट्ट:, सुधावर्तिका, मार्जनी, संकेतयष्टि:, वेष्टनफलकम् Roller Board, चित्रम्, दृश्यश्रव्यविशिष्टोपकरणानि।

**4. प्रस्तावना:**—पूर्वज्ञानमाश्रित्य परीक्ष्यमाणा: प्रश्ना: एवं च समस्यात्मकप्रश्ना: प्रष्टव्या:, तथा च नूतनपाठस्य समन्वय: सम्पादनीय:। अर्थात् उद्देश्य कथनेन गद्यपाठस्य उद्घोष: करणीय:।

**5. आदर्शवाचनम् :**—पाठितगद्यपाठस्य स्पष्टोच्चारणपूर्वकं अध्यापकेन उचितभाव-सहितेन आदर्शवाचनं करणीयम्।

**6. अनुवाचनम्:**— छात्रै: आदर्शवाचनस्य अनुवाचनं करणीयम्।

**7. अशुद्धिसंशोधनम् :**—अध्यापक: अनुवाचनसमये छात्रै: अशुद्धोच्चारितशब्दान् श्यामपट्टे लिखित्वा व्यष्टिरूपेण सामूहिकरूपेण च शुद्धोच्चारणाभ्यासं कारयति।

**8. काठिन्यनिवारणम् :**—शिक्षक: गद्यांशे आगतानां कठिन-शब्दानाम् अर्थं विविध-विधिभि: प्रविधिभिश्च छात्रान् पृच्छति। उद्बोधनविधे:—1. वस्तुप्रदर्शनम्, 2. प्रत्यक्षक्रिया (अभिनयादि) 3. प्रतिकृति:—'इन्द्रियार्थसन्निकर्षजन्यज्ञानं प्रत्यक्षम्' प्रतिकृतिभि: आश्रम-वन-नदी-पर्वत-प्रपादीनां शब्दानामर्थस्पष्टीकरणे सारल्यं भवति। 4. चित्र-रेखाचित्र-मानचित्रादय:दर्शयित्वा शब्दानामर्थज्ञापने सौविध्यं भवति।

**9. विषयबोधनम् :**—अध्यापक: पाठस्य स्पष्टीकरणाय सम्यक् अवबोधाय च गद्यांशेन सम्बद्धान् सरलप्रश्नान् छात्रान् पृच्छेत्।

**10. रिक्तस्थानपूर्ति:**—कोष्ठाके प्रदत्तानां शब्दानाम् उचितरूपं चित्वा रिक्तस्थाने लिखत।

**11. सारांश-कथनम्:**—अध्यापक: गद्यपाठस्य विस्तृतं व्याख्यानं कृत्वा तस्य सारांशं संक्षेपेण प्रस्तौति। छात्रानपि संस्कृते, मातृभाषायां वा कथयितुं प्रेरयति।

**12. विचारविश्लेषणात्मकपुनरावृत्तिप्रश्ना:**—शिक्षक: गद्यांशे आगतान् क्लिष्टभावान् स्पष्टयितुं विचारविश्लेषणात्मकप्रश्नान् छात्रान् पृच्छति। तेषां समक्षधाने छात्राणां साहाय्यमपि करोति। यथा-1. ज्ञानात्मकप्रश्ना:, 2. अवबोधनात्मकप्रश्ना:, 3. विचारविश्लेषणात्मकप्रश्ना, 4. सौन्दर्यानुभूतिप्रश्ना:, 5. पुनरावृत्तिप्रश्ना:

**13. मौन वाचनम्-** अध्यापकः छात्रान् मौनवाचनाय निर्दिशति। मौनवाचनस्य जीवने अत्यधिकं महत्त्वं विद्यते। साहित्यस्य अवबोधनं, पठनं, आत्मसात्करणं मौनवाचनेन एव कर्तुं शक्यते। मौनवाचनात् परम् अज्ञातांशान् प्रष्टुं सूचनां ददाति।

**14. कक्षाकार्यम्** -वाक्य प्रयोगादि कार्यं करणीयम्,

**15. गृहकार्यम्** -लब्धस्य ज्ञानस्य उपयोगःरचनाकौशलस्य विकासः करणीयः।

**16. मूल्यांकनम्**-प्रत्येकं सोपाने साधनीयानामुद्देश्यानां सिद्धेः ज्ञानाय मूल्याङ्कनं कर्तव्यम्। वस्तुनिष्ठप्रश्नद्वारा छात्राणां विषयज्ञानं, तात्कालिकस्मृतिः, अल्पकालिकस्मृतिश्च परीक्ष्यते।

1. मूल्याङ्कनेन ज्ञायते यत्-उद्देश्यानां प्राप्ति अभवत् न वा? इति।
2. अध्यापकः समुचितम् उपचारात्मकम् अनुदेशनं दातुं शक्यते।
3. मूल्याङ्कनेन शिक्षणविधिनां प्रविधिनाञ्च उपादेयता न्यूनता च ज्ञाता भवति।
4. छात्राणां व्यवहारपरिवर्तनानां परीक्षणं भवति।
5. मूल्याङ्कनप्रक्रियायां मानदण्डः निर्धारणं परीक्षायाः महत्त्वपूर्णं कार्यं भवति।

**पद्यशिक्षणेऽपि गद्यवदेव पाठयोजना भवति। किन्तु वाचने, व्याख्याने च ईषद्भेदो भवति। यथा–**

### (ख) पाठ-योजना Lesson plan पद्यशिक्षणम्-

**1. प्रस्तावना**–पद्यशिक्षणे प्रस्तावनायां काव्यमयं वातावरणमध्यापकेन स्रष्टव्यं भवति। 1. काव्यविषये छात्राणां पूर्वज्ञानं आधृत्य प्रस्तावनां कुर्यात्। 2. कवेः काव्यस्य वा विषये सम्भाषणेन प्रस्तावनां रचयेत्।

**2. उद्देश्यकथनम्**-अध्येतव्ये पद्ये विषयस्य, भावस्य, रसस्य, वा संक्षेपेण निर्देशं कुर्यात्।

**3. प्रस्तुतिकरणम्**-उद्देश्यकथनात्परं पद्यस्य अध्यापनमारभ्यते-**(क) आदर्शवाचनम्**-अध्यापकः द्विवारं त्रिवारं वा पद्यं वाचयेत्। **(ख) अनुकरणवाचनम्**-छात्रैःअनुवाचनम्। **(ग) विहितविधिनाव्याख्यानम्। (घ) सौन्दर्यानुभूतिः। (ङ) मौनवाचनम्**-काव्यसौन्दर्यस्य अनुभूतये मौनवाचनम् अत्यन्तमुपकरोति। **(च) पुनरावृत्तिः**—पुनरावृत्तिः अध्यापकः रसानुभवाय पद्यस्य सस्वरवाचनं करोति। **(छ) कक्षाकार्यम्-** मौखिकं, लखितं वा कक्षाकार्यं कारयेत्।

**4. गृहकार्यम्**–ततःपरं विरामसमये रचनात्मकं सरलं कार्यं दद्यात्।

### (ग) पाठ-योजना-Lesson Plan

**रूपकशिक्षणम्–**

1. सामान्योद्देश्यानि,
2. विशिष्टोद्देश्यानि,

3. सहायकोपकरणानि,
4. पूर्वज्ञानम्,
5. प्रस्तावना,
6. उद्देश्यकथनम्
7. प्रस्तुतिकरणम्,

(क) अध्यापकस्य आदर्शवाचनम्, छात्राणाम् अनुवाचनम्, (ख) कठिनशब्दानामर्थबोधनम्, सन्धिविच्छेद-समास-विग्रहः, नाटकाभिनयः सम्पादनीयः। भावविश्लेषणम्, चरित्रचित्रणम्।

8. पुनरावृत्तिःप्रश्नाः,
9. गृहकार्यम्-छात्राःगृहे सम्भाषणस्य अभिनयस्य च अभ्यासं कुर्वन्ति।

## (घ) रचनाशिक्षणस्य पाठ-योजना Lesson Plan

1. सामान्योद्देश्यानि,
2. विशिष्टोद्देश्यानि,
3. सहायकोपकरणानि,
4. पूर्वज्ञानम्,
5. प्रस्तावना,
6. उद्देश्यकथनम्
7. प्रस्तुतिकरणम्-प्रश्नोत्तरेण, चित्रेण, तर्कवितर्केण, रूपरेखया, एवं श्यामपट्टकार्यम्।
8. छात्रैः लेखनकार्यम्,
9. संशोधनम्-(क) श्यामपट्टोपरि शुद्धं रूपं स्पष्टतः लेखनीयम्। (ख) संशोधनम् रक्तमसिना (Red Ink) भवितव्यम्। (ग) छात्रैः परस्पर-उत्तरपुस्तिकायाः संशोधनमपि कारयितव्यम्। (घ) शुद्धोच्चारणाभ्यासः अवश्यमेव कारयितव्यम्।
10. गृहकार्यम्।

## (ङ) अनुवादशिक्षणस्य पाठ-योजना Lesson Plan

1. सामान्योद्देश्यानि,
2. विशिष्टोद्देश्यानि,
3. सहायकोपकरणानि,
4. पूर्वज्ञानम्,
5. प्रस्तावना,
6. उद्देश्यकथनम्

7. प्रस्तुतिकरणम्-अनुवादः—शिक्षकः छात्रेभ्यः अनुवादं लेखनाय वदिष्यति स्वयञ्च कक्षायाः निरीक्षणं करिष्यति। अथवा श्यामपट्टोपरि लेखयिष्यति।

8. छात्रैः लेखनकार्यम्,

9. संशोधनम्-(क) श्यामपट्टोपरि शुद्धं रूपं स्पष्टतः लेखनीयम्। (ख) संशोधनम् रक्तमसिना (Red Ink) भवितव्यम्। (ग) छात्रैः परस्पर-उत्तरपुस्तिकायाः संशोधनमपि कारयितव्यम्। (घ) शुद्धोच्चारणाभ्यासः अवश्यमेव कारयितव्यम्।

10. मौखिककार्यम्-(गणेश पत्र लिखता है)

1. अस्मिन् वाक्ये कर्ता कः अस्ति? गणेशः।
2. कर्त्ता कस्मिन् वचने अस्ति? एकवचन में।
3. अस्मिन् वाक्ये क्रिया का अस्ति? लिखता है।
4. क्रिया कस्मिन् वचने अस्ति? एकवचन में।
5. 'लिखता है' इदं पदं कस्मिन् लकारे अस्ति? लट् लकार में।
6. 'लिख्' धातोः लट्लकारस्य प्रथमपुरुषे एकवचनस्य किं रूपं भवति? लिखति।
7. सम्पूर्णवाक्यस्य संस्कृतभाषायामनुवादं कुरु? गणेशः पत्रं लिखति।

11. गृहकार्यम्।

## (च) व्याकरण-पाठयोजना-1 (Lesson Planning)

### (परम्परागतविधिः, आगमननिगमनविधिमाश्रित्य।)

विद्यालयस्य नामः— कक्षाः—
छात्रध्यापकस्य नामः— वर्गः:—
विषयः:— कालांशः:—
प्रकरणम् (गुण सन्धि) :— अवधिः :—
दिनाङ्कः:— छात्राणां मध्यायुः :—
वारः:—

**सामान्योद्देश्यानि**

1. ध्वनितत्त्वेन छात्रानां परिचयप्रदानम्।
2. संस्कृतशब्दानां शुद्धरूपेण ज्ञानप्रदानम्।
3. अशुद्धोच्चारणं दूरीकरणार्थ स्थानप्रयत्नानुसारं वर्णानामुच्चारणम्।
4. शुद्धवाक्यरचनायाः ज्ञानप्रदानम्।
5. पदानां सम्यक् प्रयोगार्थं लिङ्गानुशासनस्य ज्ञानप्रदानम्।
6. तर्क-रचनाशक्त्योर्विकासः।

**विशिष्टोद्देश्यानि**-छात्रान् स्वरसन्धेःद्वितीयो भेदः"गुण सन्धिः" विषये विशेषज्ञान-प्रदानम्।

**पूर्वज्ञानम्**-छात्राः स्वर सन्धेः प्रथमो भेदः "यण् सन्धिः" विषये अध्ययनमभ्यासं च अकुर्वन्। छात्राः सन्धेः सामान्य-अर्थं महत्त्वं च जानन्ति।

**सहायकोपकरणानि**-श्यामफलकः, सुधाखण्डः, मार्जनी, पाठ्यपुस्तकं, सन्धेयपत्राणि च।

**प्रस्तावना**-अध्यापकः कक्षायाः श्यामपट्टोपरि निम्नलिखितपदानि लिखित्वा छात्रान् प्रक्ष्यन्ति।

1. इत्यादि 2. स्वागतम् 3. पित्रादेशः 4. लाकृतिः।

प्रश्नाः संभावितोत्तराणि

1. प्रथमपदस्यसन्धि-विच्छेदं कुरुत?-----इति+आदि=इत्यादि (यण्सन्धि)

2. एतयोः पदयोः कयोः वर्णयोः सन्धिं भवति?--इ+आ=य।

3. अन्य पदानां सन्धि-विच्छेदं कुरूत? सु+आगतम्=स्वागतम्,

पितृ+आदेश=पित्रादेश, लृ+आकृतिः=लाकृतिः।

4. एतयोः पदयोः कयोः वर्णयोः सन्धिः भवति? उ+आ=व, ऋ+आ=र, लृ+आ=ल,

5. गुणसन्धिविपये भवन्तः किं जानन्ति? (**समस्यात्मकोऽयं प्रश्नः**)

**उद्देश्यकथनम्**-अद्य वयं "गुण-सन्धि" विषये विशेपरूपेण अध्ययनं करिष्यामः।

**प्रस्तुतीकरणम्**-अध्यापकः श्यामफलके पूर्वलिखितानि उदाहरणानि उपस्थापयति। यथा-

अआ+ इ=ए/देवेन्द्रः, परमेश्वरः, गणेशः, उपेन्द्रः, हरेन्द्रः इत्यादि ( क्रमिक सन्धिविच्छेदं कुरूत) देव+इन्द्रः=देवेन्द्रः।

अ आ+उ=ओ /सूर्य+उदयः=सूर्योदयः, चन्द्रोदयः, छात्रोपस्थितिः, महोदयः, लम्बोदर इत्यादि।

अ आ+ऋ=अर् /देव+ऋषि=देवर्षिः, महर्षिः, राजर्षिः, सप्तर्षिः।

**निरीक्षणम्**-छात्राः प्रस्तुतानि उदाहरणानि सावधानतया निरीक्ष्य परिवर्तनविषये चिन्तयन्ति।

**नियमीकरणम्**-"अदेङ्गुणः, आदगुणः"इति सूत्र-निर्देशानुसारम्-अ आ इति वर्णस्याग्रे इ उ ऋ लृ वा वर्णः आगच्छति तदा पूर्वपरयोः स्थाने (मेलने) "ए, ओ, अर्, अल्" वर्णः भवति।

**स्पष्टीकरणम्**-अध्यापकः नियमं व्यवस्थापयति। सूत्र-सूत्रार्थञ्च बोधयति। यथा- "अदेङ्गुणः, आदगुणः"-"अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। एवं च अत् एङ् अच् इति प्रत्याहारं बोधयति।

**अभ्यासकार्यम्**-शिक्षकः निर्धारितनियमस्य परीक्षणम्, "नियमात् उदाहरणं प्रति, उदाहरणात् नियमं प्रति" इति शिक्षण सूत्रानुसारं श्यामपट्टादि कार्यं करोति।

**गृहकार्यम्**-पाठ्यपुस्तकात् पञ्चदश उदाहरणानि अन्विष्य पदच्छेदं कृत्वा आनयत।

## (घ) नवीनरीत्या पाठ्ययोजनायाःप्रस्तावः।
## 8.4 Innovative Approaches in Lesson Plan

**प्रस्तावितमूल्यांकनपद्धतिः**

अयं हरबार्टीयपञ्चपदी इत्यस्य विकसितरूपं वर्तते। अस्मिन् प्रतिसोपानेन सम्बद्धोद्देश्यानां प्राप्तये कक्षायाम् आयोजितक्रियाकलापानां संयोजनं कृत्वा मूल्याङ्कनं क्रियते। अनेन छात्र-अध्यापकयोः दृष्ट्या पाठस्य सफलतायाः परीक्षणं भवति। अस्याधारे पाठयोजना निर्माणकाले सर्वप्रथमं पाठस्य उद्देश्यानि निश्चितं क्रियते। ततः या व्यक्ति उक्तोद्देश्यं प्राप्तवती तस्य व्यवहारे पूर्वापेक्षा किं किं संशोधनं जातम्। एतान् संशोधितव्यवहारान् व्यवहार-रूपं कथ्यते। तत्र यदि छात्राणां व्यवहारे परिवर्तनं भवति तर्हि तु मूल्यांकनस्योद्देश्यं पूर्णम् अन्यथा तु मूल्यांकनम् असफलम्। अतः मूल्यांकन पद्धतेः मुख्यकार्यं छात्राणां व्यवहारे परिवर्तनकरणमस्ति। मूल्यांकनप्रविधौ शिक्षकः छात्रान् प्रश्नाःपृच्छति छात्राश्च उत्तराणि दास्यन्ति।

**मूल्यांकनपद्धतेःसोपानानि**

1. उद्देश्यानि-अत्र अध्यापकः पाठस्य उद्देश्यानि निर्धारितं करोति।
2. व्यवहाररूपम्-निर्धारितोद्देश्यानामाधारेण छात्राणां पूर्वज्ञाने कियत्परिवर्तनं भविष्यति? ते कियतानं प्राप्स्यन्ति? एतस्योल्लेखो भवति।
3. पाठ्यबिन्दुः-अत्र शिक्षकः पाठ्य-बिन्दूनां निर्धारणं करोति। यथा-वाचनं, प्रश्नोत्तरं, काठिन्यनिवारणं, सारकथनं, पुनरावर्तनम्, इत्यादीनि सम्मिलितानि भवन्ति।
4. अध्यापनकर्यम्-अत्र छात्र-शिक्षकयोर्मध्ये शिक्षण-कार्यं प्रचलन्ति।
5. छात्रकार्यम्-अत्र छात्राःलेखनादि कार्यं कुर्वन्ति।
6. मूल्यांकनम्-सफलतायाः परीक्षणाय मूल्याङ्कनप्रश्नानां रचना क्रियते।

**पाठयोजनाबिन्दवः**

1. प्रस्तावना (अभिप्रेरणसम्पादनम्)
2. प्रस्तुतीकरणम्-(श्रवणकौशलसम्पादनम्)
3. मित्राणां माध्यमेन कक्षायाः अवगमनम्।
4. कठिनशब्दानां सूचीनिर्माणम्।
5. शुद्धोच्चारणस्य अभ्यासः।
6. मूल्याङ्कनाय प्रश्नकरणम्।

**मूल्याङ्कनपद्धतेः गुणाः**

1. छात्राणां भाषणशक्तेः विकारशक्तेश्च विकासः।
2. अयं मनोवैज्ञानिकविधिरस्ति यतो हि प्रतिसोपानं मूल्याङ्कनं क्रियते।
3. विशिष्टज्ञानप्रदानाय उपयुक्तं भवति।

4. शिक्षकाणां कृते शिक्षणे परिष्काराय मार्गदर्शनं भवति।
5. मानवसम्बन्धसोपाने समर्थं भवति।

**मूल्याङ्कनपद्धतेःदोषाः**

1. सततमूल्याङ्कनेन छात्राः व्यग्राः भयाक्रान्ताश्च भवन्ति।
2. सम्पूर्णपाठ्यक्रमस्य पाठनं न भवति।
3. आवश्यकसौविध्यानि न लभ्यन्ते।

## ( ङ ) पाठ्ययोजनायाः इकाई।
## 8.5 Unit of Lesson Plan

संवत्सरस्य कृते एकस्याः कक्ष्यायाः कृते पाठ्यक्रमे (Syllabus) निर्णीतांशाः मासतः विभजनं वार्षिकप्रणाली इति।

विद्यालयस्य कार्यदिनानि प्रायः 220 भवन्ति। एकैकस्मिन् सप्ताहे संस्कृतस्य 3 अन्तराणि भवन्ति। एकैकस्याः कक्ष्यायां 250 कालांशाःभवन्ति। त्रैमासिक, अर्धवार्षिक, वार्षिक-परीक्षाणाम् उपाध्यायेन स्वीकृतावकाशानां च कृते 30 भवन्तु। एवं संस्कृतबोधनाय प्रायः 120 कालांशाः भवन्ति। तत्र-

1. पद्यभागस्य-50,
2. गद्यभागस्य-35,
3. व्याकरण-15,
4. रचनाभ्यासस्य-10,
5. सहपाठ्यक्रियाणाम्-10, एवं प्रकारेण विभज्य वार्षिकीं प्रणाली रचयेत्।

**पाठ्यविभागप्रणाली** Unit Plan

1. उपाध्यायस्य नाम-
2. विद्यालयस्य नाम-
3. कक्ष्या-
4. विषयः-
5. पाठ्यांशः-
6. उपपाठ्यांशः-
7. कालांशः-
8. क्रमसंख्या-
9. उपपाठ्यांशस्य नाम-
10. लक्ष्याणि-
11. विषयविश्लेषणम्-
12. अध्यापकछात्रप्रक्रियाः-
13. बोधनोपकरणानि-
14. मूल्याङ्कनम्-

## ( च ) पाठ्ययोजनायाः प्रकारः।
## 8.6 Types of Lesson Plan.

पठयोजनायाःनिर्माणे वहूनि प्रारूपाणि अद्यत्वे प्रचलितानि सन्ति। तानि अधोलिखितानि वर्तन्ते।

**प्रमुखोपागमाः**

1. हरवार्ट-उपागमः (Herbartian approach to lesson plan)
2. ड्वीवी तथा किलपैट्रिक-उपागमः(Dewey and kilpatric approach)
3. मौरिसन् उपागमः (Morrison approach)
4. अमेरिकन् उपागमः (American approach)
5. व्रिटिश् उपागमः (British approach)
6. भारतीयःउपागमः (Indian approach)

**एतेषाम् उपागमानाम् आधारेण पाठयोजनायाःयानि प्रमुखप्रारूपाणि सन्ति, तानि इत्थं वर्तन्ते–**

1. हरवर्ट-पाठयोजना (Herbartian approach to lesson plan)
2. ब्यूम् अथवा मूल्याङ्कनपाठयोजना (Bloom's or evaluation approach)
3. आंशिकपाठयोजना (Unit appach to lesson plan)
4. एन्. सी. ई. आर. टी. पाठयोजना (N.C.E.R.T approach to lesson plan)

## (छ) सूक्ष्मशिक्षणम्-प्रकृतिः, उद्देश्यानि, आवश्यकता, गुण-दोषाश्च।
## 8.7 Micro Teaching–Nature, Objective, Needs, Merits, Demerits.

### 1. सूक्ष्मशिक्षणम् [Micro Teaching]

''सूक्ष्मशिक्षणम्'' इति नाम्ना यत् शिक्षणमस्ति तदिदानीं प्रशिक्षणस्तरे महाप्रामुख्यं भजते। शिक्षाक्षेत्रे इदं क्रान्तिकरं परिवर्तनमानयतीति। सर्वेषु विद्यालयेषु प्रशिक्षण महाविद्यालयेषु च पाठ्यक्रमं अङ्गीभूततयोपस्थापितमधिकाभिः। इदमिदानीम् संस्कृतप्रशिक्षणस्तरेऽपि अस्य प्रामुख्यं प्रदीयमानमस्ति। अतः शिक्षा-शास्त्र-विषयैः साकं ''सूक्ष्मशिक्षणम्' 'इत्यंशस्यापि विशेषावधानं प्रदीयते। सूक्ष्मशिक्षणं प्रशिक्षणस्य काचित् प्रक्रिया, एतस्योद्देश्यं नियमिताध्यापनप्रक्रियासु काठिन्यस्य सरलीकरणम् वर्त्तते। शिक्षाशास्त्रभिःशिक्षणं कलाविज्ञानञ्चेत्युभयो एव रूपे स्वीकृतम्। सुशिक्षकाः जन्मजाताः भवन्ति इति कला, तथा प्रशिक्षणद्वारा निर्मीयन्ते इति विज्ञानम्। ''सूक्ष्मशिक्षणमेकं व्यवस्थितं शिक्षणम् '' येन कक्षायाः आकारः समयसीमा च मापयितुं शक्यते। ''सूक्ष्मशिक्षणं कश्चन प्रयोगशालाप्रविधिः''। सूक्ष्मशिक्षणं अल्पसमयात्मकः, अल्पछात्रात्मकः, अल्पक्रिया- कलापात्मकश्च कश्चन समुचितशिक्षणविधिः।'सूक्ष्मशिक्षणम् एका नियन्त्रिता अभ्यासप्रणाली वर्तते। या नियन्त्रितपरिस्थितिषु शिक्षणाभ्यासञ्च कर्तुमानुकूल्यं कल्पयति।'' सूक्ष्मशिक्षणं शिक्षकाणां प्रशिक्षणार्थं कल्पितैका सरलप्रशिक्षणव्यवस्था अस्ति। अत्र सामान्यकक्षाशिक्षणस्य जटिलांशाः न्यूनीकरणद्वारा सरलीकृता भवन्ति।

### 2. सूक्ष्मशिक्षणस्योद्देश्यानि

1. प्रत्येकशिक्षणकौशले सोपाने वा अध्यापकस्य नैपुण्य-प्रदानम्।
2. प्राक्तनकौशलानां संस्करणम् एवमेव नूतनकौशलेषु विकाससम्पादनम्।

3. सामान्यकक्षाशिक्षणे विद्यमानानां काठिन्यानां दूरीकरणम्।
4. विशिष्टकार्यपूरणे शिक्षणप्रदानम्।
5. पृष्टपोषणविषये अधिकाधिकप्रशिक्षणादानम्।
6. अध्यापकानां शिक्षणस्तरोन्नयनम्।

**3. सूक्ष्मशिक्षणस्यावश्यकता**

अध्यापकैः प्रशिक्षणाध्ययनक्रमे उपर्युक्त व्यावहारिकार्थ-पूर्णदोषाणां निवारणाय शिक्षकानामुत्तमंप्रशिक्षणप्रदानाय सूक्ष्मशिक्षणं कक्षा-अन्तः प्रक्रिया अवलम्बनीया वर्त्तते। अनुकरणीयशिक्षणम्-[Simulation] अभिक्रमिताधिगमः— [Programmed Learning] मस्तिष्कयन्त्रसहायकानुदेशनम्- [ComputerAssisted Learning] इत्यादयः शिक्षाक्षेत्रे प्रविष्टाः। सूक्ष्मशिक्षणस्याविर्भावः=सूक्ष्मशिक्षणम् इदम्प्रथमतया अमेरिका नगरस्थे स्टेन्फोर्ड विश्व-विद्यालयें अनुसंधाने लब्धम्। Kaith Acheson नामकः शोधछात्रः सूक्ष्मशिक्षणस्य जनकः सञ्जातः।

**4. सूक्ष्मशिक्षणस्य स्वरूपम्**= [Structure of micro teaching]

कश्चन प्रयोगशाला-प्रविधिः [Laboratory technique] इत्युच्यते। सूक्ष्मशिक्षणं नाम सूक्ष्मपदीयशिक्षण-परिस्थितिः—[Scaled down teaching encounter] सूक्ष्मशिक्षणेऽस्मिन् कश्चनाल्पशिक्षणविन्दुः—[Small teaching point] स्वीक्रियते। स्वीकृतः सः शिक्षणबिन्दुः 5 तः10 परिमितस्य छात्रवर्गस्य 5 तः10 निमेषाभ्यन्तरे अध्यापनीयः। अत्र अध्यापकः प्रशिक्षणार्थी, छात्राः अपि प्रशिक्षणार्थिनः एव।

शिक्षणेऽस्मिन् ध्वनिग्राहकयन्त्रः, छात्राग्राहक सूत्रं वा उपयुज्यते। यद्येतानि साधनानि नोपलभ्यन्ते तर्हि सहचराध्यापकानामेकैकं मूल्यांकनपत्रं [Evaluation proforma] दत्वा मूल्यांकनं कारयित्वा पाठितभागे दोषादोषश्चावेदयितुं व्यवस्था करणीया।

**5. सूक्ष्मशिक्षणस्य सिद्धान्तः**

1. सूक्ष्मशिक्षणं वास्तविकशिक्षणम्।
2. अभ्यासक्रमस्य प्रक्रियायां अधिकनियन्त्रणं भवति।
3. साधारणकक्ष्यायाः शिक्षणजटिलताः न्यूनीकरोति।
4. अत्र प्रतिपुष्टिमाध्यमेन प्रशिक्षकस्य मार्गनिर्देशेन सूक्ष्मशिक्षणस्य आयामः विस्तारितः।
5. एकस्मिन् समये एकस्यैव कौशलस्य अभ्यासो भवति।

**6. सूक्ष्मशिक्षणस्य गुणाः**

1. प्रत्येकसोपाने, कौशले वा विशेषावधानं प्रदीयते।
2. शिक्षणेऽस्मिन् छात्रसंख्या अल्पा भवतीति हेतोः कक्षा सदा अनुशासनयुता भवेत्।
3. द्विवारं पृष्टपोषणकारणेन शिक्षणे कृता त्रुटयः स्वयं ज्ञाताः भवेयुः।

4. स्वयं शिक्षणस्यैतत् बहूपकरोति।
5. दोषरहितं समीचीनं ज्ञानम् अनेन प्राप्तुं शक्यते।

**( 7 ) सूक्ष्मशिक्षणस्य दोषाः**

1. बुद्धिमतां छात्राध्यापकानां कृते एव इदमुपयुक्तम्।
2. धनव्ययमधिको भवेत्।
3. औडियो वीडियो साधनानां पुरतः बोधने केचन भीतियुक्ताः भवेयुः।

## ( ज ) सूक्ष्मशिक्षणस्य कौशलानि-प्रस्तावना, प्रश्नीकरणं, व्याख्यानं, श्यामपट्टकार्यम्।

## 8.8 Micro Teaching Skills–Introduction, Questioning, Lecturing and Blackboard Writing

**( 1 ) सूक्ष्मशिक्षणस्य कौशलानि**

**1. शिक्षणकौशलस्य सैद्धान्तिकं विवेचनम्**-[Theoritical Discussion of teaching skill] इदम्प्रथमतया प्रशिक्षणार्थिनां कृते एकस्य कौशलस्य चयनमावश्यकम्। यथा-वर्णनम्, प्रश्नकरणम्, प्रस्तावना, पाठ-प्रबन्धनम्, इत्यादिषु कौशलेषु एकं कौशलम् स्वीकरणीयम्।

**2. विशिष्टशिक्षणकौशलम्**–[Discussion of particular teaching skill] विशिष्टशिक्षणकौशलस्य चयनं भवति।

**3. आदर्शपाठस्य प्रस्तुतीकरणम्**–[Presentation of the Ideal lesson]अस्मिन् सोपाने सम्बद्ध–Vedio tape अथवा फिल्म विशिष्टकौशलम्, अथवा पाठसंबद्ध-लिखितसामग्री प्रदर्श्यते।

**4. पाठयोजनायाः निर्माणम्**–[Planning of lessonplan]पाठयोजना-निर्माणम्।

**5. शिक्षणम्**–[Teaching] शिक्षणम्-वीडियो, औडियो, ध्वनिग्राहकयन्त्रसाधनेषु आरोपितं भवेत्। तस्याभावे तु पर्यवेक्षकैः—सहचरैश्च पाठः निरीक्षितो भवेत्। एतदर्थं पर्यवेक्षकस्य एकं मूल्यांकनपत्रं [Evaluation proporma] प्रदीयते।

**6. पृष्टपोषणम्**–[Feed back] अस्मिन् सोपाने वीडियो औडियोटेप, पर्यवेक्षक टिप्पणीश्चाधारीकृत्य तस्य निष्पादनं कथमस्तीति ज्ञायते।

**7. पुनःपाठयोजनायाः निर्माणम्**–[Re-planning of the lesson]पृष्ठपोषणानन्तरं छात्राध्यापकेन याः त्रुटयः कृताः, ताः ज्ञात्वा संशोध्य पुनः पाठयोजनायाः निर्माणम्।

**8. पुनःशिक्षणम्**–[Re-teaching] पाठयोजनायाः पुनः निर्माणानन्तरं पुनस्तदेव कौशलसम्बद्धं पाठं पूर्वसदृशान्यस्य वर्गस्य कृते पाठनीयः।

**9. पुनः पृष्टपोषणम्**–[Re-feed back] अस्मिन् सोपाने पूर्ववत् पर्यवेक्षणं भवेत्। समीक्षणमपि भवेत्।

**( 2 ) सूक्ष्मशिक्षणस्य प्रस्तावना**

आदौशिक्षणेण छात्रा:पाठोन्मुखिन: कारणीया: इति पदस्यास्य मुख्योद्देश्यम्। विषयस्य आरम्भणात् प्राक् पाठ्यमानविषये छात्राणां रुच्युत्पादनम् एव प्रस्तावनाया: अन्य प्रमुखश्च उद्देश:। अत्र पूर्वज्ञानेनसह नवीनज्ञानस्य सम्बन्ध:स्थाप्यते। अत: प्रस्तावना नाम पूर्वज्ञानस्य नूतनज्ञानस्य च मध्ये एकं संयोगसूत्रम्। पूर्वज्ञानाधारितप्रश्नै: नवीनज्ञानाय अभिप्रेरणम् अपि अत्र विधीयते। प्रस्तावनाया: अन्ते छात्राणां समक्षं स्पष्टीकरणेन उद्देश्यकथनमपि भवति।

**( 3 ) सूक्ष्मशिक्षणस्य प्रश्नीकरणम्**

आवश्यकतानां वैविध्यात् विविधप्रकारका: प्रश्ना: भवन्ति। प्रश्ना: सामान्यत: प्रकारद्वये अवलोक्यन्ते–1. स्मृतिप्रश्ना:, 2. विचारोतेजकप्रश्ना:, प्रश्नरचनासन्दर्भे शिक्षकेण आवश्यकताम् अभिलक्ष्य प्रश्नप्रकाराणां विषये विचार: करणीय:। तदानीमेव शिक्षक: आवश्यकतानुगुणं प्रश्नप्रकारं निश्चेतुं प्रभवेत्। अत: प्रश्नरचनाया: पूर्वं प्रश्नानाम् आवश्यकता: शिक्षकेण अवश्यं ज्ञेया:। अत: अत्र प्रश्नानां काश्चन प्रमुखावश्यकता: उपस्थाप्यन्ते–

1. छात्राणाम् अर्जितज्ञानस्य परीक्षणार्थं प्रश्ना: क्रियते।
2. नूतनविषयस्य पाठनारम्भे पूर्वापरज्ञानयो: सम्बन्धकल्पनार्थं प्रश्ना: सहायका: भवन्ति।
3. स्वीयाध्यापने साफल्यासाफल्यज्ञानं शिक्षकस्य प्रश्नै: सञ्जायते।
4. प्रश्नद्वारा छात्राणां विभिन्नबौद्धिकशक्तीनां विकास: कारयितुं शक्यते।

**सप्तककारा: प्रश्ना:**

**1.** क:/का–who, 2. किम्–What, 3. कदा–When, 4.किमर्थम्–Why, 5.कुत्र–Where, 6.कति–Howmany, 7.कियत्–howmuch,

**प्रश्नकरणम्**–1. सरलसरसप्रश्ना:, 2. अभिप्रेरणात्मकप्रश्ना:, 3. बोधप्रश्ना:, 4. अवबोधनात्मकप्रश्ना:, 5. विचारविश्लेषणत्मकप्रश्ना:, 6. पुनरावृत्तिप्रश्ना:, 7. गृहकार्य-प्रश्ना:।

**( 4 ) सूक्ष्मशिक्षणस्य व्याख्यानम्**

शिक्षणं बहुविधकौशलानां योगमस्ति। परमैक एव छात्रेषु सर्वविधकौशलानां विकाससम्भवमेवास्ति। अत एव सूक्ष्मशिक्षणस्य माध्यमेन शनै:शनै: एकं एकं कृत्वा सर्वाण्येव शिक्षणकौशलानि छात्रेषु विकसन्ति। यद्यपि सूक्ष्मशिक्षणम् आदौ अध्यापक:छात्राध्यापकान् अववोधयति। तत: छात्राध्यापका: तं चक्रं क्रियान्वितं कुर्वन्ति। व्याख्यानस्य विधानमिदं भारतवर्षे 1970 ई० तमे वरोदानगरस्य उच्चारयन केन्द्रस्य माध्यमेन प्रविष्टम्। अत्र अल्पसमये एव विषयस्य सम्पूर्णज्ञानं प्रदीयते। यथोक्तम्–

**'पदच्छेद: पदार्थोक्तिर्विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्'** इति।

## ( 5 ) सूक्ष्मशिक्षणस्य श्यामपट्टकार्यम्

1. पाठे प्रधानविषया: लेखनीया:।
2. संक्षिप्तेन संग्रहेन लेखनीयम्।
3. श्यामफलके ''किं लेखनीयमिति'' पूर्वमेव मनसि निधाय लेखनीयम्।
4. अक्षराणि सुन्दराणि स्पष्टानि, पठनयोग्यानि कक्षोचिताकाराणि च स्यु:।
5. सुधाखण्डा:, मार्जनी इत्यादि सामग्रीविषये पूर्वसन्नाह: करणीय:।
6. निर्वचनानि, सूत्राणि, उदाहरणानि, कठिनपदानि, उदाहृतवाक्यानि, पारिभाषिकपदानि, सांकेतिकपदानि, समासा:, सन्धिपदानि, श्यामफलके लेखितुं योग्यानि।
7. कक्ष्यात: गमनसमये श्यामपट्ट: सम्मार्जनीय:।
8. उपाध्यायेन श्यामपट्टस्य एकस्मिन् पार्श्वे स्थित्वा लेखनीयम्।
9. सूचीदण्डेन लिखितांशान् संसूचयन् पाठनीयम्।

卐 卐 卐

# 9

# संस्कृतशिक्षणे दृश्यश्रव्योपकरणानि

# Audio-Visual Aids in Sanskrit Teaching

## (क) संस्कृतशिक्षणे दृश्यश्रव्योपकरणानि–

नूतनशिक्षणपद्धतिषु दृश्यश्रव्यसाधनानां कृते अत्यधिकं महत्त्वं समागतम्। अधुना प्रशिक्षणे एतेषां समाधानानां कृते अधिकमहत्त्वमस्ति। एतानि साधनानि विना प्रशिक्षणस्तरे पाठानपि बोधयितुमवकाशो नास्ति। येन छात्राध्यापकेन अत्यधिकानि श्रव्यदृश्यसाधनानि उपयुज्यन्ते। तस्मै अत्यधिकाः अंका प्रदीयन्ते। एतानि साधनानि ज्ञानेन्द्रियाणामुपरि अत्यधिकं प्रभावं प्रदर्शयन्ति। इन्द्रियाणामाकर्षणं शिक्षणस्याधारभूतं वर्त्तते। प्रो० जे०जे० बीवर् लिखति–अस्माकं 40% प्रतिशतं विचारधाराः दृश्यानुभूतिं, 25% प्रतिशतं श्रव्यानुभूतिं, 15% प्रतिशतं स्पर्शानुभूतिं, 15% प्रतिशतं अन्यानुभव द्वारा, 5% प्रतिशतं स्वानुभव द्वारा च आधारीकृत्य वर्तन्ते। सैद्धान्तिकचिन्तनस्याधारभूतानि वर्तन्ते दृश्यश्रव्यसाधनानि। शोधकर्त्तारः प्रमाणयन्ति यत्–85% प्रतिशतं शिक्षणं दर्शनश्रवणेन्द्रियाणामाधारेणैव भवति। अतः वक्तुं शक्यते यत् छात्रैः पाठ्यविषयान् सम्यक्तया बोधनाय एतान्युपकरणानि उपयुज्यन्ते। फलतः नूतनशिक्षणपद्धतयः, यन्त्राः प्रौद्योगिकी [Technology] इत्येतेषां कृते महत्त्वं समागतम्। समस्तस्याप्यधिगमस्य आधारः इन्द्रियद्वारा साक्षात्कारः। इन्द्रियद्वारा मूर्तरूपस्य ग्रहणेन अधिगमः सुगमो भवति। दृश्यश्रव्यसाधनानां प्रयोगेण अध्ययनं प्रभावशाली, रोचकञ्च भवति। वस्तुतः छात्राणां कृते पाठस्योपरि आसक्तिसंवर्धनाय बोधितपाठे वहुकालपर्यन्तं मनस्सुसंस्थापनाय उपकरणान्यावश्यकानि। अधीतांशान् चिरकाल-पर्यन्तं मनसि धारयेयुः। भाषाध्यापनेऽपि उपकरणानामावश्यकता अस्ति।

सुप्रसिद्धः शिक्षाविद् पैस्टॉलॉजी महोदयः शिक्षायां पदार्थानां प्रत्यक्षानुभवस्य अत्यधिकं महत्त्वं मनुते। फ्राबेल, मान्टेसरी प्रभृतयः शिक्षाशास्त्रिणः बाल्यशिक्षायां दृश्यश्रव्योपकरणानां महत्त्वपूर्णं स्थानं दत्तवन्तः। यूनिसेफ संस्थायाः अध्ययनाधारेण शिक्षणे स्मृतौ च इन्द्रियाणां प्रामुख्यम् इत्थं निर्धारितम्। ते यथा–

**1 शिक्षणम्**–आस्वादनेन–1%स्पर्शेन–2% घ्राणेन–3%श्रवणेन–11%दर्शनेन– 83%= 100%

**2. स्मरणम्**=पठनेन–5%, श्रवणेन–10%, दर्शनेन–15%, दर्शनेन श्रवणेन च–25%, कथनेन–15%, कथनेन श्रवणेन च–30%=100%अनेन अधिगमप्रक्रियायां दृश्यश्रव्योपकरणानां महत्त्वं स्पष्टम्।

## (ख) श्रव्यदृश्यसाधनानाम् उद्देश्यानि–

1. छात्राः भाषाध्ययने सक्रियाः स्युः।
2. अध्ययनकाले श्रवणेन्द्रियस्य, दर्शनेन्द्रियस्य च आकर्षणम्।
3. लब्धज्ञानं परिपुष्टं स्यात्।
4. पाठ्यवस्तु सार्थकं, सुग्राह्यञ्च कर्तव्यम्।
5. पाठ्यविषयः रोचकः आकर्षणीयश्च स्यात्।
6. अधीतांशाः चिरकालपर्यन्तं स्थिराः स्युः।
7. अनुभवस्य सीमा विस्तृता स्यात्।
8. शिक्षणं प्रभावपूर्णं स्यात्।
9. भाषायाः व्यावहारिकप्रयोगदर्शनेन छात्राः अनुकरणे तत्पराः स्युः।
10. शिक्षणे नूतनत्वानयनम्।
11. छात्रेषु प्रेरणं कल्पयित्वा शिक्षायामासक्तिसंवर्धनम्।
12. यथार्थज्ञानसम्पादनम्।
13. एकाग्रतायाः सम्पादनम्।
14. अल्पे एव समयेऽत्यधिकांशानां शिक्षणम्।

उपर्युक्तकारणैः कस्यापि विषयस्य शिक्षणे दृश्यश्रव्यसाधनानां महत्त्वं स्पष्टं भवति। अतः संस्कृतशिक्षणेऽपि दृश्यश्रव्यसाधनानां प्रयोगः कर्तव्यः। एतेषां साधनानां प्रयोगेण संस्कृतशिक्षणं रोचकं भवति। छात्राः संस्कृतं प्रति अत्यधिकमाकृष्टाः भवन्ति।

## (ग) दृश्यश्रव्यसाधनसमावेशेषु अधोलिखिताः विचाराः–

1. श्रव्यदृश्यशिक्षायै राष्ट्रिय–संस्थानस्य संस्थापनम्।
2. शिक्षणोपकरणानां निर्माणं व्यवस्थापनं च करणीयम्।
3. प्रजाभ्यः धनं स्वीकृत्य श्रव्यदृश्यसाधनानां संचयनम्।
4. प्रशिक्षणपाठ्यक्रमे प्रौद्योगिक्या आयोजनम्।
5. विश्वविद्यालयेषु श्रव्यदृश्यविभागानां आयोजनम्।
6. सर्वेषु प्रशिक्षण–महाविद्यालयेषु श्रव्यदृश्यसाधनानां कृते महत्त्वपूर्ण–स्थानम् प्रदेयम्।

## ( घ ) दृश्यश्रव्य साधनानां प्रकारा:–

1. श्रव्य साधनानि–[Audio aids]
2. दृश्य साधनानि–[Visual aids]
3. श्रव्यदृश्य साधनानि– [Audio visual aids] इति त्रिधा साधनानि सन्ति।

**1. श्रव्यसाधनानि**–विभिन्नान् ध्वनीन् शब्दांश्च श्रोतुमुपयुक्तानि साधनानि श्रव्यसाधनानि भवन्ति। **यथा**-रेडियो, ग्रामोफोन, ध्वनिपंञ्चिका (टेप्रिकार्डर्) भाषापञ्जिका [Linguaphone] इत्यादीनि श्रव्यसाधनानि सन्ति।

**2. दृश्यसाधनानि**–वर्णानां, पदार्थानां, विभिन्नतथ्यानां वा स्वरूपं प्रदर्शयितुम् उपयुज्यमानानि साधनानि दृश्यसाधनानि भवन्ति। एतेषां माध्यमेन दृश्येन्द्रियस्य आकर्षणं भवति। **यथा**-श्यामपट्ट:, चित्राणि, रेखाचित्राणि, मानचित्राणि, प्रतिकृतय:, प्रदर्शिनी- [Projector] इत्यादीनि दृश्यसाधनानि सन्ति।

**3. दृश्यश्रव्यसाधनानि**–येषाम् उपकरणानां माध्यमेन द्रष्टुं, श्रोतुञ्च शक्यते तानि साधनानि दृश्यश्रव्यसाधनानि भवन्ति। **यथा**-दूरदर्शनम्, नाटकानि, चलचित्रानि, मस्तिष्कयन्त्रम् (संगणकम्) [computer]ध्वनिचित्रग्राहकयन्त्रम्, ध्वनिचित्रसूत्रम्, इत्यादीनि दृश्यश्रव्यसाधनानि सन्ति।

एतानि साधनानि त्रिपु स्तरेषु उपयोक्तव्यानि, यथासमयं एतानि साधनानि प्रदर्शयेयु:। उपकरणानि अधिगम अनयोर्मध्ये समीचीन: समन्वय आवश्यक:। भाषाऽभिगाहने च प्रतिबन्धका भूत्वा स्पष्टता सरला च स्यात्। उपयुज्यमानमुपकरणं पाठ्यवस्तु सम्बद्धं स्यात्। शिक्षणोपकरणं छात्राकर्षकं प्रेरकं च स्यात्। उपकरणानां निर्माणे प्रदर्शने च छात्रसाहाय्यं स्वीकरणीयम्। सदा उपकरणानि जागरूकतया संरक्षणीयानि। प्रशिक्षणस्तरे एकैकेन छात्राध्यापकेन एकस्य पाठस्य बोधनाय वहून्युपकरणानि उपयोक्तव्यानि। अत: प्रत्येक छात्राध्यापकै: स्वीयाध्यापनानुभवे न्यूनातिन्यूनं दशचित्राणि अथवा उपकरणानि उपयोक्तव्यानि इति नियम: परिकल्पित:। येन नियम: पालनं क्रियते तस्यैवाधिका अंका: मिलिष्यन्ति। उपकरणानि प्रादेशिकभाषासमस्यां दूरीकुर्वन्ति। अत: प्रशिक्षण- स्तरे एतेषामनिवार्यताऽऽवश्यकी।

व्याकरणशिक्षणं नीरसं जटिलमिति च सर्वे मन्यन्ते। छात्रा: अपि व्याकरणं इति नाम्नैव भीता: भवन्ति। तत्र बहूनि कारणानि सन्ति। शिक्षका: साधनानां प्रयोगे प्रशिक्षणं प्राप्य, साधनानि च सार्थकं यदि प्रयुञ्जीरन् तर्हि व्याकरणस्य काठिन्यं नूनं न्यूनीकृतं भवेत्।

## ( ङ ) श्रव्यसाधनानि

1. आकाशवाणी(रेडियो) साधनेन यदाकदा संस्कृत-कार्यक्रम: प्रसारित: भवति चेत् तदाध्वनि तत्वानि वाक्यरचनां च विज्ञातुं छात्रा: प्रेरिता: भवेयु:। देशविदेशेपु नूतनशिक्षा पद्धतिम् आश्रित्य मनोविज्ञानमङ्ग्या शिक्षाप्रसाराय उपकृतं भवति। पत्राचार पाठ्यक्रमा: अध्यापनाय सर्वेषु प्रदेशेपु इदमुपयुज्यते। प्राथमिक स्तरादारभ्योन्नत स्तरपर्यन्तं एतत्साधनम् अश्रीयते

शिक्षणाय। अनेन साधनेन नाटकानि, प्रमुखानां व्याख्यानानि, सम्भाषणानि, चर्चाः, वैदिकउपनिषद्मन्त्राः गद्यपद्यचम्पू प्रकाराणां पठन- प्रकारः, संस्कृत भाषायाः उच्चारणम् नूतन-शब्द-ज्ञानम्, शैलीभेदं स्पष्टतया ज्ञातुं शक्यते।

2. ध्वनिपञ्जिका,
3. ध्वनिग्राहकयन्त्रः,
4. ग्रामोफोन, इत्यादि साधनानि व्याकरणशिक्षणं सरली करोति। अनेन शिक्षकः उच्चारण-शिक्षणं, सूत्राणां, शब्दरूपाणां, धातुरूपाणां च मननार्थं सूत्रशब्दधातूनां आवृत्तिपाठं च कारयितुं प्रभवेत्। अनेन सुगमतापूर्ण-सरलाभ्यासैः छात्राः व्याकरणतत्त्वानि जानेयुः।

## (च) दृश्यसाधनानि

दृश्यसाधनानां सर्वोत्तमं साधनं वर्त्तते "श्यामफलकम्" Blackboard शब्दानां विग्रहः, सन्धिः, समासः, विभक्तिप्रयोगः इत्यादीनां सर्वत्र उपयोगः सुमहान् वर्त्तते। अतः साधनमिदं यथासम्भवं प्रयुञ्जीत। श्यामफलके वर्णचित्रं, रेखाचित्रं, चित्रणं इति कृत्वा व्याकरणतत्वानि अवगमेत्। वर्णचित्रस्य प्रयोगः विविधरूपेण भवितुमर्हति। सूत्राणि नियमान्, अक्षराणां संयोगः, पदच्छेदः, विभक्तयः, धातूनां प्रयोगः, उपसर्गाणां विवरणम्, अव्ययानि वहवो विषया वर्णचित्रद्वारा चित्रयितुं योग्याः। चित्रं, रेखाचित्रं, सूचकचित्राण्यपि पूर्वोक्तरीत्या प्रयोगिता भजन्ते। "चित्रविस्तारकः" चित्रंविस्तृतरूपेण प्रतिबिम्वयति। अनेन यन्त्रेण वर्णचित्रं, रेखाचित्रं सूचकचित्रादिकं विस्तृताकारेण दृष्टिपथमायाति। "वस्त्रफलकं":— विशेषवस्त्रेण निर्मितं भवति। अत्र पूर्वमेव अध्यापकः व्याकरणतत्त्वानि विलिख्य कक्षायां यथावसरं प्रयोक्तुं शक्नुयात्। "चित्रप्रकाशकः"-उपयोगी-शिक्षणपदार्थः, चित्रपट्टिका, चित्रपत्रञ्चानेन प्रतिबिम्वते भवतः। चित्रपट्टिकायां चित्रपत्रे वा विभिन्नरूपेण व्याकरणनियमानां, सूत्राणां, संयुक्ताक्षराणां, सन्धि-समास-उपसर्गाणां, शब्दानां, धातूनां च लेखनं सम्भवति। चित्राणि च चित्रितानि भवन्ति। येन प्रत्यक्षविधिना अर्थबोधः सौलभ्येन जायते। संस्कृतशिक्षणे प्रस्तावनायां विषयबोधने च प्रधानतया चित्राणां प्रयोगः कर्तुं शक्यते। महापुरुषाणां, नेतृणां, पशुपक्षीणां, वस्तूनां, प्राकृतिक-दृश्यानाम्, ऐतिहासिकभावनानाञ्च चित्राणि उपयुक्तानि स्युः। प्रदर्शनी [projector]संस्कृतशिक्षण-प्राकृतिक- दृश्यानि, यात्रावर्णनम्, उत्सवाश्च प्रदर्शयितुं शक्यते। भाषायाः, साहित्यस्य च शिक्षणे एतदत्यन्तमुपकारकं भवति। प्रतिकृति आदि साधनानां निर्माणे छात्राणामपि सहभागिता स्यात् तर्हि तेषां ज्ञानं वर्धेत।

## (छ) दृश्यश्रव्यसाधनानि

**1. दूरदर्शनम्**–[Television] दृश्यश्रव्यसाधनेषु प्रमुखं साधनं दूरदर्शनं वर्त्तते। श्रव्यसाधनद्वारा श्रोत्रेन्द्रियमेकमेव विषयग्रहणं करोति। दृश्यश्रव्यसाधनेन श्रोत्रेन्द्रियं नयनेन्द्रियञ्च विषयग्रहणं कुरूतः। अतः श्रव्यसाधनानां अपेक्षया दृश्यश्रव्यसाधनानां कृते अत्यधिकं महत्त्वमस्ति। दूरदर्शनस्य कृते दैनन्दिन-शिक्षा-जीवने महत्त्वपूर्णं स्थानमस्ति। संस्कृतकार्यक्रमाणां

अवलोकनेन छात्राः वाक्यरचनां, उच्चारणतत्त्वं, नवशब्दज्ञानं, अभिनयकौशलम्, रसानुभूतिम्, ज्ञानम्, आनन्दञ्च सम्यक्तया प्राप्तुं शक्यते। अनेन साधनेन अतिक्लिष्टान् अंशान् अति सरलतया अध्यापयितुं शक्यते। अनेनाधीता अंशा आजीवनपर्यन्तं स्मृति-पथे भवेयुः।

**2. चलचित्राणि**–[Cinema] माध्यमेनापि स्पष्टोच्चारणम्, पठने वैविध्यम्, भाषण-कौशलम्, अभिनयकौशलम्, इत्यादीन् अंशान् एभिःअध्यापयितुं शक्यते।एतेषां चलचित्राणां, द्वारा संस्कृत भाषायाः महत्त्वं भारतीयानां आचारविशेषान् रूपकाणि च सम्यक् तया प्रदर्शयितुं शक्यते।

**3. नाटकानि**–संस्कृतशिक्षणे नाटकस्यापि महत्त्वमस्ति। मुद्राराक्षसम्, अभिज्ञान-शाकुन्तलम् इत्यादीनि अनेकानि नाटकानि रङ्गमञ्चे अभिनेतुं शक्यन्ते। वाचिकः, आङ्गिकः, सात्विकः आहार्यश्चेति चतुर्विधोऽभिनयो वर्त्तते। अभिनयस्य दर्शनेन, आरोहावरोहपूर्वक भाषणस्य श्रवणेन च छात्राः भाषाप्रयोगं जानन्ति।

**4. मस्तिष्कयन्त्रं/संगणकं**–[Computer] मानवेन इदानीं यत्कार्यं क्रियते, तदधुना मस्तिष्कयन्त्रेण क्रियते। चार्लेस् वाब्वेज नामकःवैज्ञानिकः1833तमेवत्सरे एनं यन्त्र-माविष्कृतवान्। वर्तमानसमये मस्तिष्कयन्त्रस्यैव राज्यं वर्त्तते। साधनमेतत् सर्वाः समस्याः तासां समाधानानि तस्मिन् विद्यमानासु अल्पासु पेटिकासु धारयति। संगणकयन्त्रे त्रयः 1. जवनिका [Monitor] 2. क्रेन्द्रप्रसारविभागः [Central processing unit-{C.P.U.} 3. कुञ्जिकामण्डलम् [Keyboard] च सन्ति। द्वितीयः यन्त्रः हृदयसदृशः, एषः भागः प्रथमं सर्वाः समस्याः स्वमनसि स्थापयति। अनन्तरं सर्वासां समस्यानां कृते समाधानानि प्रयच्छति। एवं मस्तिष्कयन्त्रेण प्रभावोत्पादकरीत्या यथार्थानंशान् निस्संशमध्येतुं शक्यते। संगणकः व्याकरणशिक्षणे नियोजितशिक्षणं [Programmed Learning]प्रोत्साहयति। विविधविषयेषु व्याकरण-सम्बन्धि-प्रश्नान् संकलय्य क्रमबद्धरुपेण शिक्षयितुं साधनमिदं वर्त्तते। संगणकद्वारा वर्णचित्रं, रेखाचित्रं, सूचकचित्रम् साध्यं भवति। पाठशालासु तृतीयकक्षातः आरभ्य मस्तिष्कयन्त्र-सम्वद्धा शिक्षा [Computer Education] अध्यापमाना अस्ति।

**5. भाषा प्रयोगशाला**–[Language Laboratory] इदानीं भाषाध्यापनविषये अपि क्रान्तिस्समागता, आदौ सामान्यविज्ञानम्, प्राविधिकविज्ञानम् इत्यादीनां कृते प्रयोगशाला आसन्। कौशलानि अभ्यासपूर्वकं संवर्धयितुं शक्यते। श्रवणभाषणपठनलेखनकौशलानि शास्त्रीयपद्धत्या प्रमापयितुं शक्यते। एवं मनोवैज्ञानिक पद्धत्याः भाषा प्रयोगशालायां संस्कृतमध्येतुं शक्यते। एवमितराणि दृश्यश्रव्यसाधनानि स्वयमनुभवपूर्वकं कथं संस्कृतभाषायाः कृते उपकृतानि भवन्तीति ज्ञातव्यम्।

### (ज) संस्कृतशिक्षणे दृश्यश्रव्यसाधनानां प्रयोगे उपयोगिनः लाभाश्च–

1. शिक्षणे नूतनत्वं भवति।
2. छात्राः अध्ययने आसक्तिं प्रदर्शयेयुः।

3. अत्यन्तकठिनान् अंशान् अत्यन्तसरलतया अध्यापयितुं शक्यते।
4. सर्वेषां छात्राणां कृते एकयैव रीत्या अवधानपूर्वकं पाठयितुं शक्यते।
5. एभिस्साधनैः अध्यापिता अंशाः आजीवनं स्मृतिपथे स्युः।
6. अल्पे एव समये अत्यधिकानंशान् अध्यापयितुं शक्यते।
7. वैज्ञानिकमार्गेण अन्धविश्वासान् दूरीकर्तुं शक्यते।
8. भ्रमप्रमादरहितं यथार्थज्ञानं सम्पादयितुं शक्यते।
9. विषयः रोचकः, आकर्षकश्च भवति।
10. बालकेषु निष्क्रियताः न भवन्ति, तेः भाषाध्ययने सक्रियाः भवन्ति।
11. सार्थकशब्दभण्डारस्य वृद्धिर्भवति।
12. शिक्षणं प्रभावपूर्णं भवति।
13. भाषायाः व्यावहारिकप्रयोगः ज्ञायते, छात्राः तस्यानुकरणे तत्पराः भवन्ति।

**( झ ) निष्कर्षः**

दृश्यश्रव्योपकरणानि शिक्षणस्य साधनानि भवन्ति, न तु साध्यानि, एतदर्थं संस्कृतशिक्षणे एतेषां सदुपयोगः कर्तव्यः। संस्कृताध्यापकः दृश्यश्रव्यसाधनानामुपयोगात्पूर्वं तेषां महत्त्वं ज्ञात्वा, उद्देश्यानुसारं प्रयोगं कुर्यात्। संस्कृतशिक्षणाय अपेक्षितानि चित्राणि विविधपत्रेभ्यः, पत्रिकाभ्यश्च समाहरणीयानि। एतेषां प्रयोगस्य पूर्वयोजना रचनीया। संस्कृताध्यापकः विषयसम्बन्धिनं प्रस्तावं कुर्यात्। विषयस्पष्टीकरणाय विषयग्रहणस्य परीक्षणाय च अध्यापकः प्रश्नान् पृच्छेत्। आवश्यकतानुसारमेव साधनानां प्रयोगः कर्तव्यः। श्यामपट्टस्य प्रयोगः सरलः, सुलभश्च, अस्यप्रयोगः अत्यन्तावश्यकः, महत्त्वपूर्णश्च, संस्कृतशिक्षणेऽस्य प्रयोगः अनिवार्यः स्यात्। एतेन विवरणेन ज्ञायते यत् संस्कृतशिक्षणे दृश्यश्रव्यसाधनानां प्रयोगः लाभप्रदो भवतीति।

卐 卐 卐

# 10
# विभिन्नसंस्थानानां प्रयोगात्मक-प्रयासः
# Attempts by Various Agencies

## (क) सर्वकारी-प्रयासः–राष्ट्रीय-संस्कृत-संस्थानम्, संस्कृत-अकादमी, संस्कृत-निदेशालयः, संस्कृत विश्वविद्यालयः, केन्द्रीयविद्यालयसंगठनं, केन्द्रीयमाध्यमिकशिक्षा-बोर्ड।

## 10.1 Government Attempts–Rashtriya Sanskrit Sansthan, Sanskrit Academics, Sanskrit Directories, Sanskrit Universities, Kendriya Vidyalaya Sangathan and CBSE.

संस्कृतभाषा वैज्ञानिकी भाषा वर्तते। संस्कृतस्य व्याकरणं मनोवैज्ञानिकं विश्वप्रसिद्धं च वर्तते। संस्कृतव्याकरणं संगणकयन्त्रस्य कृते बहुपयोगी अनुकूला च वर्तते। संस्कृतम् अस्माकं पूर्वजानां धरोहरं वर्तते। इयं संस्कृतभाषा संसारस्य प्राचीनतमा भाषा अस्ति। संस्कृतस्यग्रन्थरत्नाः अस्माकं सर्वाधिक-प्राचीनवैभवं दर्शयन्ते। संस्कृतशिक्षा विकासार्थं विभिन्नसर्वकारीगैर-सर्वकारीसंस्थानानां माध्यमेन प्रच्यसंस्कृतविद्यायाः संरक्षणं संवर्धनं सम्प्रसारणञ्चेति भवन्ति। तेषां विवेचनमावश्यकम्।

**(क) सर्वकारीप्रयासः**

भारतसर्वकारः संस्कृतशिक्षायाःसम्यग् अभ्युदयाय 1956 तमे खिष्ट्राब्दे संस्कृतायोगः संगठितः। भारतमानवसंसाधनविभागस्य प्रयासेन डॉ. सुनीति कुमार चटर्जी महोदयस्य अध्यक्षतायां ग्यारह- सदस्यीया संस्कृतायोगस्य संस्तुतिप्रभावेण भारतसर्वकारेण 1970 तमस्य खिष्ट्राब्दस्य अक्टूबर-मासस्य 15 तारिकायां राष्ट्रियसंस्कृतसंस्थानं संस्थापितम्। एवं संस्कृतायोगस्य संस्तुतिप्रभावेण सम्पूर्णदेशे यथाशक्तिःयथावसरं संस्कृतप्रचारे प्रसारे स्वीयं योगदानं प्रयच्छत्येव। तेषां प्रयासैः संस्कृतशिक्षयाः सर्वाङ्गीणविकासाय देशस्य विभिन्नभागेषु संस्कृतविश्वविद्यालयः, विद्यापीठः, संस्थानम् इत्यादीनां संस्थानाणां संस्थापितम्।

**1. राष्ट्रीय-संस्कृत-संस्थानम्-** (Rashtriya Sanskrit Sansthan.) मानित-विश्वविद्यालयः, नवदेहली। स्थापना-1970, ध्येयवाक्यम्-''योऽनूचानः स नो महान्''।

**अस्य संस्थानस्य अधीने दश परिसराः सन्ति**

1. श्रीसदाशिवपरिसरः, पुरी, ओडिशा।
2. राजीवगान्धिपरिसरः, शृगेरी, कर्णाटकम्।
3. जयपुरपरिसरः जयपुरम्, राजस्थानम्।
4. गुरुवायूरु परिसरः, गुरुवायूरु, केरलम्।
5. रणबीर परिसरः, जम्मू।
6. भोपालपरिसरः, भोपालः, मध्यप्रदेशः।
7. लक्नोपरिसरः, लक्नो, उत्तरप्रदेशः।
8. के. जे. सोमय्या परिसरः, मुम्बै, महाराष्ट्रम्।
9. गर्लीपरिसरः, गर्ली, हिमाचलप्रदेशः।
10. गङ्गानाथ झा परिसरः इलाहाबाद, उत्तरप्रदेशः।

**2.** राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः, आन्ध्रप्रदेशः। ध्येयवाक्यम्–"तमसो मा ज्योतिर्गमय।"

**3.** श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली, ध्येयवाक्यम्–"विद्यया विन्देतऽमृतम्।"

**4.** सम्पूर्णानन्द संस्कृतविश्वविद्यालयः, वाराणसी। ध्येयवाक्यम्–"श्रुतं मे गोपाय।"

**5.** जगद्गुरु रामानन्दाचार्य राजस्थान संस्कृतविश्वविद्यालयः, जयपुरम्, ध्येयवाक्यम्–"ऋतं च स्वाध्यायप्रवचने च"।

**6.** श्रीजगन्नाथसंस्कृतविश्वविद्यालयःपुरी, उडीशा।

**7.** कविकुलगुरुकालिदास संस्कृतविश्वविद्यालय, रामटेक्, महाराष्ट्रम्।

**8.** कामेश्वर सिंह दरभंगा संस्कृतविश्वविद्यालयः दरभंगा, बिहार। स्थापना–1961, ध्येयवाक्यम्– "स्वतः प्रमाणं परतः प्रमाणम्, वृहस्पते सवितर्बोधयैनम्"।

**9.** जगदगुरु आदिशङ्कराचार्य संस्कृतविश्वविद्यालयः, कालडी, केरलम्।

**10.** श्री सोमनाथ संस्कृतविश्वविद्यालयः, गुजरात्।

**11.** उत्तराञ्चल संस्कृतविश्वविद्यालयः, हरिद्वारम्।

**12.** केन्द्रीयविद्यालयसंगठनम्।

**13.** केन्द्रीयमाध्यमिकशिक्षा–वोर्ड।

**एतेषु सर्वकारीसंस्थानेषु संस्कृतशिक्षायाःसर्वाङ्गीणविकासात्मक–उद्देश्यानि अधोलिखितानि सन्ति।**

1. प्रथमातः आचार्यपर्यन्तं विद्यावारिधेः शिक्षाशास्त्रस्य च पाठ्यक्रमानाधृत्य प्राचीनपद्धत्या संस्कृतशिक्षणं परीक्षासंचालनं तदुपाधिवितरणञ्च।

2. देशस्य विभिन्नेषु राज्येषु संस्थानस्याङ्गीभूतानामेष्टानां केन्द्रीयसंस्कृतविद्यापीठानाम् एवञ्च विंशत्यधिकानां आदर्शसंस्कृतमहाविद्यालयानां सञ्चालनम्।
3. अङ्गीभूतेः विद्यापीठैः दुर्लभपाण्डुलिपीनां मौलिकानामनूदितानाञ्च ग्रन्थानां प्रकाशनं, तत्प्रकाशनायानुदानं प्रकाशितग्रन्थानां क्रयणं, देशस्य लब्धप्रतिष्ठ पुस्तकालयेषु तेषां निःशुल्क वितरणञ्च।
4. पत्राचारमाध्यमेन देशे विदेशेषु च हिन्दीमाध्यमेन अंग्रेजीमाध्यमेन च संस्कृतभाषाशिक्षणाय द्विवर्षीयस्य पाठ्यक्रमस्य सञ्चालनम्।
5. संस्कृते स्वकीयस्य विभिन्नपाठ्यक्रमस्य सञ्चालनाय अन्यसंस्कृतसंस्थाभ्यः सम्बद्धताप्रदानम्।
6. स्वकीयविद्यापीठेषु देशस्य अन्यासु संस्थासु च सुयोग्येभ्यः संस्कृतच्छात्रेभ्यः छात्रवृत्तिप्रदानम्।
7. विभिन्नानां शास्त्राणां संरक्षणाय सेवानिवृत्तानां प्रौढसंस्कृतविदुषां देशस्य विविधासु संस्कृतसंस्थासु वर्षद्वयाय शास्त्रचूडामणियोजनायां नियोजनम्।
8. संस्कृतपुनश्चर्यापाठ्यक्रमादि-प्रवर्तनार्थं संस्कृतपत्र-पत्रिका-प्रकाशनार्थञ्च आर्थिकानुदानम्।
9. विश्वसंस्कृतसम्मेलन-सदृशानां बृहत्संस्कृतसमारोहानामायोजनम्।

**शैक्षणिक-क्रियाकलापाः**

विभिन्नेषु शिक्षणसंस्थासु नियतकार्यजातातिरिक्ता आसन् काश्चन शैक्षणिककार्ययोजनाः पाठ्यसहगामिक्रियाश्च, यथा-

1. विशिष्टव्याख्यानयोजना,
2. साप्ताहिकसंगोष्ठीयोजना,
3. शास्त्रचूडामणियोजना,
4. सांस्कृतिक-कार्यक्रम-योजना,
5. वादविवादः,
6. सद्यःभाषणम्,
7. प्रतियोगिता,
8. अन्त्याक्षरी,
9. भाषात्मकक्रीडा,
10. निबन्धलेखनं,
11. विचारगोष्ठी,
12. कथा-लेखनम्,
13. समस्यापूर्तिः,
14. गानम्,

15. चुटकूला (प्रहशनम्),
16. कथाकथनम्,
17. प्रदर्शनी,
18. क्विजप्रतियोगिता,
19. विद्यालयपत्रिका,
20. प्रहेलिका:इत्यादय:।

## (ख) गैरसर्वकारी-प्रयास:–संस्कृत-अकादमी, लेखनं यान्त्रिकोपकरणञ्च। 10.2 Non- Government Attempt–Sanskrit Academy, Print and Electronic Media.

**(क) संस्कृत-अकादमी**–Sanskrit Academy

गैरसर्वकारी प्रयासान्तर्गत प्रादेशिकसर्वकारस्य सहयोगेनगठित-संस्कृत-अकादमी संस्कृतभाषाविकासार्थं कार्यं करोति। यस्यान्तर्गत पुस्तकप्रकाशनं, पाण्डुलिपिसंकलनं, संस्कृतविदुष:पुरस्कृतकरणं प्रोत्साहनञ्च कुर्वन्ति। आकाशवाणीदूरदर्शनाभ्यामस्यां भाषायां समाचारा: नाटकादिकमपि प्रसार्यते। अधुनाऽपि अस्यां भाषायां बहूनां पत्रपत्रिकाणां प्रकाशनं क्रियते। संस्कृतभाषाशिक्षणसमये प्रचीनदुर्लभग्रन्थानां पाण्डुलिपीनां संग्रहालयानां साक्षात् दर्शनं कारयित्वा लाभं प्राप्तुं शक्यते, यत्र तालपत्रोपरि, भोजपत्रोपरि च अद्यापि पाण्डुलिपय: सुरक्षिता: विद्यते।

**(ख) लेखनं यान्त्रिकोपकरणञ्च**- Print and Electronic Media

अद्य यन्त्राणि मानवजीवनस्य सर्वान् पक्षान् प्रभवयन्ति, शिक्षाजगति शिक्षकोऽपि स्वशिक्षणस्य प्रभावीकरणाय यान्त्रिकदृश्यसाधनानां प्रयोगं करोति।

**1. चित्रविस्तारकयन्त्रम्**–सूक्ष्मचित्राणि बृहदाकाराणि कर्तुम् अस्य यन्त्रस्य प्रयोगो भवति। अनेन प्रस्तुतानि चित्राणि ध्वनिरहितानि भवन्ति। शिक्षक: पाठ्यपुस्तकेभ्य: तथा पत्रपत्रिकाभ्य: चित्रं गृहीत्वा तत् कक्ष्यायां प्रस्तूय विपयम् अवबोधयितुं शक्नोति।

**2. प्रक्षेपणयन्त्राणि–(क) उन्नतशीर्षप्रक्षेपिका** Overhead projector–अनेन यन्त्रेण अध्यापक:पारदर्शिका: सज्जीकृत्य कक्ष्यायां प्रस्तौति। आभि: कस्यापि पाठस्य ऐतिहासिकपृष्ठभूमे अवबोधनाय सुविधा भवति। अनेन चित्राणां प्रदर्शनं कृत्वाऽपि संस्कृतशिक्षणं रुचिकरं कर्तुं शक्यते। (ख) फिल्मस्ट्रिपप्रक्षेपणयन्त्रम्–अनेन कस्यापि घटनाया: चित्राणां पूर्णबिम्ब: छात्राणां समक्षं प्रस्तूयते। येन छात्रेपु निरीक्षणस्य कल्पनाशक्तेश्च विकासो भवति। (ग) स्टिरियोस्कोपयन्त्रम्–मुद्रितपुस्तकम् अस्य यन्त्रस्य अधोभागे स्थापयति शिक्षक:, तस्य प्रतिबिम्बं प्रदर्शनपट्टे आगच्छति। तं सर्वे छात्रा: द्रष्टुं पठितुं च शक्नुवन्ति। संस्कृते दुर्लभग्रन्थानामुपयोगे इदम् अत्यन्तं सहायकं भवति।

**3. आकाशवाणी**–आकाशवाण्या प्रात:सायं काले संस्कृते वार्ता: प्रसारिता क्रियते। ता: वार्ता: श्रवणाय छात्रान् प्रेरितान् क्रियेत। तस्या: चर्चाऽपि कक्ष्यायां क्रियेत।

**4. भाषापञ्जिका-(Linguaphone)** भाषापञ्जिकायाः प्रयोगः भाषाशिक्षणे भवति। संस्कृतशिक्षणाय अपि इयं लाभकारी वर्तते। विभिन्नध्वनीनामुच्चारणं, काव्यशिक्षणं, व्याकरणशिक्षणं च प्रभावरूपेण कर्तुं शक्यते।

**5. भाषाप्रयोगशाला**—भाषाप्रयोगशाला विद्युन्नियन्त्रितः एकः कक्षः भवति। यस्मिन् कक्षे छात्राःसम्भूय भाषायाः ज्ञानं प्राप्नुवन्ति तथा च व्यक्तिगतनिर्देशनमपि प्राप्नुवन्ति। श्रव्यप्रयोगशाला' श्रवणकौशले' दृश्यश्रव्यप्रयोगशाला मौखिकाभ्यासे च बलं ददाति।

**6. दूरदर्शनम्**—इदं शिक्षाप्रदानस्य महत्त्वपूर्णं साधनमस्ति। राष्ट्रियशिक्षानीतिः 1986 तमे वर्षे दूरस्थशिक्षायां दूरदर्शनस्य उपयोगोपरि अधिकं बलम् अददात्।

**7. सङ्गणकः**—सङ्गणकःअद्य अस्माकम् अपरिहार्यो वर्तते। संस्कृतशिक्षकाः अपि स्वशिक्षणं रुचिकरं सुग्राह्यञ्च कर्तुं सङ्गणकानां कृते सफलभाषा विद्यते, यतः अस्याः व्याकरणनियमाः सूत्रबद्धाः क्रमबद्धाश्च विद्यते। व्याकरणशिक्षणाय सङ्गणके Help line इति प्रयोक्तुं शक्यते।

**8. (क) इलेक्ट्रोनिकसम्प्रेषणयनत्रम्**-(E-mail)-1994 तमे वर्षे विकसित-स्वबहुभाषिशब्दसंसाधक वर्डप्रोसेसर 'लीप' इत्यस्य अतिसफलतया उत्साहितो भूत्वा पूर्णस्थितेन 'सेंटरफॉरडेवलपमेन्ट ऑफ एडवान्स कमप्यूटिंग'(सीडेक) इत्यनेन सम्प्रत्येव एकं नवीनं 'वर्ड प्रोसेसिंग सॉफ्टवेयर' आई लीप' इत्याख्यं प्रसारितम् यत् ईमेलमाध्यमेन भारतीयभाषासु संदेशानां प्रेषणे सक्षमो विद्यते। 'आई लीप' एकं बहुभाषिसॉफ्टवेयरयन्त्रं विद्यते, गणनायाः इलेकट्रॉनिकसञ्चारस्य च क्षेत्रे भारतीयभाषाणाम् उपयोगवर्धने अतिसाहाय्यं भविष्यति, अस्य लाभोऽपि संस्कृतशिक्षकैः प्राप्तुं शक्यते।

**(ख) अर्नेटसेवा**- अस्याः अर्थोऽस्ति-'एज्यूकेशन एण्ड रिसर्च नेटवर्क' भारतसर्वकारस्य इलेक्ट्रॉनिकविभागेन संयुक्तराष्ट्रविकासस्य साहाय्येन अस्याः निर्माणं कृतम्। अस्माकं देशस्य प्रायशः एकशतकॉर्पोरेटकम्पनीज तथा शतद्वयाधिकाः शैक्षिकसंस्थाश्च अस्याः लाभं प्राप्तवत्यः।

**(ग) यूजनेटसेवा**-इयं सामूहिकचर्चायाःकृते विद्यते। अस्मिन् समये संसारे सम्भवतः 5500 समाचारसमूहाः विद्यन्ते, ये भिन्नभिन्नभाषासु विभिन्नविषयाणां ज्ञानं ददति। अस्याः कृते एकस्य सङ्गणकस्य, एकमॉडम्यन्त्रस्य, एकदूरवाणीयन्त्रस्य च आवश्यकता भवति।

**(घ) वर्डवाइडवेब (www)** अस्यार्थोविद्यते-शब्दानां, चित्राणां, वाण्याः सहायतया व्यक्तेः संस्थायाः विषयस्य च सूचनाप्रदत्तृणां तथा 'ई' शृंखलायाः सर्वेषां सङ्गणकानाम् एकः संग्रहः। अस्य कार्यालयः अमेरिकायाः वर्जीनियानगरे विद्यते। कस्याः अपि सूचनायाः प्राप्त्यर्थं तस्य सङ्केतः(Address) http अर्थात् 'हाइपर टेक्सट ट्रांसफर प्रोटोकॉल' माध्यमेन www इत्यस्य कार्यालये प्रेष्यते। सङ्गणकस्य' स्पीच-सिनथेसाइजर 'इत्यस्य लाभमपि भाषाशिक्षकाः प्राप्तुं शक्नुवन्ति। अद्यत्वे अन्तः क्रियायाः कार्यक्रमाः अपि सङ्गणकोपरि सफलाः विद्यन्ते। अनेन शिक्षकाः प्रश्नानाम् अभ्यासमपि कारयितुं शक्नुवन्ति। अनेन सह स्क्रीन संयोजनेन सम्पूर्णकक्ष्यायाः कृतेऽपि प्रयोगे आनेतुं शक्यते।

卐 卐 卐

# 11

# पाठ्यपुस्तकम्

# Textbook

अद्यतनशिक्षाप्रणाल्यां पाठ्यपुस्तकस्य स्थानमत्यन्तं महत्त्वपूर्णं वर्त्तते। शिक्षणस्य केन्द्रबिन्दुरस्ति पाठ्यपुस्तकम्। पाठ्यपुस्तकस्य मुख्योद्देश्यानि वाचनं, लेखनं, व्याकरणशिक्षणम् गहनाध्ययनञ्च भवन्ति। एतदतिरिक्ततया द्रुतपाठपुस्तकान्यपि पाठ्यक्रमे निर्धारितानि भवन्ति। एतेषामुद्देश्यं विस्तृताध्ययनं भवति। भाषाशिक्षणे पाठ्यपुस्तकानामवलम्बनम् आवश्यकं भवति। यतः छात्राणां विषयवस्तुना साकं भाषायाः स्वरूपमपि बोधनीयं भवति। शैक्षणिकस्तरे सर्वत्र समरूपतां सम्पादयितुञ्च पाठ्यपुस्तकस्य प्रयोगो आवश्यकः। पाठ्यपुस्तकं पाठ्यविषयाणां, व्याकरणस्य च अध्ययनेन, अभ्यासैश्च अर्जितस्य ज्ञानस्य स्थायित्वं विधातुं प्रमुखं साधनं भवति। पाठ्यपुस्तकं वर्तमानशिक्षायाः आधारशिला वर्त्तते।

### (क) पाठ्यपुस्तकानामावश्यकता

1. पाठ्यपुस्तकानां प्रयोगेण पाठानां पठने पाठने च सहायता भवति।
2. अधीतानां पाठानां स्मरणाय प्रबलं साधनं भवति।
3. ज्ञानोपार्जनाय पाठ्यपुस्तकस्य साहाय्यमपेक्षितं भवति।
4. छात्राणां गृहकार्यकरणे सौविध्यं भवति।
5. पाठ्यपुस्तकं भाषाशिक्षणस्य साधनं भवति, न तु साध्यम्।
6. भाषाशिक्षणस्य विशिष्टोद्देश्यानां प्राप्तौ सहायकं भवति।

### (ख) पाठ्यपुस्तकस्य उद्देश्यानि

1. बालकानां ज्ञानस्य सीमायाः विस्तारः।
2. व्यावहारिकज्ञानस्य सम्पादनाय प्रेरणा।
3. छात्राणां कल्पनाशक्तेः विकासः।
4. विविधविषयाणां, विभिन्नशैलीनाञ्च परिचयः।

5. छात्रेषु स्वाध्यायं प्रति रुच्युत्पादनम्।
6. संस्कृतपाठ्यपुस्तकस्य मुख्योद्देश्यं तावत् सांस्कृतिकलक्ष्याणां पूरणम्।

## (ग) संस्कृतपाठ्यपुस्तकानां प्रकाराः

**1. सूक्ष्माध्ययनस्य पुस्तकानि**-सूक्ष्माध्ययनस्य पुस्तकानामध्ययनं गम्भीररूपेण भवति। एतेषामुद्देश्यं बालकानां शब्दभण्डारस्य वर्धनं, भाषाज्ञानस्य वर्धनं, सूक्तीनां लोकोक्तीनाञ्च परिचयः, विभिन्नप्रसङ्गानां स्पष्टज्ञानञ्च भवति। एतेषामध्ययनेन बालकानां ज्ञानं वर्धते। लेखकानां कवीनाञ्च विचाराः ज्ञायन्ते। यथा-गद्य-पद्य-व्याकरण-अनुवादादि सम्बद्धानि पुस्तकानि।

**2. विस्तृताध्ययनस्य पुस्तकानि**-विस्तृताध्ययनस्य पाठ्यपुस्तकानां प्रयोगः द्रुतपाठस्य कृते भवति। अत्र सरलभाषायाः प्रयोगो भवति। एतेषामुद्देश्यं छात्राणां शीघ्रवाचनस्याभ्यासो भवति।

**पाठ्यपुस्तकनिर्माणस्य सिद्धान्ताः**

सत्पाठपुस्तकस्य केचन् विशिष्टताः भवन्ति। एते विशेषाः पाठ्यपुस्तकनिर्माणे सहायकाः भवन्ति। तेषां पक्षद्वयं दृश्यते-(क) आन्तरिकपक्षः, (ख) बाह्यपक्ष इति।

## (घ) आन्तरिकपक्षस्य सिद्धान्ताः

**1. सोद्देश्यता**—प्रत्येकं पाठ्यपुस्तकं कैश्चित् निश्चितैः उद्देश्यैः निर्मीयते। तेषामुद्देश्यानां सम्पादनं तत्र स्यात्।

**2. स्तरानुगुणता**—पाठ्यपुस्तके सञ्चिता सामग्री, छात्राणां शारीरिक, मानसिकस्तरानुगुणं भवेत्। किशोरावस्थायां छात्राः कथावर्णने, प्रकृतिवर्णने, यात्रावर्णने, जीवितचरित्रेषु च आसक्ताः भवन्ति। अतः तादृशविषयाः तेषां पाठ्यपुस्तके भवेयुः।

**3. व्यावहारिकता**—पाठ्यविषयाः छात्राणां परिसरेण, जीवनेन च सम्बद्धाः स्युः।

**4. रोचकता**—पाठ्यसामग्री बालानां रुच्यनुसारं भवेत्। उच्चस्तरे सामाजिकाः, वैज्ञानिकाश्च विषयाः स्युः। हास्यकथाः बालानां मनोविनोदाय भवेयुः।

**5. विषयवैविध्यम्**—पाठ्यपुस्तके विषयाणां वैविध्यं सम्पादनीयम्। गद्यं, पद्यं, नाटकं, निबन्धाः, सम्भाषणम् इत्यादिसाहित्यप्रकाराः भवेयुः।

**6. आदर्शवादः**—बालकानां जीवने उन्नतादर्शानां नैतिकतायाश्च उत्पादनाय अनुकूलाः विषयाः भवेयुः।

**7. आधुनिकविषयाणां समावेशः**—आधुनिककाले नवीनविषयेषु संस्कृतस्य उपयोगं ज्ञापयितुम् आधुनिकविषयाणामपि समावेशः आवश्यकः। वैज्ञानिकाविष्काराः, प्रजातन्त्रं, पंचायतनं, नगरपालिका, नेतृणां जीवनचरित्राणि च पाठ्यपुस्तके समाविशेयुः।

**8. उपयुक्तता**–पाठ्यपुस्तके समाविष्टा:विषया:, छात्राणां दैनिकव्यवहारे, जीवने च उपयुक्ता: स्यु:।

**9. व्यवस्थितक्रम:**–पाठ्यपुस्तकस्य सामग्री व्यवस्थिता स्यात्। पाठ्यपुस्तके ऋतुभि:, उत्सवैश्च सम्बद्धा: पाठा: तत्तत्समये पाठिता: भवेयु:।

**10. अभ्यास:**–पाठ्यपुस्तके प्रत्येकं पाठस्य अन्ते अभ्यासकार्यम् अवश्यं दातव्यम्। **यथा**-शब्दार्थ:, वाक्यप्रयोग:, व्याकरणकार्यम्, रिक्तस्थानानां पूरणम्, गद्यांशानां, पद्यांशानाञ्च व्याख्या, अनुवाद:, अन्यप्रश्ना: अभ्यासार्थं स्यु:।

**11. भाषाधिकारवर्धनम्**–पाठ्यपुस्तकस्य भाषा बालानां योग्यतानुसारं स्यात्। शब्दानां चयनं, वाक्यानां योजना, सूक्तीनां सङ्ग्रहश्च बालानां भाषाधिकारं वर्धयन्ति।

## (ङ) बाह्यपक्षस्य सिद्धान्ता:

**1. आकार:**–पाठ्यपुस्तकानामाकार: आवश्यकतानुसारम् अल्पो वा अधिको वा स्यात्।

**2. सम्पादनम्**–प्राथमिकस्तरे, माध्यमिकस्तरे, उच्चस्तरे च संस्कृतशिक्षणाय प्राय: संस्कृतसङ्ग्रहाणां प्रयोग: क्रियते। अत: एतेषां सम्पादनं सश्रद्धं कर्तव्यम्।

**3. चित्राणि**–चित्राणि विषयानां स्पष्टीकरणे सहायकानि भवन्ति। पाठ्यपुस्तकाना-मुपयोगस्य वर्धनाय चित्राणि भवेयु:।

**4. मुद्रणम्**–पाठ्यपुस्तकस्य मुद्रणं शुद्धं स्यात्। शीर्षकाणां कृते भिन्नप्रकाराणि मुद्राक्षराणि उपयुज्येरन्। पदानां वाक्यानां च मध्ये उचितं व्यवधानं स्यात्।

**5. नाम**–पाठ्यपुस्तकस्य बाह्यगुणेषु नाम्नोऽपि प्रभावो वर्त्तते। पाठ्यपुस्तकस्य नाम सरलं, संक्षिप्तं, स्पष्टम्, आकर्षकञ्च भवेत्।

**6. आवरणम्**–पुस्तकस्य बन्धनं सुदृढं, बाह्यावरणमाकर्षकञ्च स्यात्। मुखपुटे रागरञ्जितानि चित्राणि छात्राणां प्रसादकानि स्यु:। उच्चस्तरे कलात्मकानि चित्राणि भवेयु:।

**7. मूल्यम्**–पाठ्यपुस्तकस्य मूल्यमुचितं स्यात्।

संस्कृतपाठ्यपुस्तकस्य प्रयोगे संस्कृताध्यापका: संस्कृतशिक्षणे मार्गदर्शकरूपेण कार्यं कुर्वन्तु। पाठ्यपुस्तकस्य दिशानिर्देशानुसारं बालकान् संस्कृतं पाठयन्तु। पाठ्यपुस्तकं पठितुं छात्रान् प्रेरयेयु:।

卐 卐 卐

# 12

# प्राचीन-अर्वाचीनमूल्यांकन प्रविधय:

# Ancient and Modern Teachniques of Evaluation

## (क) शलाकापरीक्षा, (ख) मौखिकपरीक्षा, (ग) लिखितपरीक्षा,

(A) Shalakapariksha, (B) Oral Examination,
(C)Written Examination

शिक्षाया: परीक्षयासह अभिन्नसम्बन्धो वर्त्तते। परीक्षाणां द्वारा छात्राणां ज्ञानस्य स्तर:, बुद्धिकौशलं, कार्यशक्तिश्च निश्चीयते। मूल्याङ्कनेन छात्राणां योग्यताया: परीक्षणेन साकं छात्राणां प्रगते: निर्धारणमपि क्रियते। अध्यापकेन छात्रेषु सम्पाद्यमानानि लक्ष्यानि स्पष्टीकरणानि च आदौ एव निर्णेष्यन्ते। तानि संसाधयितुं वार्षिकप्रणाली [Year Plan] प्रामाणिक प्रणाली [Unit Plan] च निर्मातव्ये। तयोरनुसृत्य उचितशिक्षण-पद्धतिमाश्रित्य शिक्षयेत्। प्रचीनकाले अर्वाचीनकाले परीक्षणम् इति नाम्ना व्यवह्रियमाना आसीत् अस्ति च। इदानीम् अस्य परिगणनं मूल्यांकनम् इति नामान्तरे स्त:। मूल्यांकनं शास्त्रीयतया कारणाय आदौ उद्दिष्यनि लक्ष्याणि स्पष्टीकरणानि च मनसि स्थापयित्वा कार्यं करणीयम्। पाठ्यप्रणालीमेकामेवाधारीकृत्य प्रश्नपत्र निर्मीयते। मूल्यांकनं सशास्त्रीयं भवति। एतदर्थं अध्यापक: शिक्षणविधानं समीचीनतया कर्तुं सन्नद्धो भविष्यति। एवं लक्ष्यानि दृष्टौ निधाय शिक्षणविधानं निर्धारणीयम्। तयो: द्वयो: उद्दिश्य मूल्यांकननिर्धारणं तदनन्तरं फलानि उद्दिश्य पुन: लक्ष्यानि शिक्षणविधानं सवरणञ्च स्यात्। एवं रीत्या मूल्यांकनं भवति चेत् छात्रेऽपि स्वयं पाठ्यांशे कस्मिन् स्तरे अस्तीति जानीयात्। परीक्षा द्वारा छात्राणां ज्ञानस्य स्तर:, बुद्धिकौशलम्, कार्यशक्तिश्च निश्चीयते। सर्वेषु देशेषु छात्राणां योग्यतां निर्णेतुं काचित् परीक्षाप्रणाली प्रचलिता अस्ति। शिक्षाया उद्देश्यानां साफल्यमपि निर्णीयते।

### (क) मूल्याङ्कनस्यावश्यकता

किमपि कार्यं क्रियते चेत् तत् कियत्पर्यन्तं सफलं जातमित्यपि ज्ञातव्यम्। अध्यापकानां

शिक्षणं कियत्सफलम्? छात्राणां विषयग्रहणं कियत्? इत्यादिविषयान् परम्परागतपरीक्षा द्वारा ज्ञातुमशक्यत्वात् मूल्याङ्कनस्य अवलम्बनम् आवश्यकं भवति। शिक्षणविधीनां समीकरणे, शिक्षास्तरस्य उन्नतीकरणे च मूल्याङ्कनं सहायकं भवति।

## ( ख ) परीक्षणमूल्यांकनयोर्भेदः

वस्तुतः परीक्षणं मूल्यांकनम् अनयोर्मध्ये भेदः नास्ति, भेदः दृष्ट्या प्रतीयते। किन्तु सूक्ष्मेक्षिकया परिशील्यते चेत् भेदः अस्त्येव। शिक्षणानन्तरं कियत्पर्यन्तं लक्ष्यानि साधितानि इति ज्ञात्वा परीक्षणम् अथवा मूल्यांकनं क्रियते। मूल्यांकनेन शारीरिक-मानसिक-बौद्धिकाः अंशाः सर्वाः ज्ञातुं शक्यन्ते। परीक्षणेन अंशतया छात्रव्यक्तित्वं मापयितुं शक्यते। मूल्यांकनेन पूर्णतया छात्रव्यक्तित्वं मापयितुं शक्यते। परीक्षणं मूल्यांकनं अनयोर्मध्ये विद्यमानः भेदः अयमेव।

## ( ग ) लिखित-मौखिकपरीक्षणं-मूल्यांकनम् अनयोर्मध्ये विद्यमानाः भेदाः

1. इदानीं आचरणे विद्यमानानां परीक्षा द्वारा केवलं नियमितानि लक्ष्यानि साधयितुं शक्यते। मूल्यांकनेन एवं सर्वमेतत् कर्तुं शक्यते।

2. लिखित परीक्षाणां द्वारा विषयेषु छात्राणां ज्ञानस्यावगाहनं व्यक्तीकरणञ्च परीक्षणं कर्तुं शक्यते, किन्तु छात्राणां व्यक्तित्व-बुद्धि, अभिरूचयः वैखर्यः, आसक्तयः, मानसिक- सांघिक प्रवर्तनाश्च मूल्यांकनं लिखितपरीक्षाणां द्वारा एताः सर्वाः परीक्षितुं शक्यन्ते।

3. मूल्यांकने निबन्धरूप प्रश्नाः, वस्तुनिष्ठ प्रश्नाश्च अपेक्षया मौखिकपरीक्षा, अभिरूचि-परीक्षा, आसक्तिपरीक्षा, सांघिक प्रवर्तनपरीक्षाश्च सन्ति।

4. लिखितपरीक्षण द्वारा लक्ष्यपरीक्षणमेव परन्तु मूल्यांकने लक्ष्यपरिवर्तनं नूतनलक्ष्य-योजनञ्चास्ति।

5. लिखितपरीक्षणे अंशस्यैव प्राधान्यं भवति किन्तु मूल्यांकनं अत्यन्तं विस्तृतं गुणात्मकञ्चास्ति।

6. मूल्याकनेन छात्रेषु सर्वाङ्गीणं विकासं सम्पादयितुं शक्यते। लिखितपरीक्षासु न तथा।

7. परीक्षा छात्राणां शिक्षाध्ययनपर्यन्तम् अनुवर्तिता भवेयुः, मूल्यांकनमाजीवनपर्यन्तं भवेत्।

8. मूल्यांकनं छात्राणां पथप्रदर्शनायोपयोक्तव्यं भवेत्।

9. मूल्यांकने शैक्षिकांशास्सर्वेऽन्तर्गताः भवेयुः। विद्यालयेषु पाठशालासु सर्वासु लिखितपरीक्षासु निबन्धरूपप्रश्नाः [Essaytype Questions] वस्तुनिष्ठप्रश्नाः [Objective type Quuestions] एतेभ्यः प्रश्नेभ्यः नियमितानि लक्ष्यान्येव परीक्षितुं शक्यते। शिक्षायाः मुख्योद्देश्यमस्ति ''प्रवर्त्तनायां परिवर्तनानयनम्'' [Change in behaviour] (आचरण-परिवर्तनम्) पाठशाला जीवनपर्यन्तं छात्राणां विषयाध्ययनस्य कश्चन् भाग एव, लिखित परीक्षाः छात्राणां विषयग्रहणमेव परीक्षणं कुर्वन्ति। छात्राणां व्यक्तित्वे विषयग्रहणं कश्चन् भाग एव, शिक्षालक्ष्येषु प्रधानतम् लक्ष्यमस्ति यत्- छात्रेषु सम्पूर्णव्यतित्वसंवर्धनम्, व्यक्तित्वं नाम केवलं

विषयग्रहणमेव नास्ति। छात्राणां बुद्धि:, अभिरूचय:, आसक्तय:, वैखर्य: एवमेव सांघिकप्रवर्तना (आचरण) एता: सर्वा: व्यक्तित्वे संनिहिता एव। एता: परीक्षितुं लिखिता: परीक्षा: पर्याप्ता: न भवन्ति। अद्यतनेकाले अध्यापका: शिक्षाधिकारिण: शिक्षायां छात्रेषु विभिन्ना प्रवर्तना अपेक्षन्ते। मूल्यांकने परीक्षाभिस्साकं प्रधानतया वस्तुनिष्ठ-प्रश्नानपि योजयन्ति। निबन्धरूप-परीक्षा:, वस्तुनिष्ठपरीक्षा: एता: चालयित्वा एताभि: साकं जीवन-संघटन-संचिका [Case history] मौखिकपरीक्षा [Oral test] प्रश्नावली: [Questionaore] मापक पट्टिका [Rating scale] प्रगतिपत्रम् [Cumulative record] चिकित्सात्मक परीक्षा [Diagnostic test] च आयोज्यन्ते। एता: सर्वा: छात्रसम्बन्धि-साधनानां प्रवर्तनानां मापने प्रमुखं पात्रम् निर्वहन्ति।

## (घ) संस्कृतशिक्षणे परीक्षणविधानम्

संस्कृतशिक्षणे अद्यापि प्राचीन पद्धत्यामेव सर्वत्र शिक्षणं भवति। सम्प्रति विद्यापीठानां प्रभावेन उत्साहवन्त: अध्यापका: नूतनशिक्षणपद्धतिम् आश्रित्य बोधनं कुर्वन्ति। संस्कृतशिक्षणे त्रय: महत्त्वपूर्णा अंशा: सन्ति। ते यथा–

1. पाठ्यक्रम:

2. शिक्षणविधि:

3. मूल्यांकनम्। मूल्यांकनप्रक्रियाया: स्वरूपम् एवमस्ति। संस्कृतभाषायां छात्राणां परीक्षणाय प्राचीनकालादारभ्य निबन्धरूपप्रश्नानां अत्यधिकं प्रयोग: प्रदीयमानमासीत्। इदानीमपि विश्वविद्यालयेषु, महाविद्यालयेषु, विद्यालयेषु च निबन्धरूपप्रश्ना: सर्वेषां परीक्षायां भवेयुस्चेत् छात्राणां ज्ञानं अंशत: परीक्ष्यमाणं भवति। निबन्धरूपप्रश्ना: 50% अङ्कानां कृते परिमिता: स्यु:। अवशिष्टाप्रश्ना: [Objective type Questions] स्यु:।

**निबन्धरूप प्रश्ना: सर्वे भवन्ति चेत् वक्ष्यमाणा दोषा: भवेयु:**

1. घंटाद्वयम्-त्रयम् वा अल्प एव समये सम्पूर्णं परीक्षितुं न शक्यते।
2. पूर्णपाठ्यक्रमस्याध्ययनावश्यकता नास्ति।
3. केवलम् उत्तीर्णता विषय एव मानदण्ड इव स्वीक्रियते।
4. एता: परीक्षा: केवलप्रमाणपत्रस्वीकरणाय एव ज्ञानार्जनविषये तु गौणं स्थानं प्रदीयते।
5. परीक्षाफलिते समागता अङ्का अपि विश्वसनीयतां न निरूपयन्ति, छात्रा: अल्पान् प्रश्नान् चयनं कृत्वा तान् एव पठन्ति, किन्तु बहून् विषयान् न जानन्ति।
6. अङ्का अपि यथाचिन्तितं न आगच्छेयु:।
7. प्रश्नपत्राणि कदाचित् सुलभानि कठिनातिकठिनानि भवन्ति।
8. परीक्षापत्रमूल्यांकनेऽपि भिन्नता भवति।
9. एतासु परीक्षासु अर्थावगाहनं विना रटनप्रक्रियाया: कण्ठस्थीकरणस्य च प्रामुख्यं प्रदीयते।
10. वर्षपर्यन्तम् अध्ययनस्यावश्यकता नास्ति।
11. ये छात्रा: अक्षराणि सुन्दरतया लिखन्ति तेषां अधिका अङ्का आगच्छन्ति।

## ( ङ ) मूल्यांकनस्योद्देश्यानि

1. छात्रानुगुणं बुद्धिसंख्यानुगुणं विभाजनम्।
2. छात्राणां अभिरूचीनामनुगुणं वृत्तिग्रहणे (To take job) पथप्रदर्शनम्।
3. छात्राणां दैनन्दिने जीवने समागतानां समस्यानां परिष्कारोपायसूचनम्।
4. छात्राणां सामर्थ्यानां बलहीनतानां अनुस्मरणम्।
5. मूल्यांकनाधारेण विविधभिः पाठशालाभिः सम्पादितानां प्रगतौ तोलनम्।
6. अभिभावकेभ्यः प्रगतिपत्र द्वारा असकृत् प्रगतेः निवेदनम्।
7. नूतनशिक्षणपद्धतिम् अवलम्ब्य शिक्षणे अभिवृद्धिसम्पादनम्।
8. छात्रजीवनस्य प्रत्येकस्तरे परीक्षणं मापनञ्च।
9. विविधविद्यालयानां मध्ये तुलनाकरणम्।
10. मूल्यांकने लक्ष्यालक्ष्याणां परिशीलनं, अपेक्षितं चेत् नूतन लक्ष्याणां योजनञ्च।
11. शिक्षणविधीनां समीकरणे, शिक्षास्तरस्य उन्नतीकरणे च मूल्यांकनं सहायकं भवति।

## ( च ) मूल्यांकनस्य प्रकाराः

मूल्यांकनं द्विविधं भवति। आन्तरिकमूल्यांकनं बाह्यमूल्यांकनञ्च।

**1. आन्तरिकमूल्यांकनम्:**—छात्र द्वारा शैक्षणिकसत्रे कृतानां सर्वेषां कार्याणां दैनिकगति-विधीनाञ्च परीक्षणम् आन्तरिकमूल्यांकनं भवति। एतादृशं मूल्यांकनमत्युत्तमं भवति। आन्तरिकं मूल्यांकनं छात्राणां दैनिकप्रगतिं, गृहकार्यं, विभिन्नसाहित्यिकेषु कार्य-क्रमेषु प्रदर्शितं कौशलं, सामयिकपरीक्षाणां परिणामञ्चाश्रित्य भवेत्।

**2. बाह्यमूल्यांकनम्:**—बाह्यमूल्यांकनं विद्यालयैः, शैक्षिकसंस्थाभिः, विश्वविद्यालयैश्च आयोजिता परीक्षा-द्वारा भवति। एतासु परीक्षासु छात्रेभ्यः लिखितानामुत्तराणां, कृतस्य कार्यस्य चाधारेण अङ्कानां वितरणं क्रियते।

## ( छ ) मूल्यांकनस्य साधनानिः

1. निबन्धरूपपरीक्षाः, [Essay type Examination]
2. वस्तुनिष्ठपरीक्षाः, [Objective type tests]
3. मौखिकपरीक्षाः, [Oral tests] (क) अन्त्याक्षरीपरीक्षा, (ख) शलाकापरीक्षा।
4. प्रश्नावली-[Questionaire]।
5. साक्षात्कारः—[Interview]।
6. जीवनेतिहासविधिः— [Case study]।
7. परिशीलन पट्टिकाः—[Check lists]।
8. मापकपट्टिकाः— [Rating scales]।
9. निदानात्मक परीक्षाः— [Diagnostic tests]।

10. बुद्धिपरीक्षाः—[Intelligence tests]।
11. अभिरूचिपरीक्षाः—[Aptitude tests]
12. आसक्तिपरीक्षाः— [Interest inventories]।
13. प्रयोजनप्रविधयः–[Projective techniques]
14. सोषियो मेट्रिक मेथड–[Sociometric method] इति।

## (ज) लिखितनिबन्धरूपपरीक्षाः

प्राचीनकालादारभ्य अद्य यावत् एताः परीक्षाः आयोज्यन्ते। इदानीमपि प्राथमिकस्तरादारभ्य उन्नतस्तरपर्यन्तं उत्तीर्णता विषये एताः मूर्धन्यस्थानं निर्वहन्ति। स्नातक–स्नातकोत्तर स्तरे एताः प्रमुखं स्थानं निर्वहन्ति। अत्र नियमित प्रश्नानां कृते एव समाधानानि लेखनीयानि भवन्ति। परीक्षा समये ये ये विषयाः स्मृतिपथे भवन्ति तानेव लिखेयुः छात्राः। अतः एताभिः परीक्षाभिः छात्राणां स्मरणशक्तिं परीक्षितुं शक्यते। सप्ताहानन्तरं, मासानन्तरं, मासत्रयानन्तरं, षण्मासानन्तरं, वत्सरानन्तरं, एताः परीक्षाः आयोजिताः भवन्ति।

**लिखितनिबन्धरूपपरीक्षायाः गुणाः**

1. विपयाः कण्ठगता भवेयुः।
2. स्मरणशक्तिः परीक्षिता भवेत्।
3. स्वीयान् भावान् स्वेच्छया प्रकटीकर्तुं शक्यते।
4. पाठ्यक्रमं पूर्णतया न अध्येतव्यम्।
5. आदितः आरभ्य अन्तपर्यन्तं पठनस्यावश्यकता नास्ति।
6. भाषित–संस्कृतस्य विकासो भवितुमर्हति।
7. अधीतानंशान् सर्वान् यथा कथं वा घण्टात्रये लिखितुमवकाशोऽस्ति।
8. अल्पाङ्काः आगताश्चेत् पुनर्मूल्याङ्कने अधिकान् अङ्कान् सम्पादयितुं शक्यते।

**लिखितनिबन्धरूपपरीक्षायाः दोषाः**

1. छात्राः परीक्षार्थं सनद्धाः भवन्ति न तु ज्ञानार्जनाय।
2. प्राप्ताङ्काः योग्यतापूर्वकं न भवेयुः।
3. अङ्कप्राप्त्यर्थं कण्ठस्थीकरणाय एव प्रोत्साहः प्रदीयते।

## (झ) वस्तुनिष्ठपरीक्षाः

नूतनमूल्यांकनस्यानुगुणं वस्तुनिष्ठपरीक्षाणां कृते प्राथम्यं प्रदीयते। लक्ष्यात्मकपरीक्षासु एता अन्तर्भवन्ति। एकैकस्य प्रश्नस्य पदेनैकेन वा वर्णेनैकेन वा समाधानं प्रदेयं भवति। वस्तुनिष्ठपरीक्षासु पाठ्यक्रमः पूर्णं अधीतश्चेत् परीक्षायां उत्तीर्णाः भवितुमर्हन्ति छात्राः। एता परीक्षाः विश्वसनीयास्सन्ति। प्रवेशपरीक्षासु अन्यान्य परीक्षासु वस्तुनिष्ठप्रश्नाः भवन्ति। गतकालापेक्षया इदानीं एतासां परीक्षाणां महन्महत्त्वमस्ति। अद्यतनेषु दिनेषु एताः परीक्षाः

विश्वगतं शिक्षाक्षेत्रमेव शासन्ति। फलतः संस्कृतक्षेत्रेऽपि निबन्धरूप प्रश्नैस्साकं वस्तुनिष्ठप्रश्नाः एव सन्ति।

**वस्तुनिष्ठपरीक्षाया:प्रकाराः**

1. बहुसमाधान प्रश्ना:—[Multiple choice questions]
2. रिक्तस्थानपूरणम्-[Fill in the blanks]
3. सत्यासत्य निर्णय:—[True or false]
4. सत्यासत्य चिह्नयोः स्थापनम्-[True or false marking]
5. योजयत-[Maich the following]
6. समीचीनार्थानां (पर्यायवाचीशब्दानां) अधोरेखाङ्कनम्।
7. पदेनैकेन समाधानप्रदानम्।
8. वचनान्तरे शब्दधातुरूपाणां लेखनम्।
9. सन्धत्त, विभाजत।

**वस्तुनिष्ठपरीक्षायाः गुणाः**

1. एताभिः परीक्षाभिः फलितानि विश्वसनीयानि भवन्ति।
2. कण्ठस्थीकरणस्य प्राधान्यं न्यूनीकृतं भवेत्।
3. पाठ्यक्रमे विद्यमानान् सर्वानंशान् पठितुमवकाशोऽस्ति।
4. आभिः परीक्षाभिः छात्राः सक्रियाः भवेयुः।
5. लेखने क्लेशः न भवेत्।
6. अधीताः विषयाः चिरकालं यावत् मनसि स्थापयितुं शक्यन्ते।

**वस्तुनिष्ठपरीक्षायाः दोषाः**

1. सर्जनात्मकशक्तिः लुप्ता भवेत्।
2. शुद्धमशुद्धं वा ऊहाधारेण लिख्यन्ते चेत् काचन् समीचीनानि तु समाधानानि एव भवष्यन्तीति धैर्यं भवन्ति।
3. सुलभतया इतरान् दृष्ट्वा लिखितुमवकाशोऽस्ति।

## (ञ) मौखिकपरीक्षाः

प्राचीनकालादारभ्य मौखिकपरीक्षाः प्रचालयन्तेऽस्माकं देशे। वर्तमानकाले संस्कृतकक्षासु पाठप्रवन्धनसमये मौखिकप्रश्नाः पृष्यः भवन्ति। साक्षात्कारे, उन्नतस्तरे शिक्षाचार्य:— [M.Ed] शास्त्रचूड़ामणि-[M.Phil]विद्यावारिधि:—[Ph.D]इत्यादिषु अध्ययनक्रमेषु एताः परीक्षा आयोज्यन्ते एव उत्तीर्णता विषयेऽपि एतासु सम्पादिता अङ्का अपि परिगणिताः भवन्ति। आभिः परीक्षाभिः छात्राणां व्यक्तित्वं भाषणं कौशलं, भावप्रकटनम्, विषयस्यागाधता उच्चारणनैपुण्यं च स्पष्टतया ज्ञातुं शक्यते। संस्कृतवाङ्मये अन्त्याक्षरी, शलाका परीक्षा, तु, मौखिकपरीक्षायाः एव रूपान्तरमस्ति।

**1. अन्त्याक्षरी:**–अन्त्याक्षरी एका स्पर्धा, कक्षायां अथवा पाठशालायां विद्यमानान् छात्रसमूहान् विभाजनं कृत्वा इयं स्पर्धा आयोजनीया, स्पर्धासमये पुस्तकानि नैव द्रष्टव्यानि। पूर्वमेव बहव: श्लोका: छात्रै: कण्ठस्थीकरणीया:। अन्त्याक्षरीस्पर्धाया: कृते वाङ्मये निपुण: निष्पक्षपात: वहुश्लोकज्ञानयुक्त: कश्चनविद्वदध्यापक: संचालक: भवति। एषा अतिप्राचीन-कालादारभ्य संस्कृतक्षेत्रे प्रचलति। इदानीमपि संस्कृतविद्यालयेपु, महाविद्यालयेपु, विश्व-विद्यालयेषु च प्रचलत्येव। एपा स्पर्धा न केवलं छात्राणां अपि तु अध्यापकानां विदुपाञ्च कृते रमणीया हृदयङ्गमा मनोहरा उत्प्रेरका: च भवितुमर्हति।

**2. शलाकापरीक्षा**–एषा परीक्षा अपि मौखिकान्तर्गता एव। शलाका नाम कश्चन लघुकाष्टखण्ड:। ईदृशं लघुकाष्टखण्डं यदृच्छया पुस्तके एकस्मिन् पृष्ठे स्थाप्यते। यस्मिन् पृष्ठे स: काष्ठखण्ड: स्थाप्यते, तस्मिन् पृष्ठे यदस्ति तत् पुस्तकम् अदृष्ट्वैव वक्तव्यम्। एषा एका संचालनात्मकपरीक्षा, प्राक्तनकाले एषा संस्थानेषु आयोज्यमानाऽऽसीत्। एषा परीक्षा प्रतिष्ठात्मिका, कोऽपि छात्र: विद्वान् वा यस्मिन् विपये शास्त्रे च निष्णात: भवति तस्य तस्मिन् विषये परीक्षा देयमाना आसीत्। उदाहरणतया व्याकरणे, साहित्ये, न्याय, वेदान्ते वा यस्मिन् परिनिष्ठितो भवति तत् सम्बद्धिनी शास्त्रे ये लक्षणग्रन्था: निर्दिष्य: भवन्ति तेपु परीक्षा भवति। महाभाष्यं इति ग्रन्थं स्वीकृत्य तस्मिन् ग्रन्थे यत्र कुत्रापि यस्मिन् कस्मिन्नपि पृष्ठे शलाकां स्थापयित्वा मौखिकपरीक्षा निर्वहणीया। अनन्तरं तस्मिन् पृष्ठे किं सूत्रमस्ति? सूत्र संख्या का? सूत्रस्था अनुवृत्ति: का? सूत्रार्थ: क:? सूत्रव्याख्यानं कथं करणीयम्? सूत्रे विद्यमाना: विशेपा: के? पृष्ठसंख्या: का:? इत्यदय: सर्वे परीक्षिता: भवन्ति। ग्रन्थस्यादिम-पृष्ठादारभ्यान्तिमं पृष्ठं यावत् पदं-पदं प्रत्यक्षरं प्रतिवाक्यं च प्रतिश्रेणी च परीक्षिता भवेत्।

**मौखिकपरीक्षासु विद्यमाना:गुणा:**

1. भाषणेस्थैर्येधैर्यञ्चसम्पादयितुं शक्यते।
2. सभाकम्पं दूरीकर्तुं शक्यते।
3. सभासु वेदिकासु च अव्याहतं सम्भाषणं कर्तुं शक्यते।
4. उन्नतस्तरे एता: परीक्षा: लाभदायका: भवन्ति।

**मौखिकपरीक्षासु विद्यमाना:दोषा:**

1. भाषणे कदाचित् सहजसमाजप्रभावकारणेन यथार्थं वक्तुं समर्थो न भवति।
2. अधीतं सर्वं मौखिकपरीक्षा समये एव परीक्षितुं न शक्यते।

卐 卐 卐

# 13

# व्याकरणशास्त्रशिक्षणम्

# Vyakarana

## व्याकरणशिक्षणस्य महत्त्वम्–
## 13.1 The Importance of Teaching of Grammar

**(1) व्याकरणस्य महत्त्वम्**

परस्पर–मानवविचाराणाम् अभिव्यक्तिं शुद्धां, परिष्कृतां, परिमार्जितां च कर्तुं भाषाविशेपस्य व्याकरणम् आवश्यकम्। षट्सु वेदाङ्गेषु प्रधानं व्याकरणं, न केवलं वेदमन्त्रेषु विद्यमानानां अर्थावबोधनं करोति परं तु तेषां रक्षणमपि करोति। संस्कृतभाषाया: व्याकरणस्य च अध्ययनाध्यापनस्य परम्परा अतिप्राचीना वर्तते। व्याकरणशिक्षाया: ज्ञानं विना छात्रा: शुद्धरूपेण भाषाज्ञानं न प्राप्तुं शक्नुवन्ति। व्याकरणेन भाषा व्यवस्थिता क्रियते। भाषा व्यवस्थितकरणाय व्याकरणस्य विश्लेषणम् आवश्यकं भवति। डॉ० स्वीट महोदयेन "व्याकरणं भाषाया: विश्लेषणम्" इति उक्तम्। तदनुसारं व्याकरणेन एव भाषारचनाज्ञानं भवति। व्याकरणशिक्षणाभावे रचनाया: अनुवादस्य च शिक्षा अपूर्णा। शब्दरचनाया: वाक्यरचनायाश्च आधार: व्याकरणमेव अस्ति। उद्यानवनस्य मनुष्यपशुपक्ष्यादिभ्य: कण्टकाकीर्णं तन्त्रीकवचं यथा रक्षकं भवति तथा भाषाया: रक्षकमस्ति व्याकरणम्। भाषाया: साधुत्वासाधुत्वज्ञानम् अनेन ज्ञायते।

**मुखं व्याकरणं स्मृतम्**

वेदपुरूषस्य मुखं भवति व्याकरणम्। किमिति चेत्–मुखं विना भोजन–व्यापार: नास्ति। भोजनं विना शरीरं नास्ति। शरीरं विना प्राणरक्षणं न भवति। ऋग्वेदे व्याकरणस्य प्रशंसा एवमस्ति–

> चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य।
> त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्याँ आविवेश।।

व्याकरणस्य इच्छापूर्तिकारणत्वाद् वृषभेति नाम्ना सम्बोधनमस्ति। अस्य चत्वारि शृङ्गाणि भवन्ति। तानि–

(1) नाम,
(2) आख्यात:(क्रिया)
(3) उपसर्ग:,
(4) निपात:।

त्रय: पादा:—वर्तमान-भूत-भविष्यत्काला: एते त्रय: काला: विद्यन्ते। द्वे शीर्षे-सुप्, तिङ्। अस्य सप्त हस्ता:—प्रथमादय: सप्तविभक्तिय: सन्ति। त्रिधा वद्ध:—व्याकरणरूप वृषभ: उर:, कण्ठ:, शिर:, इति स्थानेषु बद्ध इति। अयं महान् देवो, य: मनुष्येषु प्रविष्टो विद्यते। भगवान् पतञ्जलि: व्याकरणस्य प्रयोजनानि यावत् प्रत्यपादयत्। तेषु

(1) रक्षा,
(2) ऊह:,
(3) आगम:,
(4) लघु:,
(5) असंदेह:,
(6) अपभाषणम्,
(7) दुष्ट:शब्द:,
(8) अविद्वांस:
(9) विभक्तिंकुर्वन्ति,
(10) नामकरणमिति।
(11) यदधीतम्,
(12) यस्तु प्रयुंक्ते,
(13) यो वा इमाम्, चत्वारि इत्यादि महाभाष्योदाहरणानि अपि व्याकरणमध्ययनानां प्रयोजनानि सन्ति।

**छन्द: पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते,**
**ज्योतिषामयनं चक्षुर्निरूक्तं श्रोत्रमुच्यते।**
**शिक्षा घ्राणन्तु वेदस्य, मुखं व्याकरणं स्मृतम्।।**
**तस्मात्सांगमधीत्यैव ब्रह्मलोके महीयते।**

इति पाणिनीयशिक्षाकारस्य वचनेन सिद्ध्यति यत् ''मुखं व्याकरणं स्मृतम्''अत्र तु सूचयति यत् व्याकरणम् अन्य वेदांगैं अतुलनीयं अस्ति। किंच श्वासप्रश्वासस्य गतिशीलने सति समस्त लोकजीवनधारणे समर्था भवन्ति। व्याकरणशास्त्राणां विधिवत् ज्ञानं, वेदांग स्वरूपस्य रक्षां करोति एवं च स्वर्गे लोके च कामधुक् भवति इति वचनमपिचरितार्थं भवति। समुचितज्ञानाभावे तु-

**मन्त्रोहीन: स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह,**
**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रु: स्वरतोपराघात्**

एतेन स्पष्टो भवति यत्-स्वरवर्णापराध-परिहाराय शिक्षाग्रन्थः अपेक्षितो वर्त्तते।

**(क) व्याकरणस्य निर्वचनानि-(निश्चित् वचनानि निर्वचनानि)**

(1) "व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्यय-विभाग-द्वारा निष्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्", वि आङ् इत्युपसर्ग पूर्वक कृञ् धातोः "करणाधिकरणयोश्च" इति सूत्रेण ल्युटि प्रत्ययेन सिद्ध्यति व्याकरणमितीदं पदं भवति।

(2) व्याक्रियन्ते-पृथक्क्रियन्ते साधुशब्दाः, असाधुशब्देभ्यः प्रकृतिप्रत्ययादिज्ञान महिम्नाऽनेनेति व्याकरणम्।

(3) व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः येनेति व्याकरणम्।

(4) व्याक्रियन्ते-परिज्ञायन्ते शब्दाः अनेनेति व्याकरणम्।

(5) शब्दानुशासनं व्याकरणम्।

(6) लक्ष्य लक्षणं व्याकरणम्।

(7) प्रकृतिप्रत्ययविभागपूर्वकशब्दव्युत्पत्याधायकं शास्त्रं व्याकरणम्।

(8) भाषायाः व्यावहारिकविश्लेषणमेव व्याकरणम्।

(9) आङ्ग्लभाषायां Grammar इति पदं Grammatike techne इति ग्रीक्भाषापदात् निष्पन्नम्। अस्यार्थः भवति-the art of letters.

(10) व्याकरणं केवलं संरचनायाः व्याकरणमस्ति।

(11) व्याकरणं नाम शब्दसाधुत्वव्यवस्थापकं शास्त्रम्।

(12) Grammar is a set of rules and regulations which controls and teaches us the correct use of the language.

(13) प्रथमो हि विद्वांसो वैयाकरणाः।

(14) शब्दज्ञानजनकं व्याकरणम्।

(15) अनुशिष्यन्तेऽपशब्देभ्यः पृथक् कृत्य कथ्यन्ते साधुशब्दानुशासनम्।

(16) व्याकरणन्तु वेदानां वेदः।

(17) व्याकरणज्ञाने सर्ववेदपारायणजं पुण्यमिति।

(18) शब्दसाधुत्वबोधकः सूत्रात्मको लक्ष्यलक्षणात्मको वा ग्रन्थविशेषः व्याकरणम्।

(19) एकः शब्दः सम्यक् ज्ञातः शास्त्रतः प्रयुक्तः स्वर्गे लोके च कामधुग्भवति।

(20) प्रयोगशरणं व्याकरणम्। नावैयाकरणाय निर्ब्रूयात्।

(21) शब्दब्रह्मणि निष्णातः पर ब्रह्माधिगच्छति।

**(ख) व्याकरणस्य परम्पराक्रमः-**

ब्रह्मां संस्कृतव्याकरणस्य आदि ज्ञाता अस्तीति मन्यते। ब्रह्मावृहस्पतये प्रोवाच, वृहस्पतिरिन्द्रायेन्द्रो भारद्वाजाय, भारद्वाजः ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः इति ऋक्तन्त्रे 1/4 उद्धृतः। अक्षरसमाम्नाय शिक्षावेदांगस्य मौलिकप्रमुखः अंगः वर्त्तते। एतेन स्पष्टं भवति यत्

शिक्षावेदांगस्य आदि प्रवर्त्तकः सृष्टिकर्ता ब्रह्मा अस्ति। द्वितीय प्रवक्ता अंगिर:पुत्रो बृहस्पतिः देवानां पुरोहितः अस्ति। तृतीयप्रवक्ता देवराजः इन्द्रः, चतुर्थो भारद्वाजः, पंचमः ऋषयः षष्ठ ब्राह्मणः वर्तन्ते। इन्द्रेण व्याकरणं संयतं परिमार्जितं च कर्तुम् पदानां प्रकृति-प्रत्ययादीनां विभाजनं कृतम्। इत्थं अनेके वैयाकरणाः आसन् तेषु प्रमुखा:सन्ति–

| | |
|---|---|
| 1. ब्रह्मा | प्रथमः वैयाकरणः |
| 2. बृहस्पतिः | द्वितीयः वैयाकरणः |
| 3. इन्द्रः | तृतीयः वैयाकरणः(ऐन्द्रव्याकरणम्) |
| 4. भारद्वाजः | चतुर्थः वैयाकरणः(भारद्वाजव्याकरणम्) |
| 5. भागुरिः | भागुरि व्याकरणम् |
| 6. काशकृत्स्न | काशकृत्स्नव्याकरणम् |
| 7. वैयाघ्रपदः (काशिकायाम्) | वैयाघ्रपदव्याकरणम् |
| 8. माध्यन्दिनिः(काशिकायाम्) | माध्यन्दिनि व्याकरणम् |
| 9. शौनकः(चरकसंहितायामुल्लिखितः) | शौनकी व्याकरणम् |
| 10. गौतमः(भाष्यकारेणोल्लिखितः) | गौतम व्याकरणम् |
| 11. व्याडिः:(भाष्यकारेणोल्लिखितः) | व्याडि व्याकरणम् |
| 12. कश्यपः(पाणिनि-अष्टाध्यायौ) | कश्यप व्याकरणम् |
| 13. वशिष्ठः | वशिष्ठ व्याकरणम् |
| 14. अत्रिः | अत्रेः व्याकरणम् |
| 15. गालवः(पाणिनि-अष्टाध्यायौ) | गालवीय व्याकरणम् |
| 16. आपिशलिः | आपिशलिः व्याकरणम् |
| 17. चाक्रवर्मणः(कश्यपस्य पुत्रः) | चाक्रवर्मणस्य व्याकरणम् |
| 18. शाकटायनः | शाकटायन व्याकरणम् |
| 19. शाकल्यः | शाकल्यः व्याकरणम् |
| 20. सेनकः | सेनक व्याकरणम् |
| 21. स्फोटायनः (स्फोटसिद्धान्तस्य प्रवर्तकः) | स्फोटायन व्याकरणम् |
| 22. गार्ग्यः | गार्ग्यस्य व्याकरणम् |
| 23. पाणिनिः | अष्टाध्यायी |
| 24. कात्यायनः(वार्तिककारः) | पाणिनिव्याकरणोपरि वार्तिकरचना |
| 25. पतञ्जलिः | महाभाष्यम् |
| 26. भट्टोजिदीक्षितः | सिद्धान्तकौमुदी, प्रौढ़मनोरमा, इत्यादि |
| 27. आचार्य वरदराजः | लघुसिद्धान्तकौमुदी, मध्यसिद्धान्तकौमुदी, |

| | |
|---|---|
| 28. नागेशभट्ट: | लघुशब्देन्दुशेखर:, परिभाषेन्दुशेखर: |
| 29. कौण्डभट्ट: | वैयाकरणभूषणसार: |
| 30. भर्तृहरि: | वाक्यपदीयम्, |

**व्याकरणशिक्षणस्य पाठ्यक्रम:**

| | |
|---|---|
| 1. वर्णमाला | उच्चारणस्थानम्, शुद्धोच्चारणम्, वर्णानां वर्गीकरणम्, |
| 2. सन्धि: | स्वर-व्यञ्जन-विसर्गादय:। |
| 3. नामशब्दा: | संज्ञा, सर्वनाम, विशेषणादय:, |
| 4. लिङ्गम् | 1. पुल्लिङ्ग, 2. स्त्रीलिङ्ग:, 3. नपुंसकलिङ्गश्च। |
| 5. वचनम् | एकवचनं, द्विवचनम्, वहुवचनञ्च। |
| 6. कारक: | कर्ता कर्म च करणं सम्प्रदानं तथैव च, अपादानाधिकरणमित्याहु कारकाणि षट्। |
| 7. धातुपाठ: | प्रथमं भ्वादिगण:, पश्चात् अन्यगणधातूनां पाठ: क्रमिक- परस्मै-आत्मने-उभयपदी-पञ्चलकार-अन्यलकाराणां ज्ञानम्। |
| 8. समास: | (1) अव्ययीभाव:, (2) तत्पुरुष:, (3) बहुव्रीहि:, (4) द्वन्द्व:। |
| 9. प्रत्यय: | (1) कृदन्त:, (2) तद्धित:, (3) स्त्रीप्रत्यया:। |
| 10. उपसर्ग: | द्वाविंशति उपसर्गा:। य: शब्दांश: शब्दानां धातुनां वा पूर्वं पूर्वं प्रयुक्तं भवति। |
| 11. वाक्यरचना | कर्तृवाच्य, कर्मवाच्य, भाववाच्य, विभक्तिप्रयोगादि कार्यम्। |

**(ग) संस्कृतव्याकरणस्यविशेषता–**

यदा वैदिकसंस्कृतस्य समाप्ति: लौकिकसंस्कृतस्य च प्रादुर्भावोऽभवत्, तदा संस्कृतभाषाया: क्षेत्रे महती अव्यवस्था प्रसरति स्म। तत: विद्वान्स: एकस्य नूतनस्य व्याकरणस्य आवश्यकताम् अनुभवन्ति स्म। एतस्मिन्नेव काले पाणिने: प्रादुर्भाव: अभवत्। पाणिनि: अष्टाध्यायीनामकं ग्रन्थं रचयित्वा व्याकरणाभावं पूरितवान्। अष्टाध्यायी एक: अद्भुत: ग्रन्थ: अस्ति। अस्मिन् ग्रन्थे एतावत् सूक्ष्मं विश्लेषणं कृतवान्, तथा च सूक्ष्मातिसूक्ष्मनियमानां प्रतिपादनं तावज्मौलिकतया कृतवान् यत् भारतवर्षमेव न अपितु विश्वस्य विदुष:पाणिनिप्रतिभायां आश्चर्यो भवति। अष्टाध्यायी व्याकरणस्य मुकुटयमानो ग्रन्थोऽस्ति। अयं ग्रन्थ: न केवलं व्याकरणनियमानां संकल्पमात्रोऽपितु भाषाविज्ञानोपरि व्याकरणोपरि च सर्वोत्कृष्टा मौलिका रचना अस्ति। अस्य ग्रन्थस्य रचना सूत्रप्रणाल्या अभूत्। पाणिनिना एकमपि पदं व्यर्थं न प्रयुक्तम्। अधुनापि विद्वज्जना: सूत्रप्रणालीं समादरन्ति। उक्तञ्च–

**अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणा:**

**त्रिमुनिव्याकरणम्**–पाणिनिमहर्षेः अष्टाध्यायी, कात्यायनस्य वार्तिकं, पतञ्जलिमुनेः भाष्यं च त्रिमुनिव्याकरणमिति प्रसिद्धम्। अतएव–

**मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च।**
**वैयाकरणसिद्धान्तकौमुदीयं विरच्यते।।**

इति भट्टोजीदीक्षितेन वैयाकरणसिद्धान्तकौमुदीप्रारम्भे मङ्गलाचरणं विहितम्।

**व्याकरणशास्त्रस्य विभागः**—अत्र द्वौ भागौ स्तः।–1. पाणिनिमहर्षेः प्राचीनाः। 2. अर्वाचीनाः।

**व्याकरणस्यविभागाः**—1. वैदिकमात्रम् (प्रातिशाख्यादि) 2. लौकिकमात्रम् (कातन्त्रादि) 3. वैदिकलौकिकोभयविधम्(आपिशल, पाणिनीयादि)।

**(क) पञ्चाङ्गव्याकरणम्**–सूत्रपाठः, धातुपाठः, गणपाठः, लिङ्गानुशासनं, शिक्षा च इति पञ्च अङ्गानि पाणिनिना ग्रथितानि इति हेतोः पाणिनीयव्याकरणस्य पञ्चाङ्ग- व्याकरणमिति प्रसिद्धिः।

**(ख) गण-धातवः**–पाणिनिः 'गणान्' रचयित्वा संस्कृत-व्याकरणं रक्षितवान्। अनेकान् शब्दान् एकेन नियम-विशेषानुसारेण एकसमूहे एकत्रितं कृतवान् तेषां संचालनञ्च एकेन नियमेन यथा भवतु, तथाऽकरोत्।

गणपाठं कृत्वा पाणिनिः भौगोलिक-सामाजिक-राजनीतिकादीन् शब्दान् एकस्मिन् सूत्रे अस्थापयत्। गणपाठानां क्षेत्रम् अतिविस्तृतम्। गणानां रचनायाः आधारः ध्वनिरस्ति। धातूनां वर्गीकरणं गणानां रूपे अस्ति। एषाम् आधारोऽपि ध्वनिः। ध्वनिः एवं तस्मात् उद्गरितस्य अर्थस्य पुनः पुनः अवलोकनं कृत्वा पाणिनिः गणान् अरचयत्। पाणिनिना सकला धातवः दशसु गणेषु विभक्ताः।

1. भ्वादिगणः, 2. अदादिगणः,
3. जुहोत्यादिगणः, 4. दिवादिगणः,
5. स्वादिगणः, 6. तुदादिगणः,
7. रुधादिगणः, 8. तनादिगणः,
9. कृत्यादिगणः, 10. चुरादिगणश्च।

'अष्टाध्याय्याः' अनुसारं संस्कृते 1944 धातवः सन्ति, ये एषु दशसु गणेषु विभक्ताः सन्ति। स्वकीयस्य कृते आत्मनेपदीधातवः परेषां कृते च परस्मैपदी धातवः, उभयो कृते उभयपदी धातवः प्रयुक्ताः। संस्कृते 170 धातवः भ्वादयः सन्ति। भ्वादिधातुनां ज्ञानेन एव छात्राः संस्कृतवाक्यानि सरलतया लिखितुं शक्नुवन्ति।

**(ग) प्रकार्याणि**–1. शब्दरचना, 2. भाषारचना, 3. भाषाविश्लेपणम्, 4. नियमनिर्धारणम्, 5. साधुशब्दनिरूपणम्, 6. शुद्धप्रयोगः।

**( घ ) ध्वनिविचारः**—संस्कृतसाहित्ये ध्वनिविचारो महान् विस्तृतः परिलक्ष्यते। व्याकरण-शास्त्रे ध्वनेरुत्पत्तिः सम्प्रतिपादिता वर्तते। नित्या वाक्(शब्दो वा) परा, पश्यन्ती, मध्यमा, वैखरी इति चतुर्विधध्वन्यात्मिका भवति। सिद्धान्तशैवानां मतम्–

**परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।**
**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।।** इति

**(1) परा**- तन्त्रशास्त्रञ्चाश्रित्य मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्द ब्रह्मरूपा स्पन्दशून्या विन्दुरूपिणी परा वागुच्यते।

**(2) पश्यन्ती**-नाभि पर्यन्तमागच्छता तेन वायुनाभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते।

**(3) मध्यमा**- ततो हृदयपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोगत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते। अत्र अर्थविभागो जायते।

**(4) वैखरी**- तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्धानमाहत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या व्यवहारोपयुक्ता च वैखरी वागुच्यते। स च शब्दः ध्वनिः, वर्णश्चेति द्विविधः। ध्वनिः मृदङ्गादिजन्यः, वर्णः कण्ठादि- संयोगात् जायते। वर्णरूपा वैखरी वाक् पदवाक्यरूपेण कथ्यते.।

**( घ ) वर्णविचार–**

ध्वनीनां विश्लेषणं वर्गीकरणं चात्र भवति। वर्ण्यते अभिव्यंज्यते वा लधूत्तमोध्वनिः येन सः वर्णः। न क्षरः अक्षरः यस्मात् तदक्षरम्। भाषा कापि वा भवतु परं तस्या भाषायाः कृते एका वर्णमाला आवश्यकी, वर्णमालाः तु बह्व्यः सन्ति, परं सर्वासां वर्णमालानामपेक्षया संस्कृत-भाषायाः कृते याः वर्णमालाऽस्ति सा उत्कृष्टतरास्ति। अत्र वर्णमालायाः यः क्रमः अस्ति सः नितान्तं वैज्ञानिकः अस्ति। संस्कृतवर्णमालायाः वैज्ञानिकं रूपं प्राचीनभारतीयानां वैशिष्ट्यमस्ति। आशुतोषः भगवान शिवः वेदवांग्मयेभ्यः स्व सम्बन्धनीं विद्यां देवीं वाचं दाक्षीपुत्राय भगवते पाणिनये ददौ, नन्द-नृपति-समये पाटलिपुत्रे वर्ष-नामक गुरूना विद्याध्ययनस्य कामनया पाणिनिः समुपस्थितो बभूव। विद्याकामः पाणिनिः सनकादिसिद्धैः सह भगवतः शंकरस्याराधनां कृतवान्, याभिः आराधनाभिः लोककल्याणकारी शिवः चतुर्दश सूत्रात्मकं वर्णसमाम्नायम् अपौरूषेय रूपम् पाणिनये प्रदत्तवान्। नन्दिकेश्वरकृत काशिकायाः द्वौ श्लोकौ अस्याः वार्तायाः सम्पादकौ स्तः। यथा–

**नृत्तावसानेनटराजराजोननादढक्कांनवपंचवारम्,**
**उद्धर्तुकामःसनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्।**

"अत्र सर्वत्र सूत्रेषु अन्त्यं वर्ण चतुर्दशम्, धात्वर्थं समुपादिष्टं पाणिन्यादीष्ट सिद्धये।"
अथ वर्णसमाम्नायः—

1. अइउण्
2. ऋलृक्
3. एओङ्
4. ऐऔच्
5. हयवरट्
6. लण्
7. ञमङ्णनम्
8. झभञ्
9. घढधष्
10. जबगडदश्
11 खफछठथचटतव्
12. कपय्
13. शषसर्
14. हल् इति

माहेश्वराणि सूत्राणि। सः अयम् अक्षर-समाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चक्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः सर्ववेदपुण्यफल प्राप्तिश्चास्य ज्ञाने भवति मातापितरौ चास्य स्वर्गे लोके महीयेते। आदौ तावत् वर्णानां संख्या, प्रकाराः, अच्, हल्, इत्यादीनां वर्गीकरणस्य ज्ञानमावश्यकं वर्त्तते। माहेश्वर मतानुसारं संस्कृत-वर्णमालायां विद्यमानानामक्षराणां संख्या एवमस्ति। कति वर्णाः सन्तीति प्रश्नं समाधातुमाह पाणिनीय शिक्षायाम्-

**त्रिषष्टिश्चतुष्षष्टिर्वा वर्णा शम्भुमतेमताः,**
**प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा।**

प्रकृत्यनुकूले मातृभाषा-स्वरूपे, देववाण्यां च शम्भुमतानुसारेण त्रिषष्टिश्चतुः षष्टिर्वा वर्णानां संख्याः प्रतिपादिताः। ह्रस्व, दीर्घ, प्लुत, भेदैः स्वराणामेकविंशतिः संख्यामन्यन्ते। ककारात् मकार पर्यन्तं स्पर्श संज्ञक-वर्णानां संख्या पंचविंशतिः मन्यन्ते। य व र लाः अन्तस्थाः। शषसहाद्यूष्म संज्ञकाश्चाष्टौसंख्याकाः। लोके कुं खुं गुं धुं यमाः, अनुस्वारः, विसर्गः जिह्वामूलीयः, उपध्मानीयः, दुःपृष्ट वर्णः, प्लुतलृकार इति=21+25+8+ 4+4+1=63 एवं+दीर्घ लृ=64 वर्णाः संस्कृत वर्णमालायां सन्ति। अर्थात् व्यवहार रूपे तु **स्वरा** ''स्वयंराजन्ते इतिस्वराः''अ आ इ ई उ ऊ ए ऐ ओ औ ऋ ॠ लृ इति त्रयोदश वर्णाः सन्ति। **व्यंजनानि**- कवर्ग, चवर्ग टवर्ग तवर्ग पवर्ग रूपाणि येषां वर्णानामुच्चारणार्थं जिह्वा मुखस्य केवलं एकं भागं स्पृशति एवं च वायुः क्षणं विरम्य झटिति वहिर्भवति ते वर्णाः स्पर्शाः। स्पर्शानां संख्याः पंचविशतिः सन्ति। भाष्यकारः व्यंजनस्य तुलना नट् भार्यावत् कृतं स्यात्। तद् यथा नटान्तं स्त्रियो रंगगताः पृच्छति कस्य यूयमिति तं तं तवेत्याहुः। एवं व्यंजनान्यपि यस्य यस्याः चः कार्यमुच्यते तं तं भजन्ते। ''परेण स्वरेण व्यंज्यते इति व्यंजनम्'। यस्योच्चारणं विना स्वरेण न भवति तद् व्यंजनम्। अर्थात् ह य ब र ल ञ म ङ् ण न झ भ घ ढ ध ज व ग ड द ख फ छ ठ थ च ट त क प श ष स इति त्रयत्रिशत् वर्णाः व्यंजनानि सन्ति। उच्चारण-वैविध्यात् व्यंजनानां त्रयो हि भागाः सन्ति। 1. स्पर्श 2. अन्तःस्थ 3. ऊष्मः अयोगवाहाः, अनुस्वारः, विसर्गः, यमाः,

**(च) शब्दविचारः**—अत्र पदानां विश्लेषणं, विभक्तिप्रत्ययानामध्ययनं, सन्धि-समासादीनाम् अनुशीलनं, लिङ्गज्ञानं च क्रियते।

**(छ) वाक्यविचार:**—अस्मिन् विभागे वाक्येषु विद्यमानानां शब्दानां विचार:, तेषां क्रम: कारकाणां प्रयोग:, वाक्यानां रचना करणीया, विरामचिह्नानाम् अध्ययनं च विधीयते।

**(ज) अर्थविचार:**—संस्कृतशब्दानाम् अर्थ: प्रत्ययोपसर्गादियोजनेन परिवर्तनं प्राप्नोति। वाक्यपदीये संयोगविप्रयोगसाहचर्यादिविशेषस्मृतिकारणै: शब्दानाम् अर्थप्रतीति: जायते इत्युक्तम्। वेदे स्वरभेदेऽपि अर्थभेद: भवतीति वचनं तु अरुणो मासकृत्, यथेन्द्रशत्रु: इत्यादि उदाहरणस्थलेषु स्पष्टमेव।

**(झ) लिङ्गविचार:**—संस्कृते संज्ञाशब्दानां लिंग-निर्धारणं प्रत्ययस्याधारे भवति। संस्कृते लिङ्गं त्रिविधं भवति- 1. पुल्लिङ्ग:, 2. स्त्रीलिङग:, 3. नपुंसकलिङ्गश्च। संस्कृते अभ्यासेन एव अस्य ज्ञानं भवति।

**(ङ) व्याकरणस्य प्रयोजनानि**–( व्याकरणस्य स्वरूपं, महत्वम्, फलं उपयोगश्च)

1. **यो वेद वेदवदनं सदनं हि सम्यग् ब्राह्मया: स वेदमपिवेदकिमन्यशास्त्रम्।**
   **यस्मादत: प्रथममेतदधीत्य विद्वान् शास्त्रान्तरस्य भवति श्रवणेऽधिकारी।।**

वस्तुत: व्याकरणज्ञानाभावे वेद-वेदान्त, स्मृतिपुराणेतिहास, काव्यादि शास्त्रान्तरेषु प्रवेशाधिकारिण: न भवन्ति, इति भास्कराचार्येण भणितम्।

**2. रक्षोहागमलध्वसंदेहाप्रयोजनम्-रक्षा इति**–व्याकरणाध्ययनावगतवर्णलोपागमवर्ण विकारो गृहीत प्रकृतिप्रत्ययविभागो वेदान् पालयिष्यतीत्येतदर्थमध्येयं व्याकरणम्। **ऊह इति**-प्रकृतिवद्विकृति: कर्त्तव्येति मीमांसकसिद्धान्तात् प्रकृतियागे पठितस्य अग्नये त्वा जुष्टं निर्वपामीति मन्त्रस्थाग्निपदस्य सौर्यं चरूं निर्वपेत् ब्रह्मवर्चसकाम इति सौर्येचरौ विकृतियागेसूर्य-सम्बन्धिनिर्वापप्रकाशनाऽसमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूहार्थमध्येयं व्याकरणम्। **आगम इति**-ब्राह्मणेन निष्कारण इत्यादिश्रुत्वा व्याकरणस्य पदपदार्थावगम द्वारा वाक्यार्थावगमोप-योगित्वात्तदनध्ययनप्रयुक्तस्य वेदार्थाऽज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारार्थमध्येयं व्याकरणम्। **लघ्विति**-शब्दानामानन्त्यात् प्रक्रियारूपलघुभूतोपायज्ञानार्थमध्येयं व्याकरणम्। **असन्देह इति**-स्थूलपृपतीमाग्निवारूणीमनड्वाहीमालभेतेत्यत्र कर्मधारयो बहुव्रीहिर्वेति सन्देहप्रागभावपरिपाल-नार्थमध्येयं व्याकरणम्। **आनुषङ्गिकानि प्रयोजनानि**-तेऽसुरा हेलयो हेलय इति कुर्वन्त: पराबभूवुस्तस्माद् ब्राह्मणेन म्लेच्छितवै, नापभाषितवै, म्लेच्छोहवा एष्यदपशब्द:। म्लेच्छा माभूमेत्यध्येयं व्याकरणम्। अत्र पदद्विवचने कर्त्तव्ये वाक्यद्विर्वचनं लत्वञ्च कृतमसुरै:। एवञ्च शास्त्रबोधितविपरीतोच्चारणेन निन्द्या माभूमेत्यध्येयं व्याकरणम्। एवं च–

1. दुष्ट:शब्द:,
2. यदधीतम्,
3. यस्तु प्रयुंक्ते,
4. अविद्वांस:
5. विभक्तिं कुर्वन्ति,

6. यो वा इमाम्, चत्वारि इत्यादि महाभाष्योद्दाहरणानि अपि व्याकरणमध्ययनानां प्रयोजनानि सन्ति।

3. "पाणिनीये महाभाष्ये पदसाधुत्व लक्षणं सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन:" इति परासर पुराणे कथित:।

4. यद्यपि बहुनाधीषे तथापि पठपुत्र व्याकरणम्, स्वजन: (सम्बन्धि) श्वजनो (कुत्ता) माभूत् सकल: (सम्पूर्ण:) शकल: (खण्ड:) सकृत् (एकवार) शकृत् (विष्ठा)।

5. 'व्याकरणज्ञाने सर्ववेद परायणजं पुण्यमिति" अत: व्याकरणं वेदानां वेद: इति नागेशेनोक्तम्।

6. वाक्यपदीकारभर्तृहरि: ब्रह्मकाण्डे व्याकरणाध्ययनं उत्तमतप: मन्यते- "आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तप:, प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधा:"।। व्याकरणं स्मृति एवंच पर ब्रह्म प्राप्तस्य साधनं स्वीक्रियते वाक्यपदीकार:—"यदैकं प्रक्रियाभेदैर्वुधा प्रविभजन्ते, तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते"।

7. सम्यग् शब्द प्रयोगे लाभ:—

**व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत्**
**भीतापतनभेदाभ्यांतद्वद्वर्णान्प्रयोजयेत्।।**

एवं वर्णा प्रयोक्तव्या ना व्यक्ता न च पीडिता: सम्यग् वर्ण प्रयोगेन ब्रह्मलोके महीयते।

## (2) व्याकरणस्य भाषावैज्ञानिक-महत्त्वमेवं च शाश्वतं प्रयोगात्मकञ्च-व्याकरणम्।

### 1. Linguistic importance of Vyakaran. Universal and Practical Grammar.

**(क) व्याकरणस्य भाषावैज्ञानिक-महत्त्वम्-**

संस्कृतभाषाया: भाषाविज्ञानिक-वर्गीकरणं-संस्कृतभाषाया: वैज्ञानिकमध्ययनमेव भाषाविज्ञानमित्यभिधीयते। इदानीं भाषाविज्ञानस्य पञ्चैव प्रकारास्समुपलब्धा:सन्ति। प्रकारा:संक्षेपेण अत्र प्रस्तूयन्ते।

**(1) ऐतिहासिकं भाषाविज्ञानम्**—अस्मिन् भाषाविज्ञाने भाषाया: विकासस्य-अध्ययनं क्रियते। ऐतिहासिक भाषावैज्ञानिका: इदमपि प्रतिपादयन्ति यत् संस्कृत-पालि-प्राकृतानां भाषाणाम् एकमेव मूलमास्ते।

**(2) प्रायोगिकं भाषाविज्ञानम्**—अन्यस्या: भाषाया:शिक्षा केन प्रकारेण प्रदेया? अनुवाद:केन प्रकारेण करणीय:? उच्चारणस्य दोषा केन प्रकारेण अपाकरणीया:? इत्यादीनां प्रभृतीनां विषयाणां विचार: अत्र क्रियते।

**(3) संरचनात्मकं भाषाविज्ञानम्**—भाषायां प्रयुक्तानां सर्वेषां तत्त्वानां पारस्परिके विशिष्टे सन्दर्भेऽध्ययनं क्रियते।

**(4) वर्णानात्मकं भाषाविज्ञानम्**–विश्लेषणात्मकमध्ययनं वर्णनात्मकं च करोति भाषाविज्ञानम्। एतादृशीनामपि भाषाणामध्ययनं वर्णनात्मकेन भाषाविज्ञानेन क्रियते। एतादृशी व्याहारमात्राश्रिता संस्कृतभाषा अतीतकालविशेषे कीदृश्यासीत्?तस्यां कति ध्वनयः आसन्? पदानां रचना कीदृश्यासीत्?वाक्यानि कीदृशान्यासन्?इत्यादीकानां विषयाणामध्ययनं वर्णनात्मकं भाषाविज्ञानं करोति।

**(5) तुलनात्मकं भाषाविज्ञानम्**–एकाधिकानां भाषाणां तुलनात्मकमध्ययनं विभिन्नान् कालानाश्रित्य क्रियते।

**भाषाविज्ञानस्याङ्गानि-**

अस्मिन् अध्ययने ध्वनीनामुच्चारणस्य, अक्षराणां शब्दानां पदानां वाक्यानां च संरचनायाः विवेचनं क्रियते।

**(1) ध्वनिविज्ञान**–सम्पूर्णा भाषा ध्वन्याश्रिता भवति। यथा-(क) स्वरयन्त्रम्, (ख) मुखम्, (ग) जिह्वा, (घ) ताल्वादिकं च। तदनन्तरं ध्वनीनामुच्चाणस्थानस्य उच्चारणप्रयत्नस्य दृष्ट्यापि वर्गीकरणं क्रियते।

**(2) पदविज्ञानम्**–पदपदार्थ-निरुपयता महर्षिणा पाणिनिनाऽभिहितम्- 'सुप्ति-ङन्तंपदम्'। अस्मिन् पद विज्ञाने नानाविधानां पदानामध्ययनं क्रियते। यथा–संज्ञा, सर्वनाम, क्रिया, क्रियाविशेषणादिकानाम्, धातुरूपाणां, शब्दरूपाणां च। पदानि एव भाषायाः मूलभूतानि सन्ति।

**(ख) आधुनिकशिक्षाशास्त्रिणां मते प्रायोगिकव्याकरणम्-**

[Functional Grammar] संस्कृतव्याकरणं नाम पाणिनीयं व्याकरणमेव। पाणिनीये व्याकरणे-3999 सूत्राणि सन्ति। एतेषु सूत्रेषु संज्ञा परिभाषा, अधिकार, विधायक- सूत्राणि एवमेकं क्रममाश्रित्य व्याकरणमध्यापनीयम्। उदाहरण द्वारा व्याकरणसूत्रेषु विद्यमानाः नियमाः ज्ञापनीया व्याकरणशिक्षणे। एवमुदाहरणमाश्रित्य यत्र व्याकरणमध्याप्यते तत् प्रायोगिकं व्याकरणम्। अर्थात् उदाहरणात् सिद्धान्तं प्रति गच्छति प्रायोगिक व्याकरणम्।

**व्याकरणाध्यापनेऽभिप्राय भेदाः**—व्याकरणं कस्मात् स्तरादारभ्याध्यापनीयम् इति प्रश्नः समुत्पन्नश्चेत् तदा माध्यमिक-स्तरादारभ्य अध्यापनीयम् इति समाधानं मिलति। यतो हि प्राथमिकस्तरे छात्राः केवलं भाषा अध्ययनार्थं तत्पराः भवेयुः। आरम्भिकप्राथमिकस्तरे व्याकरणं नाध्यापनीयम्। माध्यमिकस्तरादारभ्य व्याकरणमध्यापनीयम्। तत्रापि प्रायोगिक व्याकरणमध्यापनीयम्।

**(ग) व्याकरणाध्यापनविषये प्रधानतया चत्वारः वादाःसन्ति।**

**यथा–**

**1. व्याकरणं नैवाध्यापनीयम्**–पाठशालास्तरे (प्राथमिकस्तरे) व्याकरणं नैवाध्यापनीयम्।

वस्तुतः व्याकरणम् इत्यंशः महान् जटिलः अस्ति। व्याकरणे परिभाषाः सूत्राणि, अव्ययानि, शब्दाः, धातवः, समासादयश्च भवन्ति। एते सर्वे सुलभतयाध्येतुं अवकाशो नास्ति। एते सर्वे अवश्यं कण्ठस्थीकरणीया एव। सर्वमेतत् दृष्ट्वा श्रुत्वा च छात्राः भीता भवेयुः। फलतः व्याकरणस्य नाम श्रवणेन छात्राः पलायिता भवेयुः। भाषानुकरणे नैवागच्छति कक्षायाम्। अध्यापकानामनुकरणेनैव छात्राः अपि स्पष्टोच्चारण-कौशलेषु निपुणाः भवेयुः। प्रायः भाषायां ये केऽपि दोषाः भवन्ति चेत् अधिकाभ्यास कार्येण तान् दोषान् दूरीकर्तुं शक्यते। एते वदन्ति यत् छात्राणां दैनन्दिनजीवने अनुपयुक्तकरम् अनासक्तिकरम् इदम् व्याकरणम् नैवाध्यापयन्तु इति।

**2. व्याकरणं ऐच्छिकतया अध्यापनीयम्**–संस्कृत-भाषायामादितःअन्त पर्यन्तं व्याकरणस्य प्रभावः अस्त्येव। साध्वसाधुज्ञानाय व्याकरणज्ञानमावश्यकम्। सर्वेषां कृते व्याकरणज्ञानमा वश्यकम्। येषां व्याकरणज्ञानमावश्यकम् भवति ते ऐच्छिकतया अध्ययनं कुर्वन्तु इति नोचितम्।

**3. व्याकरणमनिवार्यतया-अध्यापनीयम्**–एषः वादः तृतीयः एतन्मतानुयायिनः प्रथमद्वितीयवादञ्च न समर्थयन्ति। व्याकरणं भाषायाः प्रधानं अङ्गम् अस्ति। साध्वसाधु रूपाणि व्याकरणं निवेदयति। व्याकरणज्ञानं विना केवलं रचनाभ्यासः प्रदीयते चेत् छात्राः भाषायां कुशलाः नैव भवेयुः। अतः व्याकरणम् अनिवार्यम् इत्येतन्मतानुयायिनां वादः।

**4. प्रायोगिकं व्याकरणमध्यापनीयम्**–व्याकरणम् अनिवार्यतया अध्यापनीयम् इति वादे किंचित्सत्यमस्ति। किन्तु व्याकरणेनैव सर्वे भाषायां निपुणाः भवन्तीति वादः न समीचीनः। व्याकरण-ज्ञानेन यदि रचनाज्ञानं भवति तर्हि वैयाकरणास्सर्वे महान्तः रचयितारः स्युः। **व्याकरणज्ञानयुक्तः क्षणे-क्षणे संशयग्रस्तः भवति।** अतः सिद्ध्यति यत् सम्यक् रचना ज्ञानाय व्याकरणं न अति- आवश्यकम्। माध्यमिकस्तरे प्रायोगिक व्याकरणाध्यापनाय आगमन पद्धतिः आश्रयणीया। पाठ्यपुस्तकेषु गद्यपद्य भागेषु विद्यमानां पदजालं सन्धयः, समासाः वाक्यरीतयः छात्रैः परिशीलनं कारयित्वा तेषु समानधर्म-सहित-पदसमूहं विभाजनीयम्। प्रत्येकवर्गे विद्यमानानि उदाहरणानि विश्लेषणीयानि। आगमन-पद्धत्या व्याकरणगतमार्मिकांशान् ज्ञापयित्वा निगमन पद्धत्या अध्यापनीयानि।''आगमनात् निगमनं प्रति'' इति शिक्षा सूत्रम् अवलम्बनीयम्।

## (3) उच्चारणकौशलस्य महत्त्वम्।

## 2. The Importance and Objectives of Pronunciation Drill.

संस्कृतभाषाशिक्षणे पठन-पाठनयोः उच्चारणस्य महत्त्वमत्यधिकं विद्यते। मुखावयवानां माध्यमेन यः ध्वनिः स्पष्टरूपेण ध्वनितः भवति, तत् उच्चारणं कथ्यते। पठन-पाठनयो उच्चारणदोषादेव वाचने लेखने च दोषाः भवन्ति। मौखिकाऽभिव्यक्तिर्भाषा शिक्षणस्य आधारशिला वर्तते। अभिव्यक्तिः सामान्यतः द्विविधा भवति–

1. मौखिकाऽभिव्यक्तिः,

2. लिखिताऽभिव्यक्तिश्चेति। संस्कृतज्ञानां दृष्टिकोणे शुद्धोच्चारणस्य महिमाखल्वेवं प्रतिपद्यते-

**यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो माऽभूत् सकलं शकलं सकृच्छकृत्।।**

सकारस्य शकारत्वेनोच्चारणे यंऽनर्थः सम्भवति सोऽत्र प्रदर्शितः। अशुद्धोच्चारणम् अल्पज्ञतायाः, अयोग्यतायाः, असभ्यतायाश्च परिचायकं भवति। अतः बाल्यावस्थायामेव शुद्धोच्चारणस्य प्रशिक्षणम् आवश्यकं भवति।

पाणिनीयशिक्षा इत्यस्मिन् ग्रन्थे शुद्धोच्चारणस्य महत्तां निम्नश्लोक माध्यमेन प्रस्तुतम्-

**मन्त्रहीनः स्वरतो वर्णतो वा, मिथ्या प्रयुक्तो न तदर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रु स्वरतोऽपराधात्।।**

यदि स्वरं वर्णं वा विकृतं कृत्वा कस्यापि मन्त्रस्य अशुद्धोच्चारणं क्रियते तदा सा अशुद्धा वाणी कार्यसिद्धि-अर्थ कृतं यज्ञं, स्वयं यजमानं तथैव नश्यति यथैव स्वरं विकृतकरणे इन्द्रस्य शत्रुः वृत्रासुरः मारितम्।

**(क) मौखिकाऽभिव्यक्तये निम्नलिखिता विन्दवोऽपेक्षिता भवन्ति-**

(क) शब्दोच्चारणम्, (ख) अक्षराभिव्यक्तिः, (ग) गतिः, (घ) बलाधातः, (ङ) विरामः, (च) उचितवाचनमुद्रा, (छ) सुस्वरता, (ज) उचितध्वनिनिर्गमः इति।

**(ख) अभिव्यक्तिसमये वाचनाऽन्तर्गताः प्रायशश्चतुर्दशदोषाः सम्भाव्यन्ते, ये निम्नाङ्किताः सन्ति-**

1. पठनकाले शङ्कितत्वम्,
2. भयभीतत्वम्,
3. धृष्टपठनम्,
4. क्रन्दितपठनम्,
5. अस्पष्टपठनम्,
6. सानुनास्यपठनम्,
7. श्रुतिकटुपठनम्,
8. मूर्धन्यपठनम्,
9. स्वरराहित्यम्,
10. नीरसपठनम्,
11. बलाघातवैषम्यम्,
12. व्याकुलता,
13. व्यामिश्रम् अस्पष्टपठनम्,
14. अतालव्यमिव पठनम्,

महर्षिणापाणिनिनोक्तं यच्छुद्धतापूर्वकं वर्णानाम् उच्चारणेनेहलोके सम्मानस्तु पुरोभवत्येव ब्रह्मलोकेऽपि तावत् प्रतिष्ठा प्रतिपद्यते-

**एवं वर्णाःप्रयोक्तव्या नाऽव्यक्ता न च पीडिताः।**
**सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते।। 31।।**
**सुतीर्थादागतं व्यक्तं स्वाध्यायं सुव्यवस्थितम्।**
**सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते।। 51।।**

**(ग) अशुद्धोच्चारणस्य कारणानि:**

**1. अज्ञानम्**–स्थानप्रयत्नानुसारं वर्णानां उच्चारणस्य उचितं स्वरूपं बालका: न जानन्ति। छात्रा: श, स, ष इत्येतेषां वर्णानाम् उच्चारणभेदं न जानन्ति। एवमेव ब-व, ऋ-र, ई-इ, ण-न इत्येषां वर्णानामुच्चारणे दोषं कुर्वन्ति। अनेके छात्रा: अज्ञानतावशादपि अशुद्धम् उच्चारयन्ति।

**2. प्रयत्नलाघवम्**–उच्चारणे परिश्रममसहमाना: बालका: अशुद्धोच्चारणं कुर्वन्ति। यथा-ब्राह्मण:—बरामन:, रवीन्द्र:—रविन्दर:, रघुवंश:—रगुवंस:, प्रसाद:—परसाद: इत्यादय:।

**3. भ्रम:**—केषाञ्चित् भ्रमात्, प्रमादाद्वा वर्णानामुच्चारणमन्यथा कुर्वन्ति। यथा-काक:—काग:, प्रेमचन्द्र:—प्रेमचन्द:, ज्ञानम्-ग्यानम्, वसन्त:—बसन्त: इत्यादय:।

**4. प्रादेशिकभाषाप्रभाव:**—भारतस्य विभिन्नेषु प्रदेशेषु जनानां विभिन्ना: उच्चारणप्रकारा: संस्कृतस्योच्चारणं दूषयन्ति। यथा-कृष्ण:—क्रुष्ण:, धनम्-दनम्, उत्सव:—उल्सव:, सिंह-सिंघ, पुरुष-पुरुख, परमात्मा-प्रमात्मा, मेघ-मेग, शिक्षा-शिक्खा:, शक्यते-शक्कते, इत्यादय:।

**5. भावाऽतिरेक:**—कदाचिद् भावावेशे प्रेमक्रोधशोकादीनाम् अतिरेकादपि छात्रा अशुद्धम् उच्चारयन्ति। यथा-गच्छतु स्थाने गछतु, आनयन्तु स्थाने आनतु'।

**6. अनवधानम्**–उच्चारणसम्बद्धा अनेका अशुद्धयस्तावद् अनवधानात् प्रमादाद्वा प्रभवन्ति। प्रयशोऽनवधानमुच्यमाना: कठिनशब्दा: स्खलितोच्चारिता भवन्ति। यथा-किङ्कर्त्तव्यविमूढ इति वक्तव्ये किंकर्त्तव्यविमूढ:, स्थाने इति इस्थाने, स्नान इति अस्नान इत्याद्युच्चारणम्।

**7. अध्यापकद्वाराऽशुद्धोच्चारणम्**–अध्यापका: एवं बालकाणामादर्शरूपा भवन्ति, छात्रश्चाऽनुकरणात्मकप्रवृत्तिवशादधिमतरम् अनुकरणं स्वशिक्षकाणामेव कुर्वन्ति। अध्यापकस्यैव उच्चारणं यदि अशुद्धं भवति तर्हि आदर्शाऽनुकाराश्छात्रा अपि अशुद्धमुच्चारयितुं प्रवर्त्तन्ते। यथा-सुयश: स्थाने शुयस:, स्वागतम् स्थाने श्वागतम्।

**8. मनोवैज्ञानिककारणम्**–बालकेषु भय-सङ्कोच-भावनाग्रन्थि-प्रभृतिभि:मनोवेज्ञानिक कारणैरपि उच्चारणसम्बन्धिन्योऽशुद्धय: समापतन्ति अर्थात् कैश्चिन्मनोवैज्ञानिककारणै: भाषण-प्रवाहेऽव्यवस्था उत्पद्यते। यया उच्चारणमशुद्धतामधिगच्छति।

**9. अन्यकारणानि**–महर्षिपाणिना अपि अशुद्धोच्चारणस्य नैकानि कारणानि परिगणितानि सन्ति तद् यथा–

> **उपांशुदष्टं त्वरितं निरस्तम्, बिलम्बितं गद्गदितं प्रगीतम्।**
> **निष्पीडितं ग्रस्तपदाक्षरं च, वदेन्न दीनं न तु सानुनास्यम्।। 35।।**

संस्कृतभाषायामक्षरध्वनयो: हि विनिश्चिता: सन्ति। तदुच्चारणस्थानायपि च सुनिश्चितानि वर्तते। अशुद्धिध्वन्युच्चारणात् शब्दोच्चारणमपि अशुद्धिं प्राप्नोति। कर्हिचिद् उदात्तानुदात्तस्वरितानां ह्स्वदीर्घादीनाञ्चोच्चारणे भ्रमवशात्तथाविधाऽशुद्धयो जायते।

**( घ ) उच्चारणशिक्षायाः उद्देश्यानि–**

1. परिष्कृत-परिनिष्ठितसंस्कृतेन हेतु शब्दोच्चारणस्य शिक्षाप्रदानकरणम् उच्चारणशिक्षायाः उद्देश्यं वर्तते।
2. संस्कृतं संश्लिष्टभाषा वर्तते। अत्र संस्कृते सन्धिनिष्ठानि समासनिष्ठानि च पदानि बहुमात्राषु मिलन्ति। अतः शुद्धोच्चारणमाध्यमेन एतान् शब्दान् अवबोधे सरलता जायते।
3. शुद्धोच्चारणस्य शिक्षया छात्रान् पदार्थावबोधने सौविध्यं मिलति।
4. शुद्धोच्चारणेन वर्णोच्चारणस्य भाषापरिमार्जनस्य मार्गप्रशस्तं भवति।
5. संस्कृतम् अनेकानां भारतीय-आर्यभाषानां जननी वर्तते। अतः संस्कृतं शुद्धोच्चारणे अन्यानां भाषानां शब्दानाम् अवबोधने सौविध्यं प्राप्नोति।

**( ङ ) उच्चारणशोधनस्य उपायाः–**

1. क्रियापदस्य शुद्धि-अर्थं कार्यं कृत्वा प्रदर्शनम्।
2. प्रत्यक्षवस्तुं दर्शयित्वा शुद्धोच्चारणं कारणीयम्।
3. विशेषणपदानां शुद्धि-अर्थं तत्सदृशैः अन्यैः वर्णैः सह तेषां शब्दानाम् उच्चारणं कारयेत्।
4. अध्यापकेन पुनः पुनः अभ्यासेन शुद्धोच्चारणं कारयेत्।
5. अभ्यासकार्यं दत्वा संशोधनकरणम्।
6. दृश्यश्रव्यसामग्रीमाध्यमेन शुद्धध्वनीनां बालकानां समक्षे प्रस्तुतिकरणम्।
7. शुद्धोच्चारणार्थं प्रतियोगितायाः आयोजनं करणम्।

**( च ) उच्चारणशिक्षणविधयः**

स्वराणां, व्यञ्जनानाम्, अनुनासिकवर्णानां, संयुक्ताक्षराणाञ्च उच्चारणे सम्भवतां दोषाणां निवारणाय संस्कृताध्यापकः अवश्यं प्रयतेत। छात्राणां श्रवणेन्द्रियस्य, जिह्वायाःस्वरयन्त्रस्य वा दोषश्चेत् विशेषरूपेण निवारयेत्। शिक्षकस्योच्चारणं शुद्धं, स्पष्टम्, अनुकरणयोग्यञ्च भवेत्। दृश्यश्रव्यादि नवीन-यन्त्राणामुपयोगः दोषपरिहारे सहायकः स्यात्। केचन विधयः प्रस्तूयन्ते। यथा–

**1. अनुकरणविधिः**— संस्कृताध्यापकः वर्णानां, शब्दानाञ्च शुद्धोच्चारणं बोधयेत्। बालकाः शिक्षकस्योच्चारणम् अनुकृत्य शुद्धोच्चारणं शिक्षन्ते।

**2. आवृत्तिविधिः**—क्लिष्यनां वर्णानां शब्दनाञ्च पुनः पुनरावर्तनेन उच्चारणाभ्यासः कर्त्तव्यः।

**3. अवरोधविधिः**—शीघ्रतामवरुध्य मन्दगत्या शुद्धोच्चारणं सम्पादनीयम्। शीघ्रभाषणे वाचने च अशुद्धम् उच्चरन्ति।

**4. पूर्णताविधिः**—सम्पूर्णवाक्यस्य स्पष्टमुच्चारणं ज्ञापनीयम्।

अध्यापके छात्रान् मात्रा-गति-विरामः—बलं-स्वराघातः, इत्यादीनामुच्चारणतत्वानां परिचयं

दद्यात्। सन्धिविच्छेदेन, समस्तपदे पृथक्पदानां परिचयेन च उच्चारणं स्पष्टीकर्तव्यम्। दीर्घवाक्येषु अर्थानुसारं विरामेन शुद्धोच्चारणं सम्पादनीयम्। संस्कृताध्यापकः छात्राणां लज्जां, भयञ्च निवार्य स्नेहेन, सहानुभूत्या च उच्चारणं शिक्षयेत्।

## (4) व्याकरणस्य शास्त्रीयमहत्त्वमुद्देश्यमावश्यकता च।

3. The Shastriya importance of Vyakarana, its need and Aims.

### (क) व्याकरण शिक्षणस्योद्देश्यानि

भाषायाः अध्ययने व्याकरणं मार्गदर्शकं भवति। यथा भाषायाः अध्ययनम् आजीवनं प्रचलति तथैव व्याकरणस्यापि। भूगोलशास्त्रस्याध्ययने मानचित्रमिव भाषाध्ययने व्याकरणशिक्षणस्य उद्देश्यानि समानानि भवन्ति। यथा–

1. विभिन्नशब्दरूपाणां शुद्धस्वरूपज्ञानम्।
2. तर्करचना शक्तयोर्विकासः।
3. व्यवहारे भाषागतगुणदोषान् पृथक्कर्तु योग्यता प्रदानम्।
4. व्याकरणनियमानां ज्ञानम्।
5. व्याकरणतत्त्वानि व्यवहारे प्रयोक्तुं क्षमतोत्पादनम्।
6. ध्वनितत्वानां परिचयः।
7. वाक्य–रचना–विषयकं ज्ञानम्।
8. संस्कृतभाषायाः वैशिष्ट्यविषये ज्ञानप्रदानम्।
9. संस्कृते विचारान् आविष्कर्तुं क्षमतोत्पादनम्।
10. पठितान् व्याकरणनियमान् प्रयोगे आनेतुं अवसरस्य परिकल्पनम्।
11. स्थानप्रयत्नानुसारं वर्णानामुच्चारणम्।
12. शब्दानां साध्वसाधुज्ञानसम्पादनम्–लोकेऽपि जनाः व्याकरणस्य प्राधान्यं बहु मन्यन्ते। प्राचीनकाले व्याकरणज्ञानहीना उपहास्यतां प्राप्नुवन्ति स्म। यथा-एकः पण्डितः स्वपुत्रीं एकं शिष्यञ्च सह व्याकरणं पाठयति स्मः। उभयो आयुः समानमासीत्। शिष्यः चरित्रवान् कुलीनञ्च आसीत्। अतः पण्डितः स्वसुतायाः विवाहः तेन शिष्येन सह कर्तुमिच्छति। एकदा तेन स्वपुत्रीसमक्षं प्रस्तावः स्थापितः, सा इमं न स्वीकृतवत्ती, उक्तञ्च–

    **यस्य षष्ठी चतुर्थी च विहस्य च विहाय च।**
    **यस्याहं च द्वितीया स्यात् द्वितीया स्यामहं कथम्।।** इति।

    या व्यक्तिः 'विहस्य' (क्रियापदं) संज्ञायाः षष्ठीविभक्तिरूपं, 'विहाय'(क्रियापदं) संज्ञायाःचतुर्थीविभक्तेः रूपं एवं अहं सर्वनामशब्दं द्वितीयाविभक्तिः रूपं कथयति, तस्या व्यक्तेः अहं द्वितीया(भार्या) कथं भवितुम् अर्हामि।
13. 'न बाधते तथा मां हि यथा बाधति बाधते' कविवर कालिदासस्य दृष्टान्तः बाधते इत्यस्य स्थाने बाधति इत्यस्य प्रयोगः कष्टकरम्। अतः भाषायाःशुद्धप्रयोगे विशिष्टं ध्यानं प्रदीयते स्म।

**( ख ) व्याकरणशिक्षणस्यावश्यकता-**

''व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्यय-विभाग-द्वारा निष्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्'', वि अङ् इत्युपसर्ग पूर्वक कृञ् धातोः ''करणाधिकरणयोश्च''इति सूत्रेण ल्युटि प्रत्ययेन सिद्ध्यति व्याकरणमितीदं पदं भवति। व्याकरणं भाषायाः प्रधानाङ्गमस्ति। व्याकरणं विना भाषायाः अन्यः रक्षकः नास्ति। उद्यानवनस्य मनुष्य-पशुपक्ष्यादिभ्यः कण्टकाकीर्णं तन्त्रीकवचं यथा रक्षकं भवति तथा भाषायाः रक्षकमस्ति व्याकरणम्। भाषायाः साधुत्वासाधुत्वज्ञानमेव अनेन ज्ञायते। व्याकरणमिदं सुबन्तानां तिङ्न्तानाञ्च व्याकृतिम् आवेदयति। व्याकरणं भाषायाः संस्कारं सम्पादयति। भाषायाः स्वरूपं संरक्षति। संस्कृतभाषा संश्लिष्टा भाषा भवति। वाक्यं विहायान्यत्र सन्धिर्नित्यो भवति। विभक्ति ज्ञानं विना अर्थज्ञानं न भवति। समासानां विग्रहभेदेन अर्थभेदो भवति। विशेषणविशेष्ययोः प्रयोगे लिङ्गविभक्ति-वचनानां समानता आवश्यकी। एवं क्रियापदानां प्रयोगे पुरुषवचनव्यवस्था ज्ञातव्या।

संस्कृतभाषा संश्लेषणात्मिका अस्ति। कारकाणि क्रियाश्च प्रत्ययैः, संज्ञाभिः, सर्वनामशब्दैः, धातुभिश्च सह संश्लिष्टाः भवन्ति। सर्वनाम्नां पुंल्लिंगस्त्रीलिङ्गरूपाणि अपि पृथक् पृथक् भवन्ति। विशेषणानां प्रयोगः पुंल्लिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्ग-शब्दानाम- नुरूपं क्रियते। अस्यां स्थितौ संस्कृतव्याकरणपठनम् आवश्यकमस्ति। व्याकरणस्य आवश्यकतायाः सम्बन्धे उल्लिखितं वर्तते यत्-

**अव्याकरणमधीतं भिन्नद्रोण्या तरंगिणीतरणम्।**<br>**भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम्।।**

व्याकरणशास्त्रस्याध्ययनेन भाषाया उपरि अधिकारो भवति। अन्यशास्त्राणामध्ययनं सरलं भवति। बौद्धिकानुशासनं प्रदाय व्याकरणं भाषायाः व्यावहारिकप्रयोगे क्षमं करोति।

## ( 5 ) व्याकरणशिक्षणे दृश्यश्रव्योपकारणानामुपयोगः।
## 4. Use of Audio-Visual Aids in Teaching of Grammar

**( क ) दृश्यश्रव्योपकारणानामुपयोगः**

**1. दूरदर्शनम्** (Television)-दृश्यश्रव्यसाधनेषु प्रमुखं साधनं दूरदर्शनं वर्त्तते। श्रव्यसाधनद्वारा श्रोत्रेन्द्रियमेकमेव विषयग्रहणं करोति। दृश्यश्रव्यसाधनेन श्रोत्रेन्द्रियं नयनेन्द्रियञ्च विषयग्रहणं कुरूतः। अतः श्रव्यसाधनानां अपेक्षया दृश्यश्रव्यसाधनानां कृते अत्यधिकं महत्त्वमस्ति। दूरदर्शनस्य कृते दैनन्दिन-शिक्षा-जीवने महत्त्वपूर्णं स्थानमस्ति। संस्कृतकार्यक्रमाणां अवलोकनेन छात्राः वाक्यरचनां, उच्चारणतत्त्वं, नवशब्दज्ञानं, अभिनयकौशलम्, रसानुभूतिम्, ज्ञानम्, आनन्दञ्च सम्यक्तया प्राप्तुं शक्यते। अनेन साधनेन अतिक्लिष्टान् अंशान् अति सरलतया अध्यापयितुं शक्यते। अनेनाधीता अंशा आजीवनपर्यन्तं स्मृति-पथे भवेयुः।

**2. चलचित्राणि** (Cinema)-माध्यमेनापि स्पष्टोच्चारणम्, पठने वैविध्यम्, भाषण-कौशलम्, अभिनयकौशलम्, इत्यादीन् अंशान् एभिः अध्यापयितुं शक्यते। एतेषां चलचित्राणां,

द्वारा संस्कृतभाषाया: महत्त्वं भारतीयानां आचारविशेषान् रूपकानि च सम्यक् तया प्रदर्शयेतुं शक्यते।

**3. नाटकानि**–संस्कृतशिक्षणे नाटकस्यापि महत्त्वमस्ति। मुद्राराक्षसम्, अभिज्ञान-शाकुन्तलम् इत्यादीनि अनेकानि नाटकानि रङ्गमञ्चे अभिनेतुं शक्यन्ते। वाचिक:, आङ्गिक:, सात्विक: आहार्यश्चेति चतुर्विधोऽभिनयो वर्त्तते। अभिनयस्य दर्शनेन, आरोहावरोहपूर्वक भाषणस्य श्रवणेन च छात्रा: भाषाप्रयोगं जानन्ति।

**4. मस्तिष्कयन्त्रं/संगणकं** (Computer)–मानवेन इदानीं यत्कार्यं क्रियते तदधुना मस्तिष्कयन्त्रेण क्रियते। चार्लेस् वाब्बेज नामक: वैज्ञानिक: 1833 तमेवत्सरे एनं यन्त्रमा-विष्कृतवान्। वर्तमानसमये मस्तिष्कयन्त्रस्यैव राज्यं वर्त्तते। साधनमेतत् सर्वा: समस्या: तासां समाधानानि तस्मिन् विद्यमानासु अल्पासु पेटिकासु धारयति। संगणकयन्त्रे त्रय:

1. जवनिका [Monitor]

2. क्रेन्द्र प्रसार विभाग Central Processing Unit-(C.P.U.)

3. कुङ्जिकामण्डलम् [Keyboard] च सन्ति। द्वितीय: यन्त्रं हृदयसदृश:, एष: भाग: प्रथमं सर्वा: समस्या: स्वमनसि स्थापयति। अनन्तरं सर्वासां समस्यानां कृते समाधानानि प्रयच्छति। एवं मस्तिष्कयन्त्रेन प्रभावोतपादकरीत्या यथार्थानंशान् निस्संशमध्येतुं शक्यते। संगणक: व्याकरणशिक्षणे नियोजितशिक्षणं [Programmed Learning]प्रोत्साहयति। विविध विषयेषु व्याकरण-सम्बन्धि-प्रश्नान् संकलय्य क्रमबद्धरुपेण शिक्षयितुं साधनमिदं वर्त्तते। संगणकद्वारा वर्णचित्रं, रेखाचित्रं, सूचकचित्रम् साध्यं भवति। पाठशालासु तृतीयकक्षात: आरभ्य मस्तिष्कयन्त्र-सम्बद्धा शिक्षा [Computer Education] अध्यापमाना: अस्ति।

**5. भाषा प्रयोगशाला** (Language Laboratory)–इदानीं भाषाध्यापनविषये अपि क्रान्तिस्समागता, आदौ सामान्य विज्ञानम्, प्राविधिकविज्ञानम् इत्यादीनां कृते प्रयोगशाला आसन्। कौशलानि अभ्यासपूर्वकं संवर्धयितुं शक्यते। श्रवणभाषणपठनलेखन कौशलानि शास्त्रीयपद्धत्या प्रमापयितुं शक्यते। एवं मनोवैज्ञानिक पद्धत्या: भाषा प्रयोगशालायां संस्कृतमध्येतुं शक्यते। एवमितराणि दृश्यश्रव्यसाधनानि स्वयमनुभवपूर्वकं कथं संस्कृतभाषाया: कृते उपकृतानि भवन्तीति ज्ञातव्यम्।

**(ख) संस्कृतशिक्षणे दृश्यश्रव्यसाधनानां प्रयोगे उपयोगिन: लाभाश्च:–**

1. शिक्षणे नूतनत्वं भवति।
2. छात्रा: अध्ययने आसक्तिं प्रदर्शयेयु:।
3. अत्यन्तकठिनान् अंशान् अत्यन्तसरलतया अध्यापयितुं शक्यते।
4. सर्वेषां छात्राणां कृते एकयैव रीत्या अवधानपूर्वकं पाठयितुं शक्यते।
5. एभिस्साधनै: अध्यापिता अंशा: आजीवनं स्मृतिपथे स्यु:।
6. अल्पे एव समये अत्यधिकानंशान् अध्यापयितुं शक्यते।

7. वैज्ञानिकमार्गेन अन्धविश्वासान् दूरीकर्तुं शक्यते।
8. भ्रमप्रमादरहितं यथार्थज्ञानं सम्पादयितुं शक्यते।
9. विषयः रोचकः, आकर्षकश्च भवति।
10. बालकेषु निष्क्रियताः न भवन्ति, तेः भाषाध्ययने सक्रियाः भवन्ति।
11. सार्थकशब्दभण्डारस्य वृद्धिर्भवति।
12. शिक्षणं प्रभावपूर्णं भवति।
13. भाषायाः व्यावहारिकप्रयोगः ज्ञायते, छात्राः तस्यानुकरणे तत्पराः भवन्ति।

**(ग) निष्कर्षः**

दृश्यश्रव्योपकरणानि शिक्षणस्य साधनानि भवन्ति, न तु साध्यानि, एतदर्थं संस्कृतशिक्षणे एतेषां सदुपयोगः कर्तव्यः। संस्कृताध्यापकः दृश्यश्रव्यसाधनानामुपयोगात्पूर्वं तेषां महत्त्वं ज्ञात्वा, उद्देश्यानुसारं प्रयोगं कुर्यात्। संस्कृतशिक्षणाय अपेक्षितानि चित्राणि विविधपत्रेभ्यः, पत्रिकाभ्यश्च समाहरणीयानि। एतेषां प्रयोगस्य पूर्वयोजना रचनीया। संस्कृताध्यापकः विषयसम्बन्धिनं प्रस्तावं कुर्यात्। विषयस्पष्टीकरणाय विषयग्रहणस्य परीक्षणाय च अध्यापकः प्रश्नान् पृच्छेत्। आवश्यकतानुसारमेव साधनानां प्रयोगः कर्तव्यः। श्यामपट्टस्य प्रयोगः सरलः, सुलभश्च, अस्यप्रयोगः अत्यन्तावश्यकः, महत्त्वपूर्णश्च, संस्कृतशिक्षणेऽस्य प्रयोगः अनिवार्यः स्यात्। एतेन विवरणेन ज्ञायते यत् संस्कृतशिक्षणे दृश्यश्रव्यसाधनानां प्रयोगः लाभप्रदो भवतीति।

विस्तरेण तु नवम् अध्याये दृश्यन्तु।

卐 卐 卐

# 14

# व्याकरणशिक्षणे प्रणाल्यः, युक्तयश्च।

रूचिकरं योजनाबद्धं क्रमबद्धं च शिक्षणमेवाधिगमं जनयेत्। तदर्थं विभिन्नाः विधयः परिकल्पिताः प्रवर्तिताश्च सन्ति। तत्र साहाय्यमाचरन्ति प्रणाल्यः युक्तयश्च। अधिगमस्य कारणभूतं, सहायकम्, अभिवर्धकञ्च यद् भवति तदेव सार्थकशिक्षणम्। तच्च एताभिः प्रणालीभिः, युक्तिभिश्च परिष्कृतं भवति। Garlick महोदयः कथयति-'एतानि अध्यापकस्य साधनानि भवन्ति। एतेषां समुचितप्रयोगेन अध्यापनं सफलं भवति''। यतः किं पाठनीयम्? कया व्यवस्थया? कथम्? चेति विचिकित्सायां प्रणाल्यः प्रमुखं स्थानं भजन्ते। किमर्थं प्रणाल्यः इत्यत्र पञ्चधा कारणानि प्रतिपादयति-John mander महोदयः-

1. अल्पीयसि काले विषयवस्तुनः प्रतिपादने उपकुर्वन्ति।
2. छात्राःप्रणालीनामुपयोगेन प्रभाविताः भवन्ति, तेषां मनसि विषयवस्तूनि च चिरं तिष्ठन्ति।
3. रुचिमुत्पादयन्ति, अभिवर्धयन्ति च।
4. अनुभूतिमाधारीकृत्य विषयवस्तूनि अवगमयन्ति।
5. प्रकृतविषयं विविधविषयैः सह समायोजयन्ति।

विषयः प्रणालीभिः संयुक्ता एव पूर्णाः भवन्ति। यदि विधिः अवयवी, तत्र प्रणाल्यः अवयवाः। अवयवैर्विनाऽवयविनोऽसत्वात्। एवं शिक्षणे विविधाः प्रणाल्यः प्रामुख्यं भजन्ते। बहव्यः प्रणाल्यः वर्तन्ते। तत्र प्रमुखप्रणाल्यः—

1. व्याख्याप्रणाली,
2. स्पष्टीकरणप्रणाली,
3. वर्णन-विवरणप्रणाल्यौ, च वर्तन्ते।

## (क) व्याख्याप्रणाली-

''पदार्थज्ञानपूर्वकम् उदाहरणप्रत्युदाहरणानि प्रदाय, आक्षेपादिकं विधाय सिद्धान्तस्थापनमेव व्याख्या'' इति। व्याख्यायां मूलभावानां विचाराणां च समुचितं सन्तुलितं च विवेचनं भवेत्।

प्रसंगनिर्देशनं व्याख्यायाः अनिवार्यः अंगः भवति। A.H.Garlick महोदयः कथयति- "कस्यापि पदस्य पदसमूहस्य वा जटिलतायाः दूरी करणाय या प्रक्रिया अनुसृज्यते सैव व्याख्या" इति। अर्थात् काठिन्यनिवारणं, स्पष्टप्रतिपत्तिश्चोद्देश्यं व्याख्यायाः, अस्याः प्रयोगः सर्वत्र भवितुमर्हति। विशेषरुपेण साहित्यम्, इतिहासः, भूगोलशास्त्रं, विज्ञानं, व्याकरण-मित्यादिषु। इयं प्रणाली अव्याप्ति-अतिव्याप्तिदोषमुक्तं तत्त्वमवगमयति। यथा-अस्माकं शास्त्रेषु प्रतिपदमादाय तदर्थप्रतिपादनपूर्वकं व्याख्यानं क्रियते। व्याख्याया उद्देश्यं बौद्धिकाभिरुचेः, ग्रहणशक्तेः, अवगमनशक्तेश्च अभिवर्धनमेव। व्याख्या कमपि विषयमाधारीकृत्य पूर्णा पाक्षिकी वा भवितुमर्हति। परन्तु सर्वदा पूर्णव्याख्यानं आवश्यकम्। अर्धमध्यापकः व्याख्येयात् अर्धञ्च बालः स्वबुद्ध्याऽवगच्छेत्। अध्यापकः विभिन्नप्रकारैः छात्राणाम् अवधानमाकृष्य व्याख्येयात्। अस्मिन् प्रसंगे Pauton महोदयः मार्गं प्रदर्शयति- "व्याख्यान प्रक्रियायां अध्यापकः छात्रैः सह मानसिकं सम्पर्कं स्थापयेत्, तेषां चिन्तन-मुत्तेजयेत्, तान् प्रश्नान् पृच्छेत्, शंकां समाधेयात्, समस्यां मुक्तरूपेण विचारयेत्, अन्ते मूल्यांकनं च कुर्यात्" इति। व्याख्या छात्रध्यापकयोर्मध्ये सम्पर्कं स्थापयति। व्याख्यानावसरे विभिन्नाः युक्तयश्च प्रयुक्ताः भवन्ति।

### (ख) शिक्षकेभ्यः ध्यातव्याः विषयाः–

1. व्याख्यानं सोद्देश्यं, सरलं, शुद्धं, स्पष्टं च भवेत्।
2. व्याख्यानं स्तरानुगुणं स्यात्।
3. व्याख्यानं जटिलं न भवेत्, यतः जटिलतायाः दूरीकरणमेव अस्योद्देश्यं भवति।
4. क्रमबद्धरूपेण विचाराणां प्रस्तावकं, निदर्शनैर्युक्तं स्यात्।
5. यथोचितं उपकरणैः सम्पुष्टं भवेत्।
6. प्रेरकं प्रोत्साहकं च स्यात्।
7. व्याख्यानं सामयिकं तर्कसङ्गतं च स्यात्।
8. व्यावहारिकोदाहरणैः सम्पुष्टं सत् जीवनेन सम्बन्धं स्थापयेत्।
9. व्याख्यानं रुच्युत्पादकं स्यात्।

### (ग) स्पष्टीकरणप्रणाली–

स्पष्टन्नाम विकसितं रूपं स्फुटम्। तत्त्वानामुचितरूपेण अभिव्यक्तिरेव स्पष्टीकरणम् इति। H.Garlick-महोदयः कथयति-"स्पष्टीकरणं कमपि भावमर्थं वा सम्यगुद्घाटयति। विचाराणां सरलरीत्या आविष्कार एव स्पष्टीकरणम्" इति। S.K.Kachar महोदयः कथयति-"नूतनतत्त्वानां स्पष्टरूपेण बोधनमेव स्पष्टीकरणम्" इति। तच्च कक्षायाः स्तरानुगुणं भवेत्। **स्पष्टीकरणावसरे ध्यातव्यः**

1. स्पष्टीकरणं सुबोधं सुनिश्चितं च भवेत्।
2. भाषा स्वाभाविकी, छात्रैरवगम्या च स्यात्।
3. उचितगत्या स्पष्टीकरणं कुर्यात् शिक्षकः।

4. स्पष्टीकरणावसरे शिक्षकः स्वयं च प्रश्नान् पृच्छात् छात्रान् च प्रोत्साहयेत्।
5. स्पष्टीकरणात्पूर्वं क्रियमाणः प्रस्तावः संक्षिप्तः स्यात्।
6. विषयवस्तुनः संक्षिप्तपरिचयः श्यामपट्टे लेख्यः।
7. अध्यापकः स्पष्टीकरणकाले छात्रोपयोगीनि, छात्राणामनुभवैः सम्बद्धानि उदाहरणानि च प्रयुञ्जीत।
8. अध्यापकः पाठ्यांशं यथोचितं विभज्य सम्बन्धस्थापनपूर्वकं स्पष्टीकरणं कुर्यात्।
9. अध्यापकः तर्कसङ्गतविषयं प्रस्तौतु।
10. अध्यापकः पाठस्योद्देश्यमभिप्रायञ्च सम्यगवगम्येत्।

अध्यापकः इत्थं स्पष्टीकरणप्रणालीं यथाविधि उपयुञ्जीत। यद्येवं सावधानतया शिक्षकः स्पष्टयेत्, तर्हि छात्राः आकृष्टास्सन्तः विषयवस्तून्यवगच्छेयुः।

### ( घ ) वर्णन-विवरणप्रणाल्यौ–

वर्णनन्नाम कस्यापि वस्तुनः शाब्दिकं विवरणम्। अत्र A.K. Garlick महोदयः स्पष्टयति–"कस्यापि वस्तुनः शब्दैः, सङ्केतैः, उभयथाऽपि वा प्रतिपादनं वर्णनम्। इदं वस्तुतः शब्दचित्रमेव" इति। वस्तुतः वर्णनं स्पष्टीकरणस्यैव परिवर्तितरूपं भवति। परन्तु स्पष्टीकरणं व्यापकं, वर्णनमांशिकं च वर्त्तते। कस्यचित् वस्तुनः स्पष्टीकरणकाले तदंशस्य वर्णनमपि विधीयते। अस्योपयोगः इतिहासः, साहित्यं इत्यादिषु विषयेषु भवति। गणितं, व्याकरणं इत्यादिषु तथाऽस्योपयोगः न दृश्यते।

विवरणमप्येतादृशमेव। विवरणे काचन घटना वर्ण्यते। वर्णनं किमपि वस्तु आधारीकृत्य प्रवर्तते। विवरणं कामपि घटनामाधारीकृत्य विषयमुपस्थापयति। Geeen Birchenough महोदयौ कथयतः—"विवरणन्नाम क्रमबद्धघटनायाः वर्णनम्"इति। विवरणप्रणाली कामपि घटनां छात्राणां मनसि सुदृढं व्यवस्थापयति। Panton स्पष्टयति– "विवरणमेका कला, यच्च क्रमबद्धरूपेण घटनाः प्रतिपाद्य श्रोतारमाकर्षयति। कल्पनालोके सञ्चारयति च"इति। पाठशालासु कथाकथनमयैव प्रणाली स्यात्। अनया प्रणाल्या अध्यापकः प्रासङ्गिकरूपेणानौपचारिकरूपेण च व्याकरणं शिक्षयितुं शक्नुयात्।

### ( ङ ) अत्रवधेयांशाः–

1. प्रयोगकाले भाषा सरला स्पष्टा च स्यात्।
2. यस्य वस्तुनः विषयस्य वा वर्णनं विवरणं वा स्यात्।
3. चिकीर्षत्यध्यापकः तद्विषये सुस्पष्टानमावश्यकम्।
4. छात्राणां रुचिः, वयः, अनुभव इति विषयान् विज्ञाय तदनुकूलं एते प्रणाल्यौ भवेताम्।
5. साभिनयं ससंकेतं वर्णनं कुर्यात् अध्यापकः।

एताः अतिरिक्ताः "प्रभाषणप्रणाली, तुलनाप्रणाली, पुस्तकपठन-प्रणाली" इत्यदयः सन्ति। सर्वाः सर्वत्र उपयोक्तुं न शक्याः। एताश्च पाठ्यांशं सम्यगवगमयन्ति, स्पष्टं प्रतिपादयन्ति,

तत्त्वानि द्रढयन्ति मनसि प्रतिष्ठापयन्ति च। अध्यापकः एतेषां प्रयोगं यथाविधि, यथावसरं, यथोचितं च विदधीत।।

## (च) शिक्षणे युक्तयः–

प्रणालयः यदि मौखिका भवेयुः तर्हि नीरसतामुत्पादयेयुः अतः प्रणालीनां प्रयोगावसरे विविधयुक्तयः अस्माभिः प्रयुज्येरन्। युक्तयः विषयवस्तु स्पष्टयन्ति कठिनमपि विषयं अल्पीयसि काले प्रतिपादयन्ति च। युक्तयः बह्व्यो वर्तन्ते। तत्र प्रमुखाः—अनुवादः, अभिनयः, पर्यायः, तुलना, विग्रहः, व्युत्पत्तिः, विश्लेषणम्, उपकरणप्रदर्शनम्।

**1. अनुवादः**–भाषाशिक्षणे कस्यापि शब्दस्य विषयस्य वा प्रतिपादनार्थं युक्तिरियमनुसिर्यते। अत्र छात्रः स्वमातृभाषामाध्यमेन विषयं झटिति अवगच्छति। चार्लेस् वुड्स् घोषणापत्रदारभ्य 1986 गत नूतनशिक्षानीतिपर्यन्तं प्रादेशिकभाषा एव शिक्षणमाध्यमभाषाः स्युः इति स्पष्टम् उद्घोषितवन्तः। अनेन अनुवाद युक्तीनां कृते सर्वोच्चस्थानं लब्धम्।

**2. अभिनयः**–अध्यापकः कमपि शब्दमभिनयद्वारा बोधयति। अत्र प्रत्यक्षरूपेण अर्थस्यावगमनं भवति। यथा–''गच्छति', हसति'' इति पदानां बोधनमभिनयद्वारा सुलभसाध्यं भवति।

**3. पर्यायः**–कठिनशब्दस्य अपरिचितस्य नवशब्दस्य वा तत्पर्याय शब्देन बोधनमेव पर्याययुक्तिः। यथा–''भुजङ्गमः'' इत्यस्य ''सर्प'' इति पर्यायेन बोधः सुलभतया भवेत्।

**4. तुलना**–विषयद्वयस्य तुलनापूर्वकं विषयज्ञानस्य दृढीकरणं अनया युक्त्या कार्यते। कमपि शब्दं तत्समानेनासमानेन वा शब्देन तुलनां विधाय स्पष्टयितुं शक्नोति शिक्षकः।

**5. विग्रहः**–विग्रह वाक्यद्वारा शब्दस्यार्थावबोधः कार्यते अध्यापकेन। यथा– दाशरथिः इत्यस्य ''दशरथस्य पुत्रः'' इति विग्रह-कथनेन छात्राः ''दाशरथिः— रामः'' इत्यवगच्छेयुः।

**6. व्युत्पत्तिः**–अत्र व्युत्पत्तिप्रदर्शनेन अर्थस्य स्पष्टीकरणं भवति। यथा–छात्रः ''दिवा'' शब्दं जानन्ति, 'दिवाकरः' शब्दं न जानन्ति। तदा ''दिवाकरोतीति दिवाकरः'' इति व्युत्पत्तिं यदि प्रदर्शयेत् अध्यापकः, तर्हि छात्रः स्वयं पदार्थमवगच्छेत्।

**7 विश्लेषणम्**–शब्दस्य वाक्यस्य वा विश्लेषणं विधायार्थस्य प्रतिपादनं क्रियते। सन्दिग्धानां, समस्तानां च पदानां व्याख्यानावसरे इयं युक्तिः बहूपकरोति।

**8. उपकरणप्रदर्शनम्**–विविधोपकरणानां माध्यमेन शाब्दबोधं जनयत्यध्यापकः। रेखाचित्रं, चित्रं, वस्तु, प्रतिकृतिः, इतराणि दृश्यानि श्रव्याणि च उपकरणानि अत्र प्रदर्शितानि भवन्ति।

एवमेताः युक्तयः अध्यापकस्य सहयोगमाचरन्ति। तस्य कार्यं सरलीकुर्वन्ति। एतश्च युक्तयः आधारीकृत्यैव विविधविधयः प्रवर्तन्ते। व्याकरणशिक्षणे एताः युक्तयः उपयोगिनः भवन्ति।

## (छ) व्याकरणशिक्षणस्य विभिन्नाःप्रणाल्य–

**1. अनौपचारिकप्रणाली**–शिक्षकः वर्णोच्चारणे, साधुशब्दप्रयोगे च जागरूकः स्यात्। व्याकरणस्य साधारणनियमैः छात्राः क्रमेण अवगताः स्युः। प्रारम्भिकस्तरे भाषाध्यापने इयं प्रणाली उपयुक्ता स्यात्। शुद्धोच्चारणं, साधुशब्दज्ञानं पुरुष–लिङ्ग–विभक्ति–वचनानां प्रयोगश्च भाषाद्वारा अध्याप्यते। संस्कृतभाषायाः विस्तृतशब्दसमूहस्य साधुत्वं व्याकरणज्ञानं विना न सम्भवति।

**2. प्रयोगप्रणाली**–इयं प्रणाली अनौपचारिकप्रणाल्याः विस्तृतं रूपं विद्यति। व्याकरणनियमानां भाषायां प्रयोगद्वारा व्याकरणशिक्षणं सम्पाद्यते। कारक–विभक्तीनाम्, उपपदविभक्तीनाञ्च प्रयोगः पाठेषु क्रमशः विन्यस्तो भवति। अनुवादे, वाक्यरचनायाञ्च तेषां प्रयोगानाम् अभ्यासाय प्राधान्यं दीयते। सन्धिसमासादिविषयेऽपि बहूनामुदाहरणानां सङ्कलनेन अभ्यासःकार्यते।अत्र सरलात् कठिनं प्रति इत्याद्यधिगमनियमानां प्रयोगो भवति।

**3. सहयोगप्रणाली**–भाषायाः, साहित्यस्य च अध्ययने व्याकरणमुपकारकं भवति। संस्कृतसाहित्याध्ययने तु व्याकरणज्ञानमपरिहार्यं भवति। साहित्यस्य सूक्ष्मांशानां विश्लेषणं व्याकरणं आधृत्य क्रियते। व्याकरणज्ञानं विना संस्कृतकाव्यानामध्ययनं, रसास्वादञ्च न सम्भवति। एवं साहित्येन साकं व्याकरणस्य बोधनमेव सहयोगप्रणाली इत्युच्यते।

**4. प्राचीनप्रणाली**–प्राचीनकालादारभ्य भारते व्याकरणाध्यापने आश्रीयमाणैषा प्रणाली कश्चित् सूत्रप्रणाली, सिद्धान्तप्रणाली इत्यपि व्यवह्रियते। अस्यां प्रणाल्यां व्याकरणाध्यापनाय कश्चन् व्याकरणग्रन्थः पाठ्यपुस्तकरूपेण उपयुज्यते। संज्ञानां, परिभाषाणाञ्च साहाय्येन विधिसूत्राणां व्याख्यानम्, उदाहरणानि, प्रत्युदाहरणानि विमर्शः, समीक्षा इत्येतत्सर्वमत्र अन्तर्भवति। येन अल्पेन समयेन, परिश्रमेण च बहवः शब्दाः ज्ञातुं शक्यन्ते। अर्थज्ञानपूर्वकं सूत्राणां कण्ठस्थीकरणे दोषो नास्ति। माध्यमिकस्तरे, उन्नतस्तरे च व्याकरणशास्त्रस्या- ध्यापनाय एषा प्रणाली उपयुज्यते।

卐 卐 卐

# 15

# व्याकरणशिक्षणम्

# Teaching of Grammar

## (क) सन्धिः (सवर्ण दीर्घ, गुण, वृद्धि, अयादि, यण्, श्चुत्व)।
## Sandhi (Savarna dhirgha, Guna, Vriddhi, Ayadesha, Yan, Schutva)

**सन्धि**-[Euphony] Sandhi

सम् उपसर्गात् धा धातोः किः प्रत्ययात् निष्पद्यते सन्धि शब्दः। शब्दोऽयं पुंसि लिङ्गे प्रयुज्यते। संस्कृतभाषायां सन्धिज्ञानं विना गद्यपद्यादीनामध्ययनं दुष्करम्। सन्धिं विना संस्कृतभाषायां वाक्यनिर्माणंसुन्दरं प्रौढं च न भवति। सम् उपसर्गपूर्वकात् डुधाञ् धातोः कि प्रत्यये कृते सन्धिशब्दोऽयं निष्पद्यते। सन्धिशब्दःपुंलिङ्गः। संहिता संतान इति सन्धिरेव नामान्तरम्। सन्धिशब्दस्य सामान्यः अर्थो भवति मिलनम्। द्वयोः वर्णयोः मिलनकार्यं सन्धिः कथ्यते व्याकरणशास्त्रे। सन्धिविषये नियमः—

**संहितैकपदे नित्या नित्याधातूपसर्गयोः**
**नित्यासमासे वाक्ये तु सा विवक्षामपेक्षते**

अर्थात् एक-पदस्य भिन्न भिन्न अवयवे, धातौ उपसर्गे च, तथा च समासे सन्धिः अवश्यं करणीयः। वाक्येषु पृथक् पृथक् शब्दानां मध्ये सन्धिकरणं अनिवार्यं न भवति। वक्ता/ लेखकस्येच्छोपरि निर्भरः अस्ति। यथा-एक पदे=यदि+अपि=यद्यपि, धातु, तथा च उपसर्गयोः— प्र+एजते=प्रेजते, समस्तपदे-विद्या+आलयः=विद्यालयः, वाक्यानां पदेषु-रामः गृहं गच्छति=रामो गृहङ्गच्छति। वर्णानामतिशयितः सन्निधिः संहिता(सन्धि) संज्ञः स्यात्। अत्यन्त समीपवर्तिनो द्वयोः वा द्वाभ्यामधिकंवर्णानां मेलेन किमपि नियमाधीनपरिवर्तनमेव सन्धि कथ्यते। द्वयोः वर्णयोः मिलनेन यः विकारः (परिवर्तनं) भवति सः एव सन्धिः। संयोग-''हलोऽनन्तराः संयोगः'' सूत्रस्यनिर्देशानुसार-स्वर-रहितानेक-व्यञ्जनानां योग संयोगो भवति इति कथ्यते। द्वयोः वा द्वाभ्यामधिकात्यन्तसमीपस्य हल्वर्णानां परिवर्तनरहितमिलनमेव संयोगः। सन्धिकार्ये परिवर्तनं भवति। संयोग कार्ये परिवर्तनं न भवति। उदाहरणार्थ- दिक्+करी=दिक्करी, वि+न्ध्य्=विन्ध्य।

संहिताया: त्रयोभेदा: पचलिता:, 1. स्वरसन्धि, 2. व्यञ्जनसन्धि, 3. विसर्गसन्धि।

**1. स्वरसन्धि**–अत्यन्तसमीपस्थ द्वयो: स्वरयो: मिलनेन यत्परिवर्तनं भवति तत् स्वरसन्धि:। अर्थात् स्वरस्य स्वरेण सहमिलनमेव स्वरसन्धि:। यथा- देव+आलय:= देवालय:, हरि+ए=हरये, प्र+एजते=प्रेजते, इति+आदि=इत्यादि।

**2. व्यञ्जनसन्धि**–अत्यन्तसमीपस्थहल्वर्णानां स्वरवर्णै: सह मिलनेन यत् परिवर्तनं भवति स: व्यञ्जनसन्धि:। अर्थात् हलन्तवर्णै: सह स्वरव्यञ्जनमिलनमेव हल्सन्धि:। स्वर व्यञ्जनवर्णानां कारणेन व्यञ्जन वर्णेषु यत् परिवर्तनानि भवन्ति तत् व्यञ्जनसन्धि:। यथा- उत्+ज्वल:= उज्ज्वल:, दिक्+अम्बर=दिगम्बर:, जगत्+ईश= जगदीश:, अहन्+कार:=अहंकार:, उत्+श्रृंखल:=उच्छृंखल:।

**3. विसर्गसन्धि**–स्वर-व्यञ्जनवर्णानां मिलनेन विसर्गे यत् परिवर्तनं भवति तत् विसर्गसन्धि:। विसर्गेण सह स्वरव्यञ्जनवर्णानां मिलनमेव विसर्ग सन्धि:। यथा- इत:+ तत:=इतस्तत:, क:+अयम्=कोऽयम्, राम:+अस्ति=रामोऽस्ति, नि:+फलम्=निष्फलम्।

**( 1 ) सवर्णदीर्घ-**

**'अक: सवर्णे दीर्घ:' 6-1-10** अक:सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेश:स्यात्। अत्र अक:(पञ्चमी) अ इ उ ऋ लृ त: सवर्णेऽचिपरे(सप्तम्यन्ते) अ आ+अ आ=आ, इ ई+इ ई=ई, उ ऊ+उ ऊ=ऊ, ऋ ॠ+ऋ=ॠ, पूर्वपरयो मिलनेन दीर्घ:(प्रथमान्त:) भवति।

'अ आ इत्येतयो: अनन्तरं यदि अ आ इत्येतौ वर्णौ स्त: तर्हि आकार:, इ ई इत्येतयो: अनन्तरं यदि इ ई इत्येतौ वर्णौ स्त: तर्हि ईकार:, उ ऊ इत्येतयो: अनन्तरं यदि उ, ऊ इत्येतौ वर्णौ स्त: तर्हि ऊकार:, ऋ इत्यनन्तरं ऋ लृ इत्येतौ वर्णौ स्त: तर्हि ॠकार: पूर्वपरयो: स्थाने दीर्घ: एकादेशत्वेन भवति। दीर्घरूपाभावे लृकारस्य प्रयोग: न भवति। सवर्णसंज्ञा-तुल्यास्य प्रयत्नं सवर्णम्-ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्वयं यस्य येन तुल्यं तन्मिथ: सवर्णसंज्ञं स्यात्।

**(1)** अ आ+अ आ=आ>कार्य+आलय:=कार्यालय:, विद्या+आलय: =विद्यालय:, राम+अयनम् =रामायणम्, महा+अनुभाव:=महानुभाव:,

**(2)** इ ई+इ ई=ई> अधि+ईश्वर: =अधीश्वर:, नदी+ईश: =नदीश:, श्री+ईश: =श्रीश:, मही+ईश:=महीश:, कवि +इन्द्र:=कवीन्द्र:,

**(3)** उ ऊ+उ ऊ=ऊ >भनु+उदय: =भनूदय:, गुरु +उपदेश: = गुरूपदेश:, वधू+उत्साह: =वधूत्साह:,

**(4)** ऋ ॠ+ऋ ॠ=ॠ >पितृ + ऋषि:=पितृषि:, पितृ + ऋणम् +पितृणम्, होतृ +ऋकार: =होतृकार:,

**( 2 ) गुण-सन्धि:**

अदेङ्गुण: अत् एङ् च गुण संज्ञं स्यात्। ए ओ, अर् अल्। आद्गुण: (6.1.84) अवर्णादचि

परे पूर्वपरयोरेको गुण आदेश:स्यात्। आत् (पञ्चम्यन्त), गुण:(प्रथमान्त) 'अ आ इत्येतयो: वर्णयो: अनन्तरं यदि इ ई इत्येतौ वर्णौ स्त:, तर्हि पूर्वपरयो: स्थाने एकार:, उ ऊ इत्येतौ वर्णौ स्त: तर्हि ओकार:, ऋ ॠ

इत्येतौ वर्णौ स्त:, तर्हि अर्, लृकार: अस्ति तर्हि अल् आदेशत्वेन च भवति।

| अ/आ +इ/ई | अ/आ+उ/ऊ | अ/आ+ ऋ/ॠ | अ/आ +लृ |
|---|---|---|---|
| ए | ओ | अर् | अल् |
| उप+ इन्द्र:= उपेन्द्र:, सुर+ ईश: =सुरेश:, | जल+उत्पत्ति:=जलोत्पत्ति:, जल+ऊर्मि:=जलोर्मि: | देव+ऋर्षि=देवर्षि, महा+ऋर्षि=महर्षि | महा+लृकार:= महल्कार:, मम+ लृकार:= ममल्कार: |

## ( 3 ) वृद्धि-सन्धि:–

वृद्धिरादेच् (1-1-1) आदैच्च वृद्धिसंज्ञ: स्यात्। एवं च वृद्धिरेचि (6-1-88) आदेचि परे वृद्धिरेकादेश:स्यात्। अ आ इत्येतयो: वर्णयो: अनन्तरं यदि ए, ऐ इत्येतौ वर्णौ स्त:, तर्हि पूर्वपरयो: स्थाने ऐकार:, यदि ओ औ इत्येतौ स्त: तर्हि औकार: च पूर्वपरयो: स्थाने एकादेशत्वेन भवति। अ आ इत्येताभ्यां वर्णाभ्याम् ऋकारे ॡकारे च परे आर्, लृकारे परे च आल् आदेशो भवति।

| अ/आ+ ए/ऐ | अ/आ+ओ/औ | अ/आ+ ऋ/ॠ | अ/आ+लृ |
|---|---|---|---|
| ऐ | औ | आर् | आल् |
| कृष्ण+एकत्वम् =कृष्णैकत्वम्, तथा+एव =तथैव, सदा+एव= सदैव | गंगा+ओघ=गङ्गौघ:, दिव्य +औषधम् =दिव्यौषधम्, मम+ औषधम् =ममोषधम् | उप ऋच्छति उपार्च्छति, | अप लृकारीयति उपाल्कारीयति |

## ( 4 ) अयादि-सन्धि:–

एचोऽयवायाव: (6.1.78) एच: क्रमाद् अय् अव् आय् आव् एते स्युरचि। अर्थात् ए ऐ ओ औ इत्येतेभ्य: वर्णेभ्य: स्वरे परे एकारस्य स्थाने अय्, ऐकारस्य स्थाने आय्, ओकारस्य स्थाने अव्, औकारस्य स्थाने आव् च आदेश: भवति।

| एच् (स्थाने) | अच् (परे) | आदेश (विकार:) | सन्धिविच्छेद: | सन्धि: (सिद्धरूपम्) |
|---|---|---|---|---|
| ए + | ए | अय् | हरे+ए( हर्+अय् +ए) | = हरये |
| ऐ+ | आ | आय् | नै+अक:( न्+आय्+अक: | =नायक: |
| ओ+ | अ | अव् | विष्णो+ए( विष्ण्+अव्+ए) | =विष्ण्वे |
| औ+ | अ | आव् | पौ+अक:( प्+आव्+अक:) | =पावक: |

### (5) यण्सन्धिः–(यण् य् व् र् ल्)

इको यणचि–6.1.74 इकः स्थाने यण् स्यादचि संहितायां विषये। अत्र इकः(षष्ठ्यन्त), यण् (प्रथमान्त), अचि (सप्तम्यन्त) अर्थात् इ, ई, उ, ऊ, ऋ, ॠ, लृ इत्येतेषां वर्णानामनन्तरं यदि असवर्णस्वरा वर्तन्ते तर्हि क्रमशः –'इ–ई'इत्यनयोः स्थाने यकारः, उ–ऊ इत्यनयोः स्थाने वकारः, ऋ–ॠ इत्यनयोः स्थाने रकारः(रेफः), लृकारस्य स्थाने लकारश्च आदेशो भवति। यथा–

| इक् (स्थाने) | असवर्ण अच् | यण् (विकारः) | सन्धिविच्छेदः | सन्धिः (सिद्धरूपम्) |
|---|---|---|---|---|
| इ+ | अ= | य् | यदि+अत्र(यद्+य्+अत्र) | = यद्यत्र |
| ई+ | अ= | य् | नदी+अम्बुः(नद्+य्+अम्बु) | = नद्यम्बुः |
| ई+ | उ= | य् | सुधी+उपास्यः(सुध्+य्+उपास्यः) | =सुध्युपास्यः |
| उ+ | अ= | व् | मधु+अरिः(मध्+व्+अरि) | =मध्वरिः |
| ऊ+ | आ= | व् | वधू+आगमनम्(वध्+व्+आगमनम् | =वध्वागमनम् |
| ऋ+ | इ= | र् | पितृ+इच्छा(पित्+र्+इक्ष्छा) | =पित्रिच्छा |
| लृ | आ= | ल् | घस्लृ+आदेशः(घस्+ल्+आदेशः) | = घसलादेशः |

### (6) श्चुत्वसन्धिः–श्चुः–श्, च्, छ्, ज्, झ्, ञ्,

'स्तोश्चुना श्चुः' (8/4/40) सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। अर्थात् ''सकारस्य शकारचवर्गाभ्यां योगे शकारः, तवर्गस्य शकारचवर्गाभ्यां योगे क्रमात् चवर्गः आदेशो भवति। (त् इत्यस्य च, द् इत्यस्य ज्, न् इत्यस्य ञ्, स् इत्यस्य श् भवति।

| | | | |
|---|---|---|---|
| स–श | शिशुस्+शेते | शिशु+श्+शेते | =शिशुश्शेते |
| स्–श् | मनस्+चञ्चलम् | मन+श्+चञ्चलम् | =मनश्चञ्चलम् |
| स्–श् | रामस्+छात्रः | राम+श्+छात्रः | =रामश्छात्रः |
| त्–च् | भगवत्+शक्ति | भगव+च्+शक्ति | =भगवच्शक्ति |
| त्–च् | सत्+चित् | स+च्+चित् | =सच्चित् |
| द् ज् | सुहृद्+जगाम | सुह+ज्+जगाम | =सुहृज्जगाम |
| न्–ञ् | हे गुणिन्+जानातु | हे गुणि+ञ्+जानातु | =हे गुणिञ्जानातु |
| न्–ञ् | यज्+न | यज्+ञ् +अः | =यज्ञः |
| न्–ञ् | याच्+ना | याच्+ञ्+आ | =याच्ञा |

## (ख) कारक
## Karaka

कारकम् पद कृ(डुँकृञ्) धातोःण्वुल् प्रत्ययेन सिद्धति। संस्कृतवाङ्मये कारकाणां यावत्प्रधान्यं वर्तते, न तथा अन्येषाम्। कारकं व्याकरणस्य हृदयमिति उच्यते। किं नाम कारकमिति

जिज्ञासायाम्- क्रमवतां वर्णानां समूहः पदम्। पदसमूहः वाक्यम्। वाक्यम् अभीत्सितम् अर्थं बोधयति। अर्थात् 'क्रियान्वयित्वं कारकत्वम्'क्रियान्वयि कारकम्। क्रियायाः अन्वयः =क्रियान्वयः। अन्वयः सम्बन्धः। क्रियान्वयः अस्य अस्ति इति क्रियान्वयि। यः क्रियान्वयि। यः क्रियया अन्वेति (सम्बन्धं प्राप्नोति) 'क्रियाजनकत्वं कारकत्वम्'' 'करोति क्रियां निर्वर्तयतीति कारकम्'' सः कारकम् इत्युच्यते इति फलितोऽर्थः।

क्रियान्वयि कारकम्। तच्च कारकं षड्विधम्-

**कर्ता कर्म च करणं च सम्प्रदानं तथैव च।**
**अपादानाधिकरणमित्याहुः कारकाणि षट्।** इति।

अर्थात् कर्त्ता, कर्मं, करणं, सप्रदानं, अपादानं, अधिकरणञ्च एते षट्कारकाणि सन्ति सम्बन्ध-सम्बोधनञ्च कारकं न मन्यताम् यतोहि तयोः क्रियया वाक-सम्बन्धो न भवति। संज्ञास्थाने प्रयुक्तान् शब्दान् सर्वनाम कथ्यते। तेषामध्ययनमावश्यकम्। सर्वनाम शब्दानां अन्ते, त, त्र, था, दा, इत्यादीना योगेन अव्ययं क्रियते। यथा-सर्वतः, कुत्र, यतः, सर्वत्र, सर्वदा इत्यादि।

**1. कर्त्ता-प्रथमाविभक्तिः**—स औ अस् क्रियायां स्वात्रन्त्र्येण विवक्षितः अर्थः कर्ता स्यात्। स्वातन्त्र्यं नाम व्यापाररयत्वम्। एवञ्च-व्यापाराश्रयः कर्ता इति फलितार्थः। क्रियासम्पादकः कर्ता।

2. (क) प्रकृतधात्वर्थ व्यापारश्रयत्वं कर्त्तृत्वम्। (ख) प्रकृतधातुवाच्यव्यापाराश्रयत्वं कर्त्तृत्वम्। (ग) व्यापाराश्रयत्वं कर्त्तृत्वम्। उदाहरणतया-रामः पठति, रामेण पठ्यते। अत्र रामः रामेण इति कर्त्तापदम् अस्ति। अर्थात् 1. कर्त्तरि प्रथमा, 2. अभिधेयमात्रे प्रथमा, 3. अव्यययोगे प्रथमा, 4. सम्बोधाने प्रथमा, 5. प्रयोजके कर्त्तरि प्रथमा, 6. उक्ते कर्मणि प्रथमा भवन्ति।

**2. कर्म-द्वितीया विभक्तिः**—अम् औ शस्, कर्त्तुः क्रियया यत् प्राप्तुमिष्टम् अनिष्टं वा भवति तत् कर्म। कर्म कारकं यत्र भवति तत्र द्वितीया विभक्तिः भवति। कर्ता काञ्चित् क्रियां निर्वर्तयति, तया क्रियया किञ्चित् फलं जायते। तच्च पुलं यत्र सम्बद्धं भवतु इति इच्दति तत् कर्म संज्ञां प्राप्नोति। तथा च कर्ता स्वाक्रियाजन्यफलेन सम्बन्धम् इष्यमाणं कारकं कर्मसंज्ञं स्यात् इत्यर्थः। 1. (क) अनुक्ते कर्मणि द्वितीया-हरिं भजति। (ख) अभिहिते तु कर्मणि प्रथमा-हरिः सेव्यते। (ग) अकथितं च इति अपादानादिविशेषैरविवक्षितं कारकं कर्म संज्ञं स्यात्। गां दोग्धिपयः, गो दोग्धि पयः। (घ) अभितः परितः सर्वतः उभयतः योगे द्वितीया। (ङ) प्रति-अनु-धिक्-निकषा-अन्तरा-अन्तरेण-यावत्-हा विना 'अधोऽधःइत्येतेषाम् अव्ययानां योगे द्वितीया। इत्यादि।

**3. करण-तृतीया विभक्तिः**—कर्तृकरणयोस्तृतीया, क्रियासिद्धौ अत्युपकारकं करणम्, यत् स्वव्यापारसमनन्तरमेव फलोत्पादकं तत्करणमिति फलितोऽर्थः।

(क) सह-साकम्-सार्धम्-प्रकृतिः—गोत्रम्-प्रायः—एतेषां शब्दानां योगे तृतीया।

(ख) अङ्गविकारे एवं च ऊनः हीनः अलं किम् न्यूनतावाचकानां निषेध वाचकानां च योगे तृतीया।

(ग) विना-नाना- तुल्यार्थसूचक शब्दानां योगे विकल्पेन तृतीया भवति।

(घ) कर्मवाच्ये-भाववाच्ये च (कर्तृपदं) तृतीयाविभक्तौ भवति। इत्यादि।

**4. सम्प्रदान चतुर्थी विभक्तिः—**'सम्प्रदाने चतुर्थी' यस्मै दीयते तत् सम्प्रदानम्, दानक्रिया कर्मणा कर्त्ता यमभिप्रैति संबध्नाति संबन्धुमीप्सति वा ततकारकं सम्प्रदानसंज्ञकम् इत्यर्थः। अर्थात् कर्मभूतं वस्तु यम् अधिगच्छति सः सम्प्रदानं भवति।

1. 'सम्प्रदाने चतुर्थी'-सः ब्राह्मणाय भोजनं पचति।
2. दानार्थे चतुर्थी- राजा ब्राह्मणेभ्यः वस्त्रं ददाति।
3. तादर्थे चतुर्थी-अध्ययनाय पुस्तकम्।
4. नमः, स्वस्ति, स्वाहा, स्वधा, अलम्, वषट् शब्दानां योगे चतुर्थी।
5. निवारणार्थ-मशकाय धूमः।
6. रुच्यर्थानांयोगे-हरये रोचते भक्तिः। इत्यादि स्थले।

**5. अपादानम्-पञ्चमीविभक्तिः—**ध्रुवमपायेऽपादानम्-अपायः—विश्लेषः। ध्रुवम्-अवधिभूतम्। विश्लेषे साध्ये अवधिभूतं कारकम् अपादानं स्यात्। विभागाश्रयः अपादानं भवति।

1. अपादाने पञ्चमी-वृक्षात् पत्राणि पतन्ति।
2. भीत्रार्थानां भयहेतुः—मृगः व्याघ्रात् बिभेति।
3. भूवः प्रभवः योगे-हिमालयात् गंगा प्रभवति।
4. नियमिताध्ययने पाठयितुं शिक्षकस्य पदे पञ्चमी।
5. तरप् ईयसुन्-सादृश्यार्थे योग्यार्थे च पञ्चमी।
6. अन्यस्मात्-आरात्-इतर-ॠते-आदीनां प्रयोगे पञ्चमी।
7. परम, अनन्तरं, हेतु शब्दैः पञ्चमी इत्यादि।

**6. षष्ठी विभक्तिः—सम्बन्धं बोधयति।** स्व स्वामिभावादिसम्वन्धप्रकटने, हेतुवाचक-शब्दानां प्रयोगे च षष्ठीविभक्तिः। रामस्य गृहम्। मम पुत्रः।

1. पुरः पुरस्तात्, अधः, उपरि, अग्रे पश्चात् आदि शब्दानां योगे षष्ठी विभक्तिः।
2. कृत् प्रत्ययान्तयोगे षष्ठी।
3. कृते चतुर्थीविभक्त्यर्थं षष्ठी सूचयति रामाय-रामस्य कृते।

**7. अधिकरण कारकम्-**सप्तमी विभक्तिः। आधारः अधिकरणं भवति। कर्तरि विद्यमानक्रियायाः कर्मणि विद्यमानफलस्य वा आधारः अधिकरणसंज्ञकः भवति।

1. कालसूचकेषु शब्देषु, आधारार्थे च सप्तमी।

2. साधु-असाधु-फलवाचकशब्देषु-अधिकरणकारकं भवति। अधिकरणे सप्तमी-विभक्तिः।

3. जाति-गुण:क्रिया-संज्ञादीनां विशेष्ये सप्तमी भवति। विकल्पेन षष्ठी अपि भवति।

4. स्निह् धातोः, अभिलष् धातोः, युज् धातोः, आदरसूचकधातोः, आसक्त्यर्थक धातूनां च योगे सप्तमी विभक्तिः।

5. क्षिप्-मुच्-अस्-पत् धातूनां योगे सप्तमी।

6. लग्नः—व्यग्रः—तत्परः—कुशलः—निपुणः—प्रवीण-दक्षः—चतुरः आदि शब्दानां योगे सप्तमी।

## (ग) समास-(द्वन्द्व, तत्पुरुष, बहुव्रीहि)
## Samasa (Dvandva, Tatparusha and Bahuvrihi)

परस्परम् 'अन्वितानां' पदानां समसनम्=एकीभवनं समासः। अनेकस्य पदस्य एकपदीभवनं समासः इत्यर्थः। समासः सुवन्तानां भवति। समासः युगपत् द्वयोः सुबन्तयोः भवति। द्वन्द्वे तु युगपत् बहूनामपि। यथा-राजपुरुषं, राजपुरुषेण, राजपुरुषाय, राजपुरुषात्, राजपुरुषस्य इत्यादि।

### (1) द्वन्द्व- Dvandva

उभयपदार्थप्रधानो द्वन्द्वः। उत्तरपदलिङ्गश्च। द्वन्द्वःद्विधा–1. इतरेतरः, 2. समाहारः इति।

द्वन्द्वापवादः एकशेषः। अनेकपदार्थकेकपदवृत्तिः। स द्विविधः–1. सरूपैकशेपः, 2. विरूपेकशेपः इति।

| नाम | विग्रहः | समासः |
|---|---|---|
| 1. द्विपदद्वन्द्वः | रामश्च कृष्णश्च | रामकृष्णौ |
| 2. बहुपदद्वन्द्वः | हरिश्च हरश्च गुरुश्च | हरिहरगुरुवः |
| 3. समाहारः | संज्ञा च परिभाषा च अनयोःसमाहारः | संज्ञापरिभाषम् |
| 4. नित्यसमाहारः | पाणी च पादौ च एतेषां समाहारः | |

### (2) तत्पुरुष Tatparusha

"उत्तरपदप्रधानो तत्पुरुषः, उत्तरपदलिङ्गश्च" व्यधिकरणः समानाधिकरणश्चेति द्विविधः। तत्र व्यधिकरणसमासः—एकादशविधः।

| नाम | विग्रहः | समासः |
|---|---|---|
| 1. प्रथमा तत्पुरुष | अर्धं ग्रामस्य | अर्धग्रामः |
| 2. द्वितीया तत्पुरुष | गृहं गतः, कृष्णं श्रितः | गृहगतः, कृष्णश्रितः |
| 3. तृतीया तत्पुरुष | नखैः भिन्नः, मासेन पूर्वः | नखभिन्नः, मासपूर्वः |
| 4. चतुर्थी तत्पुरुष | गवे हितम्, भूतेभ्यो बलिः | गोहितम्, भूतबलिः |
| 5. पञ्चमी तत्पुरुष | चोराद् भयम्, | चोरभयम् |

contd......

| | | |
|---|---|---|
| 6. षष्ठी तत्पुरुष | राज्ञः पुरुषः, हंसानां राजा | राजपुरुषः, राजहंसः |
| 7. सप्तमी तत्पुरुष | कार्ये कुशलः, चक्रे बन्धः | कार्यकुशलः, चक्रबन्धः |
| 8. नञ् तत्पुरुष | न धर्मः, सन्देहस्य अभावः | अधर्मः, असंदेहः |
| 9. प्रादि समासः | प्रगतः आचार्यः, कुत्सितः पुरुषः | प्राचार्यः, कुपुरुषः |
| 10. उपपदसमासः | कुम्भं करोति इति | कुम्भकारः |
| 11. मयूरव्यंसकादि-समास 1. सुवन्त 2. तिङन्त | 1. नास्ति किञ्चन यस्य सः 2. क्रियापूर्वपदः, क्रियोभयपदः | अकिञ्चनः, |
| **समानाधिकरणःकर्मधारयः** | | |
| 1. विशेषणपूर्वपद | नीलो मेघः | नीलमेघः |
| 2. विशेषण उत्तरपदः | वैयाकरणः खसूचिः | वैयाकरणखसूचिः |
| 3. विशेपणोभयपदः | शीतम् उष्णम्, कृष्णश्चासौ सारङ्गञ्च | शीतोष्णम्, कृष्णसारङ्गः, |
| 4. उपमानपूर्वपदः | मेघः इव श्यामः, चन्द्र इव मुखम् | मेघश्यामः, चन्द्रमुखम्, |
| 5. उपमानोत्तरपदः | नरः व्याघ्रः इव | नरव्याघ्रः |
| 6. अवधारणापूर्वपदः | विद्या एव धनम् | विद्याधनम् |
| 7. सम्भावनापर्वपद | आम्रः इव वृक्षः | आम्रवृक्षः |
| 8. मध्यमपदलोपः | शाकप्रियः पार्थिवः | शाकपार्थिवः |
| 9. मयूरवयंसकादिः | अन्यो देशः | देशान्तरम् |
| **द्विगुसमासः** | | |
| 1. समाहारद्विगुः | त्रयाणां लोकानां समाहारः | त्रिलोकी |
| 2. तद्धितार्थद्विगुः | द्वयोःमात्रोः अपत्यं पुमान् | द्वैमातुरः |
| 3. उत्तरपदद्विगुः | पञ्च गावः धनं यस्य सः | पञ्चगवधनः |

**( 3 ) बहुव्रीहि Bahuvrihi**

अन्यपदार्थप्रधानः बहुव्रीहि। बहुव्रीहि द्विधा–1. सामान्यः, 2. विशेषः इति।

| नाम | विग्रहः | समासः |
|---|---|---|
| 1. विशेषणपूर्वपदः | नीलो मेघः | नीलमेघः |
| 2. द्वितीयार्थ बहुव्रीहिः | प्रप्तो आननदो यं सः | प्राप्तानन्दः |
| 3. तृतीयार्थबहुव्रीहिः | पीतं क्षीरं येन सः | पीतक्षीरः (बालः) |

contd......

| | | |
|---|---|---|
| 4. चतुर्थ्यर्थबहुव्रीहिः | दन्तः पशुः यस्यै सः | दन्तपशुः(रुद्रः) |
| 5. पञ्चम्यर्थबहुव्रीहिः | उद्धृतं जलं यस्मात् सः | उद्धृतजलः (कूपः) |
| 6. षष्ठ्यर्थबहुव्रीहिः | पीतम् अम्बरं यस्य सः | पीताम्बरः (हीरः) |
| 7. सप्तम्यर्थबहुव्रीहिः | बहूनि फलानि यस्मिन् सः | बहुफलः (वृखः) |
| **विशेषबहुव्रीहिः** | | |
| 1. व्यधिकरणः. | चक्रं पाणौ यस्य सः | चक्रपाणिः |
| 2. संख्योत्तरपदः | विंशतेः समीपे ये सन्ति ते | उपविंशाः |
| 3. संख्योभयपदः | द्वौ वा त्रयो वा | द्वित्राः |
| 4. सहपूर्वपदः | शिष्येण सह वर्तते इति | सशिष्यः |
| 5. व्यतिहारलक्षणः | केशेषु केशेषु गृहित्वा इदं युद्धं | केशाकेशि |
| 6. दिगन्तरालक्षणः | दक्षिणस्याः पूर्वस्याः दिशोर्य-दन्तरालम् | दक्षिणपूर्वा |
| 7. नञ् बहुव्रीहिः | अविद्यमानः पुत्रः यस्य सः | अपुत्रः |
| 8. प्रदिबहुव्रीहिः | निर्गता कृपा यस्मात् सः | निष्कृपः |
| 9. उपमानपूर्वपदः | गजाननमिव आननं यस्य सः | गजाननः |

## ( घ ) कर्तरि-कर्मणि-प्रयोगः।

Kartari and Karmani Usages.

कस्यचित् वाक्यस्य कथनशैली एव वाच्यम् इत्युच्यते। यथा–सः गृहं गच्छति अत्र सः इति कर्तृपदं गृहं इति कर्मपदं गच्छति इति क्रियापदम्। एतदेव वाक्यं भिन्नप्रकारेण वक्तुं शक्यते। यथा– तेन गृहम् गम्यते। इति एकस्य वाक्यस्य ईदृशपरिवर्तनमेव वाच्यपरिवर्तनम् इत्युच्यते। वाच्यं त्रिधा विभज्यते।

1. कर्तृवाच्यम् 2. कर्मवाच्यम् 3. भाववाच्यम्

**1. कर्तृवाच्यम्**–यस्मिन् वाक्ये क्रियापदस्य प्रयोगः कर्तृपदानुसारं भवति तत् 'कर्तृवाच्यम्' इत्युच्यते। यथा–'अहं पाटलिपुत्रं गच्छामि' अत्र 'अहम्' इति कर्तृपदं, पाटलिपुत्रं इति कर्मपदं, गच्छामि इति च क्रियापदम्। अत्र गच्छामि इति क्रियापदम् 'अहम्' इति कर्तृपदानुसारम् उत्तमपुरुषे एकवचने अस्ति। अतः एतत् कर्तृवाच्यम्। अर्थात् कर्तृपदे प्रथमा, कर्मपदे द्वितीया, कर्तृपदानुसारं क्रियाः भवति।

**2. कर्मवाच्यम्**–यस्मिन् वाक्ये कर्मपदस्यैव प्राधान्यं भवति, क्रियापदं कर्मपदानुसारं च भवति तदेव 'कर्मवाच्यम्' इत्युच्यते। यथा–'तेन विद्यालयः गम्यते' अत्र तेन इति कर्तृपदं, विद्यालयः इति कर्मपदं, गम्यते इति क्रियापदम्। अत्र 'विद्यालयः' इति कर्मपदानुसारं 'गम्यत' इति पदमपि एकवचने भवति। अर्थात् कर्तृपदे तृतीया, कर्मपदे प्रथमा, कर्मपदानुसारं क्रियाः भवति।

**3. भाववाच्यम्**—केचन धातवः अकर्मकाः भवन्ति। तेषां कर्म न भवति, कर्मणः आकांक्षा अपि न भवति। तेषां धातूनां भाववाच्यं भवति। अत्रापि कर्मवाच्यमिव कर्तृपदस्य तृतीयाविभक्तिः भवति। क्रियापदं तु सर्वदाप्रथमपुरुषे एकवचने एव भवति।

यथा–सः हसति–तेन हस्यते, अहं जीवामि–मया जीव्यते। सामान्यतया–

लज्जा–सत्त–स्थिति–जागरण–वृद्धि–क्षय–भय–जीवितं मरणम्।

शयन–क्रीडा–रुचि–दीप्त्यर्थं धातु गणन्त्वकर्मकमाहुः।

| कर्तरि | कर्मणि |
|---|---|
| 1. मधुपः ग्रन्थं पठति | 1. मधुपेन ग्रन्थः पठ्यते। |
| 2. देवदत्तः फलं खादति। | 2. देवदत्तेन फलं खाद्यते। |
| 3. सा ग्रामं गच्छति। | 3. तया ग्रामः गम्यते। |
| 4. त्वं किं करोषि। | 4. त्वया किं क्रियते। |
| 5. सः पुस्तकानि पठति। | 5. तेन पुस्तकानि पठ्यते। |
| 6. हरिः त्वां ताडयति। | 6. हरिणा त्वं ताड्यते। |
| 7. मुकुन्दः युवां पाठयति। | 7. मुकुन्देन युवां पाठ्यथे। |
| 8. प्रणवः युष्मान् भोजयति। | 8. प्रणवेन यूयं भोजयध्वे। |
| 9. सः माम् पश्यति। | तेन अहं दृश्ये। |

## (ङ) अव्यय–उपसर्गानां च परिचयः।
## Introduction to Avyaya and Upasarga

### (1) अव्यय–Avyaya

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्।**

त्रिषु लिङ्गेपु, सप्तसु विभक्तिषु, त्रिपु च वचनेषु यस्य पदस्य परिवर्तनं न जायते, तत्पदम् अव्ययमिति उच्यते। तन्नाम वाक्येषु प्रयोगकाले यत्पदं सर्वदा अपरिवर्तितं भवति, तत् अव्ययमिति।

सामान्यतः अव्ययानि द्विविधानि। यथा–1. प्रतिपदोक्तानि 2. लाक्षणिकानि चेति।

**1. प्रतिपदोक्तानि**–(क) अस्ति–आसितकेऽर्थे, (ख) अस्मि–अहमर्थे, (ग) आह–उवाच इत्यर्थे, (घ) आस–बभूव इत्यर्थे, (ङ) वाम्–युवाम् इत्यर्थे।

**2. लाक्षणिकानि**–1. कृदन्ताव्ययानि, 2. तद्धिताव्ययानि, 3. अव्ययीभावाव्ययानि,

**1. कृदन्ताव्ययानि**

(क) क्त्वा प्रत्ययान्तानि–पठित्वा, लिखित्वा, गत्वा, श्रुत्वा, इत्यादीनि।

(ख) ल्यबन्तानि–प्रक्षल्य, उपविश्य, आनीय, आगत्य, विलिख्य इत्यादीनि।

(ग) तुमुन्नन्तानि-पठितुम्, लेखितुम्, गन्तुम्, द्रष्टुम् इत्यादीनि।

(घ) णमुलन्तानि-कथङ्कारम्, गायं गायम्, स्मारं स्मारम्, यावज्जीवम्, पाठं पाठम् इत्यादीनि।

**2. तद्धिताव्ययानि**

(क) आम-नितराम्, सुतराम्, सुतमाम्, वदतितमाम् इत्यादीनि।

(ख) वति-मेघवत्, ब्राह्मणवत्, पशुवत्, सिंहवत् इत्यादीनि।

(ग) त्रल्-तत्र, यत्र, कुत्र, सर्वत्र, एकत्र, परत्र, उभयत्र, उपरत्र इत्यादीनि।

(घ) तसिल्-इतः, कुतः, यतः, ततः, सर्वतः, आदितः, मत्तः इत्यादीनि।

(ङ) दान्तम्-यदा, तदा, कदा, सर्वदा, सदा, इत्यादीनि।

(च) र्हि-तर्हि, यर्हि, कर्हि, एतर्हि इत्यादीनि।

(छ) हान्तम्-इह, कुह, इत्यादीनि।

**3. अव्ययीभावाव्ययानि**

अधिहरि, मध्येमार्गः, यथेष्टम्, यथाशक्ति, उपग्रामम्, इत्यादीनि।

**संख्यावाचक**—सकृत्, एकवारम्, एकधा, एकशःएकैकश्शः, द्विः, द्विवारम्, द्विधा/द्वेधा, द्विशः,। त्रिः, त्रिवारम्, त्रिधा/त्रेधा, त्रिशः। चतुः, चतुर्वारम्, चतुर्धा, चतुश्शः। पञ्च कृत्व, पञ्चवारम्, पञ्चर्धा, पञ्चश। षड्धा/षोढां सप्तधा। अष्टधा, शतधा, शतशः, सहस्रशः इत्यादीनि।

**कालवाचकानि अव्ययानि**—अद्य, श्व, परश्वः, प्रपरश्वः, ह्य, परह्य, पुरा, परेद्युः, अपरेद्यु, पूर्वेद्युः, अन्येद्युः उत्तरेद्युः, सद्यः, अधुना-सम्प्रति, साम्प्रतम्, इदानीम् दिवा, रात्रौ, सायम्, चिराम् इत्यादीनि।

**कतिपयानि अन्यानि अव्ययानि**—उपरि-अधः—उपरिष्टात्-अधस्तात्। अजर्सम्-अञ्जसा-अतीव-अथ किम्, अलम्। अनिशम्-अन्ततः—अपरञ्च-अपि।-इव-इति-चित्-कदाचित्-कदाचन-क्व-कदा-किम्-कथम्-क्वचित्-कुत्रचित्-किञ्चितृ-किञ्चन-किञ्चित् इत्यादीनि। सह-सार्धम्-समम्-साकम्-सहसा-साक्षात्-समीपम्-उच्चैः-नीचैः—शनैः—विना-तथा हि-निकषा इत्यादीनि अनेकानि अव्ययानि संस्कृत वाङ्मये वर्तन्ते।

**(2) उपसर्गाः** Upasarga

संस्कृतभाषायां वाक्यप्रयोगकाले व्याकरणनियमाः सम्यक् अवधेयाःतत्रापि उपसर्गाणां प्रयोगः क्रियते चेत् क्रियापदेपु विशेषावधानम् अनिवार्यम्। उपसर्गाणां योगेन धातुपु यादृश परिवर्तनं जायते, तस्य समुचिततया अर्थावगमनं आवश्यकं भवति। संस्कृतव्याकरणे आहृत्य द्वाविंशति(22) उपसर्गाः वर्तन्ते। तेच यथा-''प्र, परा, अप, सम्, अनु अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप'' इति।

'प्रादयः' 'उपसर्गाःक्रियायोगे' इति सूत्रद्वये उक्तं पाणिनिना-प्र, परा, इत्यादयः धातूनां योगे उपसर्गसंज्ञकाः भवन्ति। उपसर्गाणां योजनेन धातोः अर्थोऽपिकुत्रचित् परिवर्तते। यथा-

**उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।**
**प्रहाराहारसंहारविहारपरिहारवत्** ।। इति।

अर्थात् 'हृधातोः अर्थः हरणमिति। परन्तु 'प्र' उपसर्गस्य योगेन प्रहारः इति रूपम्, अर्थस्तु 'ताडनम्' इति। 'सम्' उपसर्गयोगेन संहार इति रूपम्, अर्थस्तु मारणमिति। आङ् उपसर्गयोगेन 'आहारः इति रूपम्, अर्थस्तु भोजनमिति।' वि' उपसर्गयोगेन विहारः इति रूपम्, अर्थस्तु भ्रमणमिति। 'परि' उपसर्गयोगेन 'परिहारः' इति, अर्थस्तु त्यागः इति।

एतादृशाः महत्वपूर्णाः उपसर्गाः त्रिधा अर्थं प्रगयन्ति। यथा–

1. कश्चित् उपसर्गः धात्वर्थ बाधते। (अन्यार्थं बोधयति)
2. कश्चित् उपसर्गः धात्वर्थम् अनुवर्तते। (धातोरेव अर्थं गमयति)
3. कश्चित् उपसर्गः धात्वर्थम् विशिनष्टि। (विशेषार्थं बोधयति विशेषणत्वेन)

**प्राद्युपसर्गाणां योगेन क्रियापदानां रूपाणि–**

| | | |
|---|---|---|
| 1. प्र– | प्रकाशते | सूर्यः स्वकिरणैः प्रकाशते। |
| 2. परा | पराभवति | पण्डितात् मुर्खः पराभवति। |
| 3. अप | अपगच्छति | धर्मचिन्तनेन पापम् अपगच्छति। |
| 4. सम् | सम्भवति | परिश्रमेण सर्वकार्यं सम्भवति। |
| 5. अनु | अनुभवति | दरिद्रः दुःखम् अनुभवति। |
| 6. अव | अवरोहति | वानरः वृक्षात् अवरोहति। |
| 7. निस् | निस्तरति | ब्रह्मज्ञानी भवसागरात् निस्तरति। |
| 8. निर् | निर्गच्छति | क्षेत्रात् जलं निर्गच्छति। |
| 9. दुस् | दुश्चरति | शिक्षायाः अभावेन सर्वे दुश्चरन्ति। |
| 10. दुर् | दुर्भाषते | खलः दुर्भाषते। |
| 11. वि | विकसति | सरोवरे कमलानि विकसन्ति। |
| 12. आङ् | आरोहति | यात्री यानम् आरोहति। |
| 13. नि | निवारयति | सज्जनः पापात् निवारयति। |
| 14. अभि | अभिजानाति | भरतं को वा न अभिजानाति। |
| 15. अपि | (अ) पिदधाति | अनुजा गृहस्य द्वारं पिदधाति। |
| 16. अति | अतिक्रामति | शिष्याः स्वमेधया गुरुम् अतिक्रामति। |
| 17. अधि | अधिगच्छति | छात्रः व्याकरणम् अधिगच्छति। |
| 18. प्रति | प्रतीक्षते | प्रयाणिकः यानं प्रतीक्षते। |
| 19. सु | सुशोभते | विद्वान् सभायां सुशोभते। |
| 20. उद् | उद्घाटयति | माता द्वारम् उद्घाटयति। |
| 21. परि | परिवर्तते | संसारः नित्यं परिवर्तते। |
| 22. उप | उपकरोति | ईश्वरःभक्तान् अवश्यम् उपकरोति। |

**(च) व्याकरणशिक्षणस्य पाठ्यक्रमः**

| | |
|---|---|
| 1. वर्णमाला | उच्चारणस्थानम्, शुद्धोच्चारणम्, वर्णानां वर्गीकरणम्, |
| 2. सन्धिः | स्वर-व्यञ्जन-विसर्गादयः। |
| 3. नामशब्दाः | संज्ञा, सर्वनाम, विशेषणादयः, |
| 4. लिङ्गम् | 1. पुल्लिङ्ग, 2. स्त्रीलिङ्गः, 3. नपुंसकलिङ्गश्च। |
| 5. वचनम् | एकवचनं, द्विवचनम्, वहुवचनञ्च। |
| 6. कारकः | कर्ता कर्म च करणं सम्प्रदानं तथैव च, अपादानाधिकरणमित्याहु कारकाणि षट्। |
| 7. धातुपाठः | प्रथमं भ्वादिगणः, पश्चात् अन्यगणधातूनां पाठः, क्रमिक-परस्मै-आत्मने-उभयपदी-पञ्चलकार-अन्य-लकाराणां ज्ञानम्। |
| 8. समासः | (1) अव्ययीभावः, (2) तत्पुरुषः, (3) बहुव्रीहिः, (4) द्वन्द्वः। |
| 9. प्रत्ययः | (1) कृदन्तः, (2) तद्धितः, (3) स्त्रीप्रत्ययाः। |
| 10. उपसर्गाः | द्वाविंशति उपसर्गाः। यः शब्दांशः शब्दानां धातुनां वा पूर्वं पूर्वं प्रयुक्तं भवति। |
| 11. वाक्यरचना | कर्तृवाच्य, कर्मवाच्य, भाववाच्य, विभक्तिप्रयोगादि कार्यम्। |

## (छ) शब्दरूपधातुरूपाणां कण्ठस्थीकरणं तस्य महत्त्वञ्च।

## Shabdarupa & Dhaturupa–their importance of by hearting and Techniques of by hearting

वेदकाले ततः परमपि कण्ठस्थीकरणस्य प्रमुखं स्थानमासीदिति। अद्यापि व्याकरणे कण्ठस्थीकरणस्य महत्त्वं सर्वैः स्वीक्रियते। विशिष्टसंस्कृतस्य तन्निष्ठानां शास्त्राणां च विकासः कण्ठस्थीकरणेन एव अभवत्। प्राचीनकाले ऋषयः, विद्वांसश्च शास्त्राणि मौखिकरूपेणैव सम्परिवर्तितवन्तः, वेदकाले लिपिज्ञानं नासीत्। अतः ते कण्ठस्थीकरणस्योपरि आश्रिता आसन्। यस्य सर्वं शास्त्रं वाचोविधेयं आसीत् तस्य समाजे महद् गौरवमासीत्। लिपिज्ञानानन्तरमपि कण्ठस्थीकरणं बहवः मन्यन्ते जनाः।

**पुस्तकस्था तु या विद्या परहस्तगतं धनम्।**
**कार्यकालेसमायाते न सा विद्या न तद्धनम्।।**

इति श्लोकेन वाचोविधेयतायाः वैशिष्ट्यं प्रतीयते। अद्यापि संस्कृतक्षेत्रे कण्ठस्थीकरणस्य प्राधान्यं दृश्यते। किं कण्ठस्थीकरणेन विना ज्ञानार्जनं न भवति! किमर्थं व्याकरणतत्त्वानि वाचोविधेयानि स्युः? इति प्रश्नाः प्रकृत्योदिताः। एतेषां विचारात्पूर्वं किं नाम कण्ठस्थीकरणम्? का च स्मृतिः? स्मृतेः तत्त्वानि च कानि? इति किञ्चित् स्पष्टयिष्यामः। एतञ्च साहाय्यमाचरेत्।

### (ज) स्मृतिः, कण्ठस्थीकरणं च

1. पूर्वाधीतविषयस्मरणप्रक्रियया सम्बद्धा स्मृतिः।

2. अनुभवानां धारणं, चेतनाक्षेत्रे पुनरानयनं नाम स्मृतिः।

3. कमपि विषयं विज्ञाय मनसि धृत्वा, ततः आवश्यके समये पुनः प्रयोग एव स्मृतिरिति व्यवह्रियते। स्मृतिश्च बहुधा वर्तते। यथा-"व्यक्तिगता, स्थायिनी, तात्कालिकी, सक्रिया, निष्क्रिया, तार्किकी, यान्त्रिकी, अभ्यासजन्या," इति बहवः स्मृतिप्रभेदाः। तत्रस्माकं विवक्षितभेदाः—तात्कालिकी, सक्रिया, तार्किकी, यान्त्रिकी, अभ्यासजन्या चेति। एते व्याकरणतत्त्वानां कण्ठस्थीकरणे महदुपकुर्वन्ति।

तात्कालिकी स्मृतिरस्थायिनी वर्तते। स्थिरीकर्तुं सक्रियस्मृतिद्वारा पुनस्मरणशक्तिं संवर्ध्य, तार्किकस्मृत्या परिष्कृत्य, यान्त्रिक्या, वारम्वारमावृत्तिं विधाय अभ्यासेन प्रयोगे आनयनमिति प्रक्रियाऽनुष्ठीयंते अस्माभिः। अत्र स्मृतिप्रक्रियायां मूलतत्त्वानि अन्तर्निहितानि वर्तन्ते तानि च-

1. शिक्षणम्,
2. धारणम्,
3. स्मरणम्,
4. प्रत्यभिज्ञानमिति।

कश्चन् विषयः ज्ञातपूर्वः अधीतपूर्वो वा स्मृतिपथमागच्छेत्। अशिक्षितः अज्ञातो वा विषयः कथं स्मरणयोग्यः भवेत्। अतः प्रथमं शिक्षणं, ततः धारणम्। शिक्षितः विषयः मनसि धार्यते। धृत एव स्मृतिपथमायाति। स एव प्रत्यभिज्ञायते। अत्र तत्त्वेषु एकं दोषयुक्तं भवति चेदपि प्रत्यभिज्ञानं न जायते। तथाप्यत्र धारणमतिमहत्त्वपूर्णं भवति। धारणमुपजीव्यैव पुनस्स्मरणं प्रत्यभिज्ञानं च वर्तते। धारणं च मस्तिष्कं, स्वास्थ्यं, रुचिः, विचारःइति विषयान् अवलम्ब्योपतिष्ठते। यतः—

1. स्वस्थः मानवः शिक्षितं विषयं चिरं स्मर्तुं शक्नोति।

2. यथाविधि शिक्षितविषयः स्थायी भवति।

3. आवृत्तिः धारणं प्रबलयति।

4. रुचिः, अवधानं च धारणं पोषयतः।

5. सरलः, रोचकश्च विषयः चिरं तिष्ठति।

6. भावात्मकविषयाः स्थायिनः भवन्ति। एवं एते विषयाः धारणाशक्तिं पोषयन्ति। यदि धारणं सम्यक् न जायेत तर्हि प्रत्यभिज्ञानं दोषयुक्तं भवेत् कदाचिन्न जायेत।

स्मृतेरेकः प्रकारः कण्ठस्थीकरणमिति। वस्तुतः स्थायिस्मृतिरेव वाचोविधेयता भवति। कदाचिदस्माभिरनुभूयते "अन्तः कोटकोटायते बहिर्वक्तुं न शक्यते" इति। किं तत्र कारणम्? विषयः मस्तिष्के वर्तते। परन्तु पुनरस्मरणप्रक्रिया सम्यक् न जायते, धारणा- शक्तेः तारतम्यमेव

तत्र कारणम्। त्वरया यदि स्मरामः तर्हि सः विषयः जिह्वाग्रे वर्तते इत्यर्थः। अर्थात् स विषयः कण्ठस्थः वर्तते। विषयस्य कस्यचिद् जिह्वाग्रे स्थापयितुं या प्रक्रिया आत्मसात्कृता भवति सैव प्रक्रिया कण्ठस्थीकरणमिति नाम्ना प्रथते। अतः कण्ठस्थीकरणं धारणस्य संवर्धकं, पुनरस्मरणस्य पोषकं, प्रत्यभिज्ञानस्य कारणं च भवति।

**(झ) व्याकरणे कण्ठस्थीकरणस्यावश्यकता-**

तत्रेदं विचार्यते व्याकरणे कण्ठस्थीकरणस्य काऽऽवश्यकतेति। अत्र रामशकल पाण्डेयः कथयति यत्-"व्याकरणे क्रियात्मकं, निगमनं, आगमनं, औपचारिकमिति किमपि वा शिक्षणं भवेन्नाम, किन्तु इदमहं स्पष्टयितुं इच्छामि यत् संस्कृतभाषामवगन्तुं, सम्यक् प्रयोक्तुं च व्याकरणनियमानां शब्दरूपाणां धातुरूपाणां च कण्ठस्थीकरणम् अनिवार्यम्"इति व्याकरणं प्रक्रियानिष्ठं वर्तते। संस्कृतमिति शब्दस्य प्रकृतिप्रत्ययविचारः इति। यद्यपि संस्कृतं परिष्कृतं इत्यप्यर्थः वर्तते। तत्राऽपि इदमेव तात्पर्यं व्याकरणनियमैः इति। व्याकरणं च कण्ठस्थीकरणमाधारीकृत्य वर्तते।

**(ञ) व्याकरणे कण्ठस्थीकरणस्य कारणानि-**

1. संस्कृतभाषा कुत्राऽपि प्रान्ते व्यवहारे न वर्तते। अतः मातृभाषावत् स्वाभाविकं शिक्षणं न सम्भवति।
2. भाषा स्वतः क्लिष्टा, जटिला च वर्तते। सरलीकरणं भवितुमर्हतीत्यन्यदेतत्।
3. इतरासु भारतीयभाषासु निर्दिष्टरूपेण प्रत्ययाः सन्ति। संस्कृते न तथा। हिन्दीभाषायां -"ने, को, से, के लिए, से, का के की, में पर" इति विभक्तयः प्रत्यययोजनेन सिध्यति। संस्कृते पुनः अकारेकारोकारान्तादिभेदेन तत्राऽपि स्त्रीलिङ्ग-नपुंसकलिङ्गभेदेन विभक्तीनां परिनिष्ठितं रूपं परिवर्तितं भवति।
4. क्रियापदान्यपि परस्मैपदादिभेदेन विभक्तानि वर्तन्ते। तत्रापि मानुष्यां कल्पनामतिरिच्य रूपाणि बहुधा परिवर्तनं प्राप्नुवन्ति।
5. अपवादनियमानां बाहुल्यं दृश्यते। भगवद्भिराचार्यैः पाणिनिकात्यायनपतञ्जलिभिर्नियमीकृतत्वात् अपवाद नियमाः असंख्येयास्सन्ति इति अनुग्रहीता जनाः।
6. लिङ्गपरिज्ञानं नियमानां कण्ठस्थीकरणेनैव सिध्यति।
7. प्रयोगक्षमता कण्ठस्थीकरणेनैव सिध्यति।
8. अव्ययनामुपसर्गानां च नानार्थकता।
9. कृदन्तानां तद्धितानां यथार्थं यथाशक्ति प्रयोगः कण्ठस्थीकरणमुपजीव्यैव वर्तते।
10. विशेषतः परम्परागतमहाविद्यालयेषु कण्ठस्थीकरणेन विना शास्त्रशिक्षणं न सम्भवति। यतः संज्ञानां, अनुवृत्त्यध्याहारादीनां, अन्तरङ्गबहिरङ्गादीनां विचाराणां च कृते सूत्राणां कण्ठस्थीकरणमनिवार्यं भवति।

एवं व्याकरणे पूर्वोक्तानां काठिन्यानां समाधानं कण्ठस्थीकरणमेव। अत्रेदमवधेयं न अस्माभिः

दोषारोपणं संस्कृतस्योपरि कृतम्। किन्तु वास्तविकतां प्रदर्श्य तत्र कण्ठस्थीकरण-स्यावश्यकताप्रतिपादनम् एव अस्माकमुद्देश्यमिति।

### (ट) मनोवैज्ञानिकैः प्रतिपादितस्मरणविधय

मनोवैज्ञानिकद्वारा प्रतिपादित कण्ठस्थीकरण (स्मरणम्) विधयः अत्र उपयोक्तुं योग्याः वर्तन्ते। येन कण्ठस्थीकरणप्रक्रियाः सुगमाः भविष्यन्ति। यथा-

1. **पूर्णविधिः** [Whole Method] अत्र स्मरणीयः विषयः पूर्णरूपेण वारं-वारं पठ्यते। यथा-देवशब्दस्य कण्ठस्थीकरणं पूर्णतया सप्तविभक्तीः वारं-वारं पठित्वा साध्यते। अयं प्रौढ़ानां, विशिष्टबालानां च कृते बहूपकरोति।

2. **खण्डविधिः** [Part Method] अत्र विषयवस्तु खण्डशः विभज्य कण्ठस्थीकुर्यात् छात्रः। यथा-देवशब्दः प्रथमं "देवः देवौ देवाः" इति प्रथमखण्डं, ततः—"देवं देवौ देवान्" इति द्वितीयखण्डं इति क्रमेण खण्डशः कण्ठस्थीकरणं कुर्यात्।

3. **मिश्रितविधिः** [Mixed Method] पूर्वोक्तयोः द्वयोः मिश्रितरूपेण प्रयोगः भवति। प्रथमं पूर्णतया विषयवस्तु पठित्वा ततः खण्डशः विभज्य रटनं विधाय, पुनः पूर्णतयापठेच्छात्रः।

4. **प्रगतिशीलविधिः** [Progressive Method] पाठ्यवस्तु खण्डेषु विभक्तं भवति। तदनन्तरं प्रथमखण्डस्य मननं, तदनु प्रथमखण्डेन सह द्वितीय खण्डस्य मननं, ततः प्रथमद्वितीयाभ्यां सह तृतीयखण्डस्य इति प्रगतिशीलं भवति रटनम्। यथा इण् गतौ धातौ विधिलिङ् रूपाणि नवखण्डेषु विभज्यते। यथा-"इयात्, इयाताम्, इयुः, इयाः, इयातं, इयात, इयाम् इयाव इयाम, " इति त्रयाणां क्रमेण कण्ठस्थीकरणं क्रियते।

5. **समयव्यवधानविधिः** [Spaced Method] अत्र प्रक्रिया या काऽपि वा भवेत्। परन्तु एकमंशं पठित्वा किञ्चित् कालानन्तरं तमंशं स्मरेत् बालः। एवं नियमितरूपेण मननं भवति। वस्तुतः अत्र रटितस्य विषयस्य परीक्षणमेव। इयं प्रक्रिया स्मृतिं चिरं जीवयति।

6. **निरन्तरविधिः** [Unspaced Method] पूर्वोक्तस्य विपरीतं प्रचलत्यम्। मध्ये समयव्यवधानं न भवति। अनुस्यूतरूपेण विषयवस्तुनः रटनं भवति।

**क्रियात्मकविधिः** [Active Method] अत्र बालः विषयवस्तु वारं-वारं वाचा उच्चैः उच्चार्य कण्ठस्थं कुर्यात्। सः कण्ठस्थीकरणकाले सक्रियः भवेत्। यथा-"इयं लता, इमे लते, इमाः लताः" इति उच्चैः उच्चार्य शब्दरूपाणि रटेत्। एतेनबालानामुच्चारणमपि शोधितं भवति।

7. **मौनविधिः** [Passive Method] पूर्वविधेः विपरीतं प्रचलति। मौनवाचनेन कार्यं साधयति बालः।

8. **वृत्तविधिः** [Recitation Method] विषयवस्तुनः पठनं सस्वरं लयसहितं च भवेत्। वालेभ्यः लाभदायकोऽयं विधिः। बालोद्यानपाठशालासु यथा A B C D वर्णानां शिक्षणं भवति तथा शब्दरूपाणि, धातुरूपाणि च शिक्षयेच्छिक्षकः। तथैव बालाः सस्वरं कण्ठस्थीकर्तुं

प्रेरिताः भवेयुः। "एक दो तीन" इति हिन्दीचलचित्रवत् सस्वरं सलयं च धातुरूपाणि शब्दरूपाणि कण्ठस्थीकर्तुं छात्राः प्रोत्साहनीयाः। वस्तुतः संस्कृते शब्दरूपाणि लयसहितान्येव वर्तन्ते इति तु सुविदितमेव।

**9. आवृत्तिविधिः** [Repetition Method] वेदाध्ययनं यथा भवति तथाऽत्र बालकाः रटेयुः। प्रथमं अध्यापकः वदेत्, बालाः तमनुकुर्युः। ततः शिक्षितांशं बहुवारं आवृत्तिद्वारा स्मरेयुः।

**(ठ) उपसंहारः**

एवं पूर्वोक्तविधिभिः व्याकरणांशानां कण्ठस्थीकरणं सुलभेन साध्यं भवति। परन्तु कण्ठस्थीकरणं कानिचन् तत्त्वान्यवलम्ब्य वर्तते। तानि च अवधानं, रुचिः, अभ्यासः, अवगमनं, सारल्यं, छन्दोबद्धता, लघुता, वयः, वर्तते। अध्यापकः एतानि तत्त्वानि मनसि निधाय विषयवस्तु परिवर्त्य उपयुक्तरीत्या समुपस्थापयेत्। यतः कण्ठस्थीकरणेन विना व्याकरणतत्त्वानि प्रयोगसाध्यानि न भवन्ति। डा० रामशकलपाण्डे महोदयः लिखति–

"कण्ठस्थीकरणमद्य मनोविज्ञानिनः दुष्यन्तु नाम, परन्तु स्मृतिः मेधायाः अनिवार्य-लक्षणं भवति। मनोविज्ञानिनः अपि एतदङ्गीकुर्वन्ति सार्थककण्ठस्थीकरणे नास्ति दोषः इति। विषये अधिकारः स्मृतिद्वारा एव भवति। कण्ठस्थीकृत्य विषयमवगच्छेत्, विषयमवगत्य वा कण्ठस्थं कुर्यात् बालकः। अतः संस्कृताध्यापकाः विषयेषु अधिकारप्राप्तये महत्त्वपूर्णव्याकरण-नियमान् कण्ठस्थीकर्तुं यथाविधि छात्रान् प्रोत्साहयेयुः।

卐 卐 卐

# 16

# व्याकरणशिक्षणविधयः

# Methods of Teaching Vyakarana

## (क) परम्परागतविधिः, आगमननिगमनविधिः, ह्युरिस्टिकविधिः, प्रयोजनविधिः।

Traditional Method, Inductive-Deductive Method, Heuristic Method and Project Method.

व्याकरण पद्धत्यां व्याकरणस्य मुख्यं स्थानं वर्त्तते। यदि कोऽपि व्याकरणं सम्यक्तया जानाति तर्हि सः भाषायां अधिकारम् अवश्यं प्राप्नुयात्। अस्यां पद्धतौ–1. आगमनविधिः 2. निगमनविधिः, 3. परम्परागतविधिः, 4. समस्याविधिः 5. मौखिकविधि, 6. व्याख्या विधिः, 7. ह्यूरिष्टिकविधिः 8. प्रयोजनविधिरिति बहवो विधयः प्रयुज्यमानाः वर्तन्ते। यथा–

### (क) आगमनपद्धतिः (विधि)

[Inductive Method]

**अर्थः**—उदाहरणानि प्रस्तूय ततो नियम निर्धारणन्नाम आगमनम्। जोसफलेण्डन् प्रतिपादयति– ''यदि छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वा अस्माभिः प्रस्तूयन्ते, ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिरनुसर्यत इत्यर्थः''। प्रयोग प्रामाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रियते। इयमेका मनोवैज्ञानिकी पद्धतिः। अनया पद्धत्या सर्वासु भाषासु मनोवैज्ञानिक- रीत्या व्याकरणं अध्यापयितुं शक्यते। लक्ष्यं प्रदर्श्य लक्षणपरिकल्पन्नाम आगमनम्। लोके लक्ष्यमेव प्रथमं गण्यम्। ''असत्येवर्त्मनि स्थित्वा ततः सत्यं समीहते'' इति भर्तृहरीणां कथनं चरितार्थत्वे–लक्ष्यं प्रथमं लक्षणं तदनुयायि इति फलति। पाणिनिना लक्ष्यमवलम्ब्यैव लक्षणमकारीत्यागमनमेव प्रक्रियाग्रन्थाः लक्ष्यप्रदर्शनार्थमेव प्रवृत्ताः, ततः लक्षणसमन्वय इति तेषां क्रमः। एवं भट्टिकाव्यमित्यादयः ग्रन्थाः आगमनविधिमनुसरन्ति। तत्र प्रयोगस्य प्राधान्यम्। न्यायशास्त्रेऽपि ''इन्द्रियार्थसन्निकर्षजन्यज्ञानं प्रत्यक्षम्'' इति लक्षणमुक्त्वा यदनुव्याख्यान द्वारा सोदाहरणं

विशदी क्रियते। साहित्यशास्त्रेऽपि "**गद्यपद्य मयं काव्यं चम्पूरित्यभिधीयते**" इति परिकल्पनानन्तरं तथा विधस्य काव्यस्य उत्पत्तिरिति। एवमेव "वाक्यं रसात्मकं काव्यम्" "रमणीयार्थ प्रतिपादकः शब्दः काव्यम्" इति लक्ष्यमनुलक्षण-प्रकल्पनम्। भगवान् पतञ्जलिरपि "लक्ष्यलक्षणं व्याकरणम्" इति आगमनविधिं स्वीकुर्वन्ति। छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वाऽस्माभिः प्रस्तूयन्ते। ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिः अनुसर्तव्यः इत्यर्थः। प्रयोग प्रमाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रियते। तत्सम्बन्धिनी तत्त्वानि उदाहरणानि वा निरीक्ष्य, तुलनां वर्गीकरणं च विधाय स्वयमेव नियमानां निर्धारणं छात्राः कुर्युः। अत्र विधौ ज्ञातादज्ञातं प्रति, विशेपात्सामान्यं प्रति, स्थूलात्सूक्ष्मं प्रति, इत्यादीनि शिक्षण-सूत्राण्यन्तर्निहितानि वर्त्तन्ते। Induce इति आंग्लधातोः अंगीकरणम् तत् Induce ment इति व्यवह्रियते। Induce ment माध्यमेन या पद्धतिः प्रचलति सा आगमन पद्धतिः [Inductive method] इति व्यवह्रीयते। समानधर्मसहितपदसमूहान् समानवर्गेषु वर्गीकृत्य छात्राणां साहाय्येन तानि श्यामफलके लेखापनीयानि। यथा- नर+इन्द्र=नरेन्द्र, देव+इन्द्र=देवेन्द्रः, लंका+ईश=लंकेशः, पुरूष+उत्तमः= पुरूषोत्तमः, यथा+उचितम्=यथोचितम्, महा+ऋषिः=महर्षि, अत्र प्रथम पदस्यान्ते विद्यमान अज्वर्णः कः? द्वितीय पदस्यादौ विद्यमान अज्वर्णः कः इति प्रष्टव्यः। प्रतिपूर्वपदस्यान्ते ह्रस्व/दीर्घ अकारः स्यात्। प्रत्युत्तरपदस्य आदिमवर्ण अज्वर्णेषु कोऽपि वर्णः स्यात्। ( अ आ+इ ई=ए, अ आ+उ=ओ, अ आ+ऋ=अर्, ) ह्रस्व दीर्घ अकारस्य ह्रस्व दीर्घ इ उ ऋ वर्णाः परतो भवन्ति चेत् क्रमशः ए ओ अर् आदेशाः भवन्ति, एतदपि छात्रैः स्वयं निष्कासनीयम्।

**आगमनविधेः सोपानानि**—अत्र प्रमुखतया चत्वारि पदानि शिक्षणोपयोगीनि अनुस्रियन्ते। यथा-

**1. उदाहरण प्रस्तावः**—छात्राणां समक्षं समानोदाहरणानि प्रस्तूयात् शिक्षकः। व्याकरण-शिक्षणावसरे अध्यापकः गणेशः, छात्रोपस्थिति, महर्षि, शब्दान् प्रस्तौति। छात्राः सावधानं उदाहरणानि श्रृण्वन्ति, पश्यन्ति, पठन्ति च।

**2. निरीक्षणम्**—प्रस्तुततत्त्वानां तुलनात्मकं निरीक्षणमेव द्वितीयं पदं भवति। प्रस्तुतोदाहरणे छात्राः विश्लिष्य विवेचयन्ति।

**3. नियमनिर्धारणम्**—तत्त्वानां निरीक्षणात्परं नियमपरिकल्पनन्नामेव तृतीयं पदम्। पूर्वोक्तान् शब्दान् विच्छिद्य नियमं परिकल्पयन्ति। "अकाराकाराभ्यां सह इकारईकारयोः मेलनेन एकारः एकादेशः भवति। एवं अकाराकाराभ्यां सह उऊकारयोः मेलनेन ओकारः भवति। तथा अकाराकाराभ्यां सह ऋकारस्य मेलनेन 'र' इति च भवति" इति नियमं निर्धारयन्ति। **4. परीक्षणम्**-निर्धारितस्य नियमस्य लक्ष्ये पुनः परीक्षणमेव चतुर्थ सोपानम्। यथा-उपेन्द्र, गंगोदकम्, राजर्षि, इत्यादि नवोदाहरणैः स्वीकृतं नियमं परीक्ष्य प्रमाणयन्ति।

**आगमनपद्धत्याः गुणा**

1. छात्राः सूत्राणि सूत्रार्थानि च स्वयं जानीयुः।

2. सूत्र निर्माणं परिभाषा निर्माणं च स्वयं क्रियते, अत: बहुकालपर्यन्तं विस्मर्तुमवकाशो नास्ति।
3. सूत्राणि परिभाषाश्च स्वयं निर्मिता इति हेतो: कण्ठस्थीकरणस्यावश्यकता नास्ति।
4. उदाहरणान्याधारीकृत्य व्याकरणाध्यापनं प्रचलेत्।
5. अनया व्याकरणाध्ययने छात्रा: अभिरूचिं प्रदर्शयेयु:।
6. स्वयं कृते अधिकतया प्राधान्यं भवेत्।
7. सन्दर्भानुसारम् व्याकरणमधीयते।
8. पाठ्यपुस्तकानां साहाय्येन व्याकरणाध्ययनं भवति, अत: अध्ययने छात्रा: भीता न भवेयु:।
9. व्याकरणाध्ययनाय एषा सुलभा पद्धति:।
10. लक्ष्यं प्रदर्श्य लक्षणं कल्प्यते अत: छात्रा: रुचिं प्रदर्शयेयु:।
11. छात्रा: अत्यन्तं सक्रिया: भवन्ति।

**आगमनपद्धत्यां विद्यमाना: दोषा:**

1. अध्यापकानां कृते क्लेश: अधिक: भवति अस्यां पद्धत्याम्।
2. शास्त्रगतानि उदाहरणानि ज्ञातुमवकाशो नास्त्यस्याम्।
3. व्याकरण शिक्षणे समय: बहु: अपेक्षित: भवेदस्याम् पद्धत्याम्।
4. सम्बद्धोदाहरणानामनुस्मरणमपि क्लेश: भवेत् छात्राणाम्।

**(ख) निगमनविधि:**

(Deductive Method)

**अर्थ**–लक्षणमनुलक्ष्यप्रदर्शनन्नाम निगमनविधिरिति। जोसफ लेण्डन् स्पष्टयति- "शिक्षणं निगमनविधिद्वारा प्रथमं परिभाषा नियमो वा पाठ्यते। तत: सावधानमर्थ व्याख्याय, प्रयोगान् प्रदर्श्य तत्वानि स्पष्टीक्रियन्ते" इति। "अस्मिन् विधावध्यापक: प्रथमं नियमान् समुपस्थापयति। काचनोदाहरणानि प्रदर्श्य उक्तनियमान् लक्ष्ये समन्वेति"। लक्षणात् लक्ष्यं प्रति गच्छति निगमनविधि:। नियमान् प्रस्तूय प्रयोगप्रदर्शनं निगमनं भवति। लक्षणमनु लक्ष्य प्रदर्शनन्नाम निगमनविधिरिति। वस्तुत: आगमन-निगमन-पद्धत्योर्मध्ये विरोध: न भवति। आगमनपद्धत्या: कृते निगमन पद्धति: पूरका भवितुमर्हति। सूत्रं सम्पूर्णतयावगाहनपर्यन्तं आगमन-पद्धतिराश्रयणीया, तदनन्तरम् निगमन-पद्धति: आश्रयणीया। निगमन पद्धते: परम्परागत पद्धति:: सूत्रपद्धति: लक्षणपद्धतिरिति नामान्तराणि सन्ति।

Deduce इति आंग्ल भाषाया: धातु: अस्य मूलम्। तेन Deductive method प्रचलन्ति। सूत्रमनुसृत्य लक्ष्यानुस्मरणम् इति अस्यार्थ: भवति। विधिरयं सामान्याद्विशेषं प्रति, काल्पनिकात्सत्यं प्रति, स्थूलात्सूक्ष्मं प्रति, इत्यादीनि शिक्षण-सूत्राण्याश्रित्य वर्तते। उपरि निर्दिष्यनां समालोचनेनेदं स्पष्टं प्रतीयेत यत् निगमनन्नाम नियमानां, सूत्राणां, लक्षणानां वा प्रस्तावानन्तरं उदाहरणरूपेण प्रयोगप्रदर्शनमेवेति। यथा-"इको यणचि" इत्यत्र "इक: स्थाने यण् स्याद् अचि परे" इति नियममुक्त्वा 'प्रति+अपि' इत्युदाहरणे नियमस्य समन्वय: क्रियते निगमनविधौ।

**निगमनविधेस्सोपानानि**—अस्य विधेः प्रयोगः क्रमबद्धरूपेण कानिचन् सोपानान्याश्रित्य क्रियते। तत्रक्रमे अधोलिखितपदानि भवितुमर्हन्ति–

**1. नियमः**—छात्राणांपुरतः कस्यचित्नियमस्योपस्थापनं क्रियते। यथा–शिक्षकः ''नमः स्वस्ति स्वाहास्वधाऽलं वषट्योगाच्च'' इति नियममुपस्थापयति।

**2. स्पष्टीकरणम्**—उक्त नियमस्य सरलैः वाक्यैः स्पष्टतया प्रतिपादनमेव भवति। यथा–पूर्वोक्तस्य सूत्रस्य स्पष्टप्रतिपादनं एवं भवितुमर्हति–नमः, स्वस्ति, स्वाहा, स्वधा, अलं, वषट् इति पदानां योगे चतुर्थी विभक्तिरेव भवति।

**3. प्रयोगप्रदर्शनम्**—उक्त नियमस्य लक्ष्ये समन्वयः अत्र क्रियते। यथा– प्रकृतोदाहरणे शिक्षकः **''हरये नमः, पुत्राय स्वस्ति, अग्नये स्वाहा, पितृभ्यः स्वधा, इन्द्राय, वषड्''** इति प्रयोगान् प्रदर्श्य पूर्वोक्तं नियमं समन्वेति। ततः नियमं स्पष्टयति च।

**4. पुनः परीक्षणम्**—पृथगुदाहरणं प्रस्तूय नियमस्य परीक्षणं विधीयते। यथा– व्यवहारे एषां शब्दानां योगे नियमः कथं प्रवर्तते इति दर्शयितुं शिक्षकः व्यावहारिकाणि वाक्यानि उपस्थापयति।''शिवाय नमः, शिष्याय स्वस्ति, ब्रह्मणे नमः, ''इति व्यवहारान् प्रदर्श्य नियमस्य पुनः परीक्षणं कारयति। उदाहरणानि प्रस्तौतुं छात्रानपि प्रेरयति।

**निगमनपद्धत्याः गुणाः**

1. अनया पद्धत्या स्पष्टतया व्याकरणमध्यापितुं शक्यते।
2. छात्राःअनया पद्धत्या व्याकरणनियमान् ज्ञात्वा सुशब्दापशब्दनिर्णायकाःभवितुं शक्नुवन्ति।
3. एषा मनोविज्ञाननियमविरूद्धा तथापि उच्चकोटौ विद्यमानाः बहवः वैयाकरणाः अनया पद्धत्या एव व्याकरणमधीत्य प्रख्याताः जाताः।
4. अनया पद्धत्या व्याकरणमधीताश्छात्राः भाषागताशुद्धीः न्यूनं कुर्युः। अल्पं लिखतु वदतु वा तेषां लेखने पठने च दोषाः न स्युः।
5. अस्यां भाषायां विशिष्ट ज्ञानसम्पादनार्थं एषा पद्धतिरावश्यकी इति।
6. अध्यापकस्य कार्यं सरली करोति।
7. छात्राः सक्रियाः भवन्ति, अल्पीयसि काले ज्ञानं प्रापयन्ति।
8. स्मरणशक्तिः वर्धयति, अतः छात्राः नियमान् कण्ठस्थं कुर्वन्ति।

**निगमनपद्धत्याः दोषाः**

1. पद्धतिरेषा अमनोवैज्ञानिकी।
2. अस्यां पद्धत्यां संज्ञा, परिभाषा, सूत्राणि च अत्यधिकानि भवन्ति, अतः एतेषां सर्वेषां कण्ठस्थीकरणम् वहुक्लेशकरमेव।
3. अनया पद्धत्या छात्राः व्याकरणम् अध्येतुं अभिरूचिं न प्रदर्शयेयुः।
4. व्याकरणाध्ययने छात्राः वहून् क्लेशानुभवेयुः।
5. नीरसतामुत्पादयति च।

**आगमननिगमनविधिः**

आगमनविधिः निगमनविधि, इति द्वावपि परस्परं विरूद्धे मार्गे प्रचलतः। तथाऽपि एतौ परस्परं न्यूनताः पूरयतः। अत एव शिक्षाविद् एतयोरैक्यं वाञ्छन्ति। यतो हि आगमनविधिः नियमं निर्धायति परीक्षणात्मकपदे निगमनविधिवदेव कर्मं करोति। एवं निगमनविधिरपि उदाहरणानि प्रस्तूय समन्वयसोपाने आगमनविधिवदेव कर्मं करोति। एवं परस्परं पूरकौ वर्तेते। अतः एतयोः न्यूनताः तथैव दूरीकृता भवन्ति। यथा एतौ संयोजितौ संश्लिष्टौ वा भवेताम्। एतयोः सार्थकं संयोजनं शिक्षणे विशिष्य व्याकरणाध्यापने लाभप्रदं भवेत्। वस्तुतः एतयोः पारस्परिकः सम्बन्धः तादृशः वर्तते, यथा आगमनेन विना निगमनं न भवति, निगमनेन विना आगमनं च न भवति। अतः एतौ संयोज्य ''आगमननिगमनविधि'' इति नाम्नैव व्यवहरेत् प्रयोजयेच्च। यदि उपर्युक्तरीत्या संयुक्तविधिना शिक्षणं क्रियेत, तर्हि निस्संशयेन साफल्यम् अपि अवाप्येत। एतादृशमेव शिक्षणं व्यावहारिकं सत्यम्, वैज्ञानिकं च भवेत्। अतः अध्यापकाः अनेन संयुक्तविधिना व्याकरणमध्यापयितुं शक्यन्ते। अनेन छात्राणां बौधिकविकासः, क्रियाशीलताया विकासः, स्थायिज्ञानम् इत्यादयः लाभाः भवन्ति।

**(ग) परम्परागतपद्धतिः**

(Traditional Method)

व्याकरणशिक्षणे बह्व्यः पद्धतयः विधयश्च प्रयुज्यन्ते। पद्धति-शब्दः व्यापकः, स च सम्पूर्णशिक्षाव्यवस्थां सूचयति। विधिः शब्दः पाठ्यसाधनस्संज्ञा भवति। परम्परागत-शिक्षाव्यवस्थायां ये विधयः प्रयुक्ता आसन्, ते च परम्परागतविधिरिति नाम्ना ज्ञायन्ते। इयं पद्धतिः अनादिकालात् प्रचलति। इयमस्माकं भारतीयशिक्षायाः प्रातिनिध्यं वहति। मठेपु, गुरूकुलेषु, आश्रमेषु, परिवारेषु चानयैव पद्धत्या शिक्षा प्रदीयते। इयं ''स्वाध्यायप्रवचनाभ्यान्न प्रमदितव्यम्'' इति वेदवाक्यमनुसृत्य स्वाध्यायेन, प्रवचनेनैव अद्यावधिजीवन्ती वर्तते। अत्र पद्धतौ व्याख्यानं, विवरणं स्पष्टीकरणं, कथाकथनमित्यादयः सर्वा अपि प्रणाल्यः प्रयोगे दृश्यन्ते। पाठ्यपुस्तकविधिः, सूत्रविधिः, अनौपचारिकविधिः इत्यादयः विधयोऽपि प्रयुज्यन्ते। संस्कृतादीनां भारतीयविद्यानां शिक्षणं विदेशीयशिक्षाव्यवस्थानुगुणं प्राचलत् अंग्रेजी- विद्यालयेपु ऐतिहासिक समालोचनात्मकं पाश्चात्त्यं च दृष्ट्रिकोणमाश्रित्य नवीनमार्गे संस्कृतशिक्षणं प्राचलत्। अस्याः पद्धत्याः स्वरूपं सामान्यविश्वविद्यालयेषु संस्कृतविभागेपु इदानीमप्यवलोक्यते। छात्राः आश्रमं, गुरूकुलं, मठं वा समुपेत्य शिक्षां प्राप्नुवन्। प्रथमं वेदाध्ययनं, ततः वेदाङ्गाध्ययनमिति नियमः आसीत्। गुरूशिष्यसम्बन्धः घनिष्टःवर्तते स्म। तत्त्वावगमनमेव शिक्षायाः प्रमुखमुद्देश्यमासीत्। शिक्षणकाले गुरू एवाभिभावको भूत्वा छात्रेभ्यः सर्वविधिं कल्याणं करोति स्म।

**विधयः**—अस्यां पद्धतौ-पाठ्यपुस्तकविधिः, सूत्रविधिः, अनौपचारिकविधिः, मौखिक-विधिरिति बहव्यो विधयः प्रयुज्यमाना आसन्। सर्वत्रविधिपु व्याख्यानं, विवरणं, स्पष्टीकरणमित्याद्याः प्रणाल्यः प्रचारे आसन्। विशिष्ट-व्याख्यानप्रणाल्याः प्रचुरप्रयोगे आसीत्। प्रत्यक्षोदाहरणादियुक्तयोऽपि समाद्रियन्ते स्म।

**1. पाठ्यपुस्तकविधिः**—पाश्चात्यशिक्षयाप्रवर्तितः कश्चनान्योऽपि विधिः पाठ्यपुस्तक-विधिरिति नाम्ना प्रथते। स च अत्र नेष्यते। अत्र विधौ पुस्तकपठनपुरस्सरं विषय-वस्तुनः पदांशः व्याख्यानं क्रियते। तत्राक्षेपः समाधानमिति क्रमः स्पष्टीकरणार्थं विविधयुक्तयः समाश्रिताः।

**2. सूत्रविधिः**—सूत्रमुक्तवा तस्य विस्तृतव्याख्यानमिति क्रमः। तत्र कण्ठस्थीकरणस्य अत्यधिकं महत्त्वं परिलक्ष्यते।

**3. मौखिकविधिः**—पुस्तकानि यावत्प्रचारे नागतानि तावदयं विधिः प्रचलितः आसीत्। अत्र बोधनं प्रधानतः मौखिकमेवासीत्। विविधप्रणालीभिः युक्तिभिश्च वाचा एव शिक्षण-प्रक्रिया-प्रवर्धिताऽभवत्।

एवं विविधविधयः परम्परागतपद्धतौ शिक्षणोपयोगिनः प्रायुज्यन्त। अस्य विधेः स्वरूपं परम्परागतसंस्कृतमहाविद्यालयेषु इदानीमप्यवलोकयितुं शक्यते।

**परम्परागतपद्धत्याःउद्देश्यानि**—

1. तत्त्वानामात्मसात्करणं, संस्कृतेः सम्परिवर्धनं, साङ्गोपाङ्गवेदाध्ययनम् इति प्रमुखानि उद्देश्यानि आसन्।
2. सम्प्रदायः, सभ्यता, संस्कृतिः, देशभक्तिः, आस्तिक्यभावना, मोक्षैषणा च इत्यादीनां प्रधानतया सम्पादनम्।
3. स्मरणशक्तेः चिन्तनाशक्तेश्च अभिवृद्धिः।
4. वेदा, उपनिषदः, पुराणानि, इतिहास इत्यादीनां ज्ञानं सम्पाद्य, ईश्वर भक्तिः धार्मिकभावनयोश्च संवर्धनम्।
5. अधीतस्य नियमितरूपेणाभ्यासः, येन अर्जितं ज्ञानं सदैव परिष्कृतं, नवीकृतं, उपयोगि च तिष्ठेत्।
6. शास्त्रार्थेषु निस्संकोचं प्रवेशः इति प्रमुखानि उद्देश्यानि आसन्।
7. सच्चारित्र्य सम्पादनम्।
8. चतुर्णां पुरूषार्थानां सम्पादनम्।
9. समीचीनव्यक्तित्व सम्पादनम् च।

**प्रयोगः**—इमामेव पद्धतिमाश्रित्याधुनिककाले संस्कृतविद्यालयाः, महाविद्यालयाश्च प्रचलन्ति। पाठ्यक्रमः एतदनुकूलो वर्त्तते। अत्र पद्धतौ संस्कृतपाठ्यक्रमः निम्नाङ्कित-रीत्या भवितुमर्हति।

**प्रथमस्तरे**—अष्टवर्गपरिमितः, दशवर्गपरिमितो वा पाठ्यक्रमः भवेत्। अत्र शब्दरूपाणां, धातुरूपाणां, अमरकोशस्य, सामान्योपयोगिनां व्याकरणविषयाणां च कण्ठस्थीकरणं, सामान्य-साहित्यपरिचयश्च।

**द्वितीयस्तरे**—लघुकौमुदीत्यादिभिः ग्रन्थैः प्राथमिकव्याकरणपरिचयः। संस्कृतवाङ्मयस्य सुरचयितानां गद्यानां पद्यानाञ्चाध्ययनं यत्र स्व अर्जितज्ञानस्य उपयोगः भवेत्।

**तृतीयस्तरे**—सिद्धान्तकौमुदी, महाभाष्यम्, प्रौढमनोरमा, शेखरादि व्याकरणग्रन्थानामध्ययनम्। अत्र प्राधान्येन व्याकरणपाठ्यक्रम एव उच्यते। अकुण्ठितज्ञानार्जनमेव परम्परागत-पद्धते: वैशिष्ट्यम्। इतरशास्त्राणां सिद्धान्तभेदान् अवगन्तुं, तोलयितुं च क्षमतां प्रापयेत्।

**शिक्षणम्**—पुरा काले शिक्षणं मौखिकमेवासीत्। प्राय: व्याख्यानप्रणाली एव प्रमुखाऽऽसीत्। व्याख्यानं च-"पदच्छेदोऽन्वयोक्तिश्च समासादिविवेचनम्। पदार्थबोधस्तात्पर्यं व्याख्यावयवपञ्चकम्"।। पाठ्यवस्तुन: पदच्छेदं कारयित्वा, पदार्थं सम्बोध्य, पदानि विश्लिष्य, यथाक्रमं संयोज्य, तद्गतार्थं प्रतिपाद्य तदुपरि पूर्वपक्षरूपेणाक्षेपं विधाय, तस्य समाधानपुरस्सरं सिद्धान्तस्थापनं व्याख्यानं भवति स्म। सूत्राणां व्याख्यानकाले उदाहरणं, प्रत्युदाहरणमपि दीयते सूत्रप्रतिपादितार्थस्य लक्ष्ये समन्वय: उदाहरणद्वारा क्रियते। अत्र प्रायेण छात्र: ग्रन्थांशं पठेत्, गुरु: उपदेशं व्याख्यां च कुर्वन् सामानाधिकरण्यं सम्पादयेत्। तत: छात्र: पाठितांशं चिन्तयेयु:। परस्परं विचार्य स्वार्जितज्ञानं परिष्कुर्यु: इति क्रम:। सूत्रविधौ कण्ठस्थीकरणस्य महत्त्वं दीयते। अत्र सूत्रस्य, तदर्थस्य च कण्ठस्थीकरणं, तत: लक्ष्ये समन्वय: इति क्रम:। व्याकरणच्छात्र: अष्टाध्यायीसूत्रपाठं कण्ठस्थं कुर्यात्। अयं मौखिकविधि: उत्तरावस्थायां शास्त्राध्यापनेऽपि शिक्षकै: अनुसर्यते। प्राचीनकाले यथावत् शास्त्रविषयान् अपि छात्रा: कण्ठस्थमकुर्वन्तिस्म।

**पुस्तकस्था तु या विद्या परहस्तगतं धनम्।**
**कार्यकाले समायाते न सा विद्या न तद्धनम्।।**

इति श्लोकेन प्रतीयते यत् जना: पुस्तकीयशिक्षाम् समालोच्य समाधत्ते तस्य गौरवं नासीत् एवं परम्परागतपद्धतौ कण्ठस्थीकरणस्य महत्त्वं दीयते। परम्परागत पद्धतौ बालबोधनाय विविधोपकरणान्यपि प्रयुज्यन्ते।

**परम्परागतपद्धत्या: गुणा:**

1. इन्द्रियार्थसन्निकर्षजन्यप्रत्यक्षज्ञानोत्पादितस्मरणशक्त्यपेक्षया अभ्यासजन्य- स्मरणशक्ति: चिरं तिष्ठति।
2. मौखिक-कार्यस्य प्राधान्यं दीयते।
3. भाषाज्ञानं सुदृढं जायते, शास्त्रेषु प्रावीण्यं प्राप्नुवन्ति छात्रा:।
4. संस्कृति: संरक्षिता भवति। अनयैव पद्धत्या संस्कृतज्ञानविज्ञानविशेषज्ञा:, धुरन्धरविद्वांस:, संस्कृतिसंरक्षका:, अनुष्ठान-परायणा:, कर्मठाश्चोत्पाद्यन्ते।
5. इयमेवपद्धति: विविधसिद्धान्तप्रवर्त्तकान्, शास्त्रज्ञान् चरक-कौटिल्य-शंकर-रामानुज-माधव-सायण-गदाधार-जगन्नाथादीन् समुत्पादयत्।
6. संस्कृतशोधकर्मणि अस्या: उपयोग: सुमहान् वर्तते।
7. गुरूशिष्ययोर्मध्ये समीचीन: सम्बन्ध: भवति।
8. रटनप्रक्रियाया:, कण्ठस्थीकरणस्य प्रामुख्यं प्रदीयते।
9. आध्यात्मिकमूल्यानां अधिकं प्रामुख्यं प्रदीयते।

**परम्परागतपद्धत्या: दोषाः**

1. प्रचलितःपाठ्यक्रमःएकाङ्गी वर्तते।
2. पद्धतिरेषा नीरसा फलतःछात्राःअध्ययने अभिरूचिं नैव प्रदर्शयेयुः।
3. कण्ठस्थीकरणस्य प्रभावेन छात्राणां प्रगतिः विकासश्च स्थगितौ भवतः।
4. शिक्षा अध्यापककेन्द्रिता भवति।
5. लौकिकैतिहासिक-तुलनात्मकालोचनात्मक-विषयानां प्रामुख्यं न दीयते।
6. पाठ्यसहगामिनीक्रियाणां कृते सर्वात्मना अवकाशः नास्ति।
7. छात्राः निष्क्रियाः भवन्ति।

**उपसंहारः**

इयं पद्धतिः बहोः कालात् प्रचलन्ती वर्तते। प्रचीनकाले शिक्षाव्यवस्थायाः एकमात्रं साधनगुरुकुलमासीत्। क्रमशः परिस्थित्यनुगुणं विकासं प्रप्नोति। व्याकरणस्यैव सहाय्येन भाषायां पूर्णम् अधिकारं स्वातन्त्र्यञ्च प्राप्तुं समर्थाः भवन्ति जनाः। सामान्यविद्यालयेष्वपि सन्धि-समास-कारक-प्रकरणस्थानानामत्यावश्यकतत्त्वानां पाठनार्थं अस्यां पद्धतौ प्रचलिताः विधयः प्रयोक्तुमर्हाः वर्तन्ते। एतेन छात्राणां मनन-धारण- चिन्तनशक्तयः विकासं प्राप्नुयुः। अधिगमः एव शिक्षणस्य महत्त्वपूर्णमुद्देश्यं भवति। यदीयं पद्धतिः, प्रचलिताः विधयो वा विशिष्टैः आधुनिकोपकरणैः परिपुष्टा भवेत् तर्हि व्याकरणाध्यापनं सुलभसाध्यं भवेदित्यत्र नास्ति सन्देहः।

**( घ ) समस्याविधिः**
(Problem Method)

समस्याविधिर्न नवाविष्कृतः। प्रचीनभारते बहुत्रास्य प्रयोगः दृश्यते। व्याख्यानप्रणाल्यां काचन् युक्तिरासीत् समस्येति। परम्परागतपद्धतौ व्याख्यानसोपानेषु इदमप्येकं पदमासीत्। यथा-

**पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्।।**

इति व्याख्यानपदेपु आक्षेपः एकं पदं वर्तते। अयमाक्षेपः एव समस्या भवति। पदच्छेदः, पदार्थः, विग्रहः, अन्वयश्च, क्रमशः व्यवाह्रयते। ततोऽध्यापकः व्याकरणगतां, पद्यगतां गद्यगतां वा कांचन समस्यां कमप्याक्षेपं वा कुर्यात्। छात्रः पूर्वमेव पदार्थमवगतस्सन् सुविचिन्त्य सन्तर्क्याक्षेपं समाधत्ते। एवमस्य प्रयोगः सर्वत्र शास्त्रेष्ववलोक्यते। समस्यां समुत्पाद्य तां समाधातुमवसर-परिकल्पनमेव अधिगमप्रशिक्षणस्य सर्वोत्तमोपायः इति। समस्याविधौ समाधानं मानसिकं भवति।

समस्याविधिः क्रमबद्धमेकं प्रशिक्षणसाधनं भवति। S.K.Kocchar निरूपयति- "समस्याविधिः सार्थकः, विकासात्मकः, क्रमबद्धः, सामान्यीकृतः, आविष्कारकश्च वर्तते इति।

**अर्थः**—समुपस्थापितसमस्यायाः अभिमुखीकृतसमस्यायाः वा स्वबुद्धिशुद्धिमुपयुज्य, इतरसाधनानां सहयोगेन, प्रौढनिर्देशेन, स्वातन्त्र्येण च समाधानानाम् अन्वेषणाय अवसरप्रदात्र्याः कस्यांश्चित् सामान्ययुक्तेः प्रणाल्या वा संवर्धिताकृतिरेव समस्याविधिरिति नाम्ना प्रथते। विद्यालयेषु तर्क-विचार-चिन्तनासक्तीनामुत्तेजनार्थं विभिन्नपरिस्थितिषु सामञ्जस्य स्थापनार्थं, मस्तिष्कस्य क्रमिकप्रशिक्षणार्थं, क्रियाशीलतायास्सम्प्रेरणार्थंच छात्राणां पुरतः काल्पनिकीं समस्यां प्रस्तूय नियमितरूपेण समाधानान्वेषण प्रक्रियैव समस्याविधिः। अतः विचारात्मकचिन्तनेन समस्या समाधीयते।

**विचारात्मकचिन्तनस्याधारभूतानितत्त्वानि–**

1. जटिलसमस्यायाः अवगमनम्।
2. समस्यायाः स्वरूपज्ञानम्।
3. यथावत् मनसि समस्यायाः निधानम्। मध्ये उत्साहभङ्गो न जायेत।
4. विहितपरिकल्पनायाः परीक्षणं मूल्याङ्कनं च।
5. परिकल्पनामङ्गीकर्तुं सहजमनोवृत्तिः।
6. युक्तस्य तत्त्वस्य पुनः परीक्षणम् इति।

**समस्याविधेस्सोपानानि–**

1. समस्या,
2. समाधानान्वेषण–प्रक्रिया,
3. परिकल्पना,
4. समाधानम्, इति चत्वारि पदानि वर्तन्ते।

**1. समस्योत्पत्तिःपृथक्करणंच**–छात्राःस्वभावेन सक्रिया भवन्ति। विद्यालयीयं वातावरणमपि छात्रान् किमपि कर्तुं, चिन्तयितुं सम्प्रेरयति। पाठितेषु पठितेषु वा विषयेषु चर्चा जायते स्वतः। यथा–संस्कृतं पठन्ति छात्राः। तत्र विविधानि नामानि पाठ्यविषये समायान्ति। नामानि च विविधविभक्तिषु विविधरूपेण परिवर्तितानि भवन्ति। छात्राः इदमप्यनुभवन्ति केचन शब्दाः अपरिवर्तिता वर्तन्ते सर्वदा इति। स्वतः तेष्वयं विचारो जायते अपरिवर्तितानां किं वैशिष्ट्यमिति। इदानीं छात्राणां पुरतःसमस्येयं पृथक्कृता वर्तते–'अपरिवर्तितानां शब्दानां वैशिष्ट्यम्।'

**2. समस्यायाः सीमाङ्कनम्**–अत्र पदे छात्राः अध्यापकस्य मार्गदर्शनेन कार्ये प्रवर्तन्ते। समस्या यदि सीमिता न भवेत् तर्हि छात्राः कष्टमनुभवेयुः। अतः समस्यां स्पष्टं प्रतिपाद्य अध्यापकः सीमाङ्कनमपि कारयेत्। तथा–प्रस्तुतोदाहरणे अपरिवर्तितशब्दानां इत्यस्य अव्ययमिति स्पष्टतया ज्ञानोत्पादनम्। ततः तेषां वैशिष्ट्यं क्रियापदानां संज्ञाशब्दानां वा योगे विचार्यते। परिवर्तनन्नाम किम्? तत्र कीदृशं परिवर्तनं न जायते?इति समस्यायाःसीमाङ्कनं क्रियते। तथा चेदानीं 'अव्ययानां वैशिष्ट्यं किम्? इति समस्या अव्ययमात्रनिष्ठा सीमिता वर्तते।

**3. समाधानान्वेषणप्रक्रिया**–अत्र पदे समस्यां समाधातुमुपायाः चिन्त्यन्ते।

**1. तत्त्वानां सङ्ग्रहः**—समस्यां समाधातुमावश्यकानि तत्त्वानि विचिन्त्य संगृह्णन्ति छात्राः। कुत्र कथं तत्त्वानि सङ्गृह्णीयुरिति अध्यापकः संसूचयेत्। यथा-निर्दिष्टसमस्यायां-अव्ययानां वैशिष्ट्यमवगन्तुं अध्यापकस्य संसूचनेन छात्राः अव्ययविषयकपरिचयं, अव्ययानां नामानि, तेषां प्रामाणिकप्रयोगान्, प्रौढव्यवहारं, पाठ्यपुस्तकस्थान् अव्ययप्रयोगान् च संगृह्णन्ति।

**2. तत्त्वानां सङ्घटनम्**-सङ्गृहीतानि तत्त्वानि सङ्घटयन्ति। यथा अत्रोदाहरणे सङ्गृहीताव्ययप्रयोगान्-स्त्रीपुंनपुंसकलिङ्गैः अव्ययानां प्रयोगः, एक-द्वि-बहुवचनशब्दैः सह अव्ययानि-सम्यक् सङ्घटयन्ति।

**3. तत्त्वानां विश्लेषणम्**—सङ्घटिततत्त्वानि विश्लिष्य विचारयन्ति छात्राः। यथा-लिङ्ग-परिवर्तनेन अव्ययशब्दाः कथं भवन्ति? इति अव्ययप्रयोगानां विश्लेषणं कुर्वन्ति छात्राः।

**4. परिकल्पना**—समाधानान्वेषणप्रक्रियया अधिगततत्त्वानामाधारेण कामपि परिकल्पनां समाधानत्वेनोपस्थापयितुं छात्राः प्रेरिताः भवन्ति। यथा-छात्राः अव्ययानां प्रयोगान् विश्लिष्येमां परिकल्पनांमुपस्थापयन्ति "अव्ययानि लिङ्गपरिवर्तनेन, वचनपरिवर्तनेन, विभक्तिपरिवर्तनेन वा परिवर्तनं न प्राप्नुवन्ति। तानि सर्वदा अपरिवर्तितानि भवन्ति। किंतु कानिचन अव्ययानि परिवर्तनं प्राप्नुवन्ति" इति।

**5. परिकल्पनायाः परीक्षणं निष्कर्षश्च**-परिकल्पनात्मकं समाधानं छात्राःस्वयं अध्यापकस्य सहयोगेन परीक्ष्य-कमपि निष्कर्षं प्रत्यायान्ति। यथा-प्रकृतोदाहरणे अध्यापकः अव्ययविषये सूत्रप्रामाण्यं प्रदर्शयति। छात्राःस्वकृतां परिकल्पनां परीक्षन्ते। परीक्षणेन अवगच्छन्ति अव्ययानि कदापि परिवर्तनं न प्राप्नुवन्ति इति।'कानिचन परिवर्तनं प्राप्नुवन्ति' इति परिकल्पनायाः अंशः दोषयुक्तः इति च अवगच्छन्ति। यतः चिरं, चिरेण, चिरात्, विहाय, विहस्य इत्येतानि विभक्तिप्रतिरूपकाण्यव्ययानीति विज्ञाय। "त्रिषु लिङ्गेषु, सर्वासु विभक्तिषु, सर्वेषु वचनेषु च अव्ययानि समानरूपेणैव तिष्ठन्ति" इति निष्कर्षं कुर्वन्ति। अध्यापकः एतज्ज्ञानं द्रढ़यितुं प्राचां श्लोकं प्रस्तौति।

> **सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
> **वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्।।** इति

इत्थं समस्याविधेः क्रमः भवति। एवञ्चायं विधिः लिङ्गज्ञानं, क्रियापदानां प्रयोगः, कारकवैशिष्ट्यं, सन्धि-समासकृदन्तानां, अव्ययानां प्रयोगज्ञानं इति बहुत्र व्याकरण- शिक्षणे यथोचितं यथासम्भवं च प्रयोक्तव्यः।

**समस्याविधेः प्रमुखोपगमः** [Important Approaches in Problem Method]

तत्र प्रमुखाः—( क ) **आगमनोपगमः** [Inductive approach] ( ख ) **निगमनोपगमः** Deductive approach] ( ग ) **विश्लेषणोपगमः** [Analysis approach] ( घ ) **संश्लेषणोपगमः** [Synthesis approach] चेति। आगमनोपगमे प्रयोगद्वारा समस्यायाः समाधानं तदनु निष्कर्षश्च क्रियते। निगमनोपगमे समाधानत्वेन पूर्वमेव किमपि सूत्रं, निष्कर्षो

वा प्रस्तूयते। तस्य परीक्षणं विधाय पुनर्निर्णय: इति क्रमोऽनुसर्जते विश्लेषणोपगमे समस्यां खण्डश: विच्छिद्य समाधानमन्विष्यते संश्लेषणोपगमे समस्या: एकीकृत्य समाधानाय प्रयतते। अत: अध्यापक: छात्राणां रुचिं, परिस्थितिं, क्षमतां, साधनानि, च विचिन्त्य उचितोपगमस्य प्रयोगं विदधीत्।

**शिक्षकस्य स्थानम्**—अस्मिन् विधौ अध्यापकस्य महत्वपूर्णस्थानं वर्तते। अध्यापक: कक्षायां स्वतन्त्रवातावरणं कल्पयेत्। छात्रान् प्रोत्साहयेत् उत्तेजयेच्च। साधनानि सङ्गृहीतुं मार्गं प्रदर्शयेत्। अध्यापक: प्रक्रियायां निष्णात:, अपि च श्रद्धालु:, परिश्रमी, सरल:, सहजप्रवृत्तियुक्तश्च स्यात्।

**समस्याविधे: गुणा:—**

1. विचारात्मकं चिन्तनमभिवर्धयति।
2. तर्कपरोऽयं विधि:।
3. विकासात्मक: वर्तते छात्राश्च सक्रिया: भवन्ति।
4. छात्र: उत्तरदायित्वमवगत्य कार्ये संलग्न: भवति।
5. बौद्धिकविकासं कारयति।
6. व्यक्तित्वं विकासयति।
7. आत्मसन्तुष्टि: जायते।
8. मानसिकस्वास्थ्यं संरक्षति।
9. सार्थक:, क्रमबद्ध:, आविष्कारश्च वर्तते।

**समस्याविधे: न्यूनता:—**

1. अस्य विधे: प्रयोग: कक्षाध्यापने सर्वदा न सम्भवति।
2. सर्वत्रास्योपयोग: न सम्भवति।
3. प्रौढानां कृते महते लाभाय स्यात, न तु विद्यालयबालकानां कृते।

**उपसंहार:**

सामान्यतया पाठनावसरे प्रणालीत्वेनाप्यस्योपयोग: भवितुमर्हति। पुनरन्वेषणे Re-discovery छात्राणां हिताय भवति। तञ्च विविधशक्ती: संवर्धयति। किञ्च जीवनं समस्या युक्तं भवति। अत: शिक्षकोऽपि सामञ्जस्येन अमुं विधिं यथोचितं प्रयोजयेत्। विशिष्ट व्याकरणशिक्षणे समस्याविधि: आदरणीयतां भजते एव।

**(ङ) मौखिकपद्धति:**
(Oral Method)

पद्धतिरियं संस्कृतभाषाया अत्यन्त-प्राचीनतमा। प्राचीनकाले भारते सर्वत्र अनयैव पद्धत्या संस्कृतम् अध्याप्यमानमासीत्। अस्यां पद्धत्यां गुरू: आत्मनाधीतां शिक्षां वाचा स्वशिष्येभ्य:

पाठयति। गुरूणा यद् यद् उच्यते तत्तत्सर्वं मुखतः एव वदति। गुरूणा यदुच्यते तत्सर्वं छात्राः सावधानाः भूत्वा? श्रृण्वन्ति। अध्यापकानां हस्ते पाठ्यपुस्तकानि न भवन्ति। छात्राणां हस्ते लेखन्यः श्वेतपत्र [White paper] पुस्तिकाश्च न भवन्ति। अध्यापकः सर्वं वाचा वदति। छात्राः स्वबुद्ध्या झटिति विषयान् गृह्णन्ति।

**मौखिकपद्धत्याः उद्देश्यानि**

1. अध्ययने सावधानतायाः सम्पादनम्।
2. स्मरणशक्तेः अधिकतया अवकाशप्रकल्पनम्।
3. कण्ठस्थीकरणस्य प्रामुख्यप्रदानम्।
4. अधीतांशानां आजीवनपर्यन्तं स्मृतिपथे संस्थापनम्।
5. पाठ्यपुस्तकानामनादरणम्।
6. अध्ययने नैपुण्यसम्पादनम्।
7. शीघ्रतया विषयावगाहनसम्पादनम्।
8. विना पाठ्यपुस्तकैः शिक्षाक्षेत्रे क्रान्त्यानयनम्।

**अस्याः पद्धत्याः गुणाः**

1. प्रतिदिनं छात्राः परीक्षिताः भवन्ति।
2. अध्यापकेन वैयक्तिकावधानं अधिकं दीयते।
3. गुरुशिष्यसम्बन्धः प्रगाढः भवति।
4. स्मरणशक्तिःसंवर्धिता भवति।
5. धारणाशक्तिःसततं संवर्धिता भवति।
6. व्याकरणज्ञानेन साकं साहित्यज्ञानं अप्रयत्नेन भवति।
7. रचनाशक्तेः संवर्धनं भवति।
8. सर्वदा गुरूणा उक्तान् विषयान् लीलया च वक्तुं समर्थाः भवन्ति।

**अस्या पद्धत्याः दोषाः**

1. शिक्षा विषयकेन्द्रा भवति।
2. स्मृतेः अधिकं मूल्यं दीयते।
3. स्वयंकृतिः संवर्धिता न भवति।
4. कण्ठस्थीकरणाय अधिकं प्रामुख्यं प्रदीयते।
5. एषा अमनोवैज्ञानिकी पद्धतिः।
6. दृश्यश्रव्यसाधनानि नोपयुज्यन्ते।
7. विषयकाठिन्यमधिकं भवति।

अष्टादशशताब्द्याः पूर्वं ग्रन्थानां प्रकाशनाय मुद्रणयन्त्रः नासन्। फलतः पाठ्यपुस्तकानि शिक्षाक्षेत्रे नासन्। तथापि शिक्षाव्यवस्था आसीत्। पाठ्य पुस्तकानामभावकारणेन प्रतिदिनं

किमध्यापनीयम्? कियत्पर्यन्तमध्यापनीयम्? इति अध्यापकेनैव स्वयं निश्चयः क्रियतेस्म। सहाध्यापकाः प्रधानाध्यापक इत्यादयः न भवन्तिस्म। प्रतिदिनमध्यापकेन क्रममेकमाश्रित्य बोधनीयमासीत्। पाठ्यक्रम इत्यादि अध्यापकेन निश्चेतव्य आसीत्। स्नातकोत्सवाभ्यन्तरे शिक्षा पूर्णतयाध्यापनीयाऽऽसीत्।

**(च) व्याख्यानपद्धतिः**
(Lecture Method)

एषा अतिप्राचीना पद्धतिः। प्राक्तनकालादारभ्य एषा संस्कृतशिक्षाक्षेत्रे स्वीयं योगदानं प्रयच्छत्येव। शिक्षणे सारल्यसम्पादनाय एषा पद्धतिरावश्यकी। विशिष्ट संस्कृतक्षेत्रे अस्या आवश्यकता अधिका। संस्कृताध्यापनाय प्राचीनं परम्परा-ज्ञानमावश्यकम्। शब्दार्थज्ञानाय शब्दप्रयोगकौशलज्ञानाय च इयं पद्धतिः अवश्यमाश्रयणीया।

**अस्याःपद्धत्याःउद्देश्यानि**

1. शब्दप्रयोगकौशलज्ञानसम्पादनम्।
2. अध्ययनेऽभिनिवेश सम्पादनम्।
3. नूतनांशानां सरलतया अध्यापनम्।
4. शिक्षणेऽवगाहने च सारल्यसम्पादनम्।
5. शब्दार्थयोर्वास्तविकं ज्ञानसम्पादनम्।
6. भाषायां विद्यमानानां मार्मिकांशानां ज्ञानसम्पादनम।

**व्याख्यानस्य लक्षणम्**–"पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना। आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्"।। एवं षड्धा व्याख्यानं भवितुमर्हति। अस्यां पद्धतौ शिक्षकः सूत्र-सूत्रार्थस्य एकैकं पदं स्वीकृत्य अर्थं स्पष्टीकरोति। अर्थकथनसमये समास-विग्रहः, सन्धिविच्छेदः, व्युत्पत्तिप्रभृति व्याकरणविषयाः विविच्यन्ते। एवं रीत्या व्याख्यापद्धतौ व्याकरणस्याध्यापनं भवति।

**अस्याः पद्धत्याः गुणाः**

1. संस्कृत व्याकरणे विद्यमानाः मार्मिकांशाः अनयैव पद्धत्या बोधयितुं शक्याः।
2. अनया पद्धत्या शब्दज्ञानम् अधिकं भवति। फलतः कोशज्ञानं संवर्धयितुं शक्यते।
3. यदि अध्यापकः सरसां पाण्डित्यपूर्णां व्याख्यां करोति तर्हि विषयः चिरकालं यावत् स्मृतिपथे भवितुमर्हति।

**अस्याः पद्धत्याः दोषाः**

1. शिक्षकः सक्रियः भवति, छात्राः निष्क्रियाः भवन्ति।
2. छात्राः अध्ययनसमये आसक्तिं न प्रदर्शयेयुः।
3. अध्यापनाय समयः अधिकः अपेक्षते।

## (छ) ह्यूरिस्टिक्विधिः
(Heuristic Method)

शिक्षाक्षेत्रे दिनानुदिनं सामान्यो विशिष्टो वा विधिः अन्विष्टः, आविष्कृतो वा भवति। नवपद्धतिरपि वातावरणानुगुणं स्वतन्त्ररूपेण आविष्कृता भवति। यथा- हरवर्टीयपञ्चपदी, माण्टेसरी-वालोद्यानपद्धतयः, आगमननिगमनविधिः, एवं आगमनसमस्याविधयोः संयोजनेनाविष्कृतोऽयं विधिः ह्यूरिस्टिक्विधिरिति नाम्ना प्रथते। शिक्षाक्षेत्रे अस्य विधेः असाधारणं स्थानं वर्तते।

**अर्थः**-"**मितं भाषेत, बहु कुर्वीत**" इति सिद्धान्तं, "अध्यापकेन छात्राः अत्यल्पमेव पाठ्येरन्, अत्यधिकं अन्वेषणे प्रोत्साह्येरन्" इति। Herbert Spencer महोदयस्य हरवर्टीय सिद्धान्तं चाधारीकृत्य प्रो० एच. ई. आर्मस्टॉंग [Prof.H.E.Armstrong] महोदयः नवदशशताब्द्यां विज्ञानविषय-शिक्षणार्थम् अमुं विधिं पर्यकल्पयत्। प्रथमं यदा विद्यालयेषु विज्ञानविषयः अनिवार्यतया पाठ्यक्रमे संयोजितः, तदा प्रयोगशालाः, उपकरणानि च विना कथं शिक्षयेत् शिक्षकः इति समस्या समुदैत्। आर्मस्टॉंग महोदयः सरलतया उपकरणैः विना विज्ञानविषयशिक्षणार्थममुं विधिं समदर्शत्। ततः आरम्भायं स्वतन्त्रविधित्वेन प्रयुज्यमानो वर्तते। अद्य अस्योपयोगः न केवलं विज्ञानविषये, अपि च गणित-व्याकरण-प्राकृतिकविज्ञानादिष्वपि विषयेषु वर्तन्ते। ह्यूरिस्टिक् इति पदं ह्यूरिस्को [Heurisco] इति ग्रीक्शब्दात् विकृतं वर्तते। तस्यार्थः—"**अहमन्विष्यावगच्छामि**" इति। अस्मिन् विधौ छात्राः स्वयमेव तत्त्वमन्विष्य अवगच्छन्ति। अध्यापकः तदर्थं व्यवस्थापयति। स तु केवलं मार्गदर्शकत्वेन कर्मं करोति। न तु सर्वं शिक्षयति। छात्रेभ्यःतत्त्वानामवलोकनार्थं निरीक्षणार्थं चावसरं परिकल्पयति। छात्राः तत्त्वानि स्वयं विविधोपकरणानां साहाय्येनावलोक्य नियमं, मूलभूतं तत्त्वं वा अवगच्छन्ति। छात्रेभ्यः तत्त्वानि न पाठ्यन्ते, किन्तु ते स्वयमेव अन्वेषकाः भूत्वा तत्त्वानि आविष्कुर्वन्ति। आगमनविधेः तत्त्वान्यतिरिच्य अत्र विधौ किमपि नावीन्यं न वर्तते। अत्र छात्राः स्वीयसमस्यायास्समाधानम् अन्येषां साहाय्येन विना स्वयमेव सपरिश्रमं सप्रयासं च प्राप्नुवन्ति। विधिरयं छात्रान् शोधकर्मणि प्रेरयति। छात्राः स्वीयान् आक्षेपान् स्वयमेव सम्पादयति। अन्ते स्वयमेव तत्त्वज्ञानमन्विष्य समाधानं प्राप्नुवन्ति। छात्राः स्वानुभवैः ज्ञानं प्राप्नुवन्ति। एवञ्च ह्यूरिस्टिक् विधौ छात्राः समस्यां श्रुत्वा स्वयमेवावश्यकोपकरणान्येकीकृत्यान्विष्य परीक्ष्य तत्त्वज्ञानं प्राप्नुवन्तीति स्पष्टं प्रतीतं भवेत्। अत्र प्रक्रियाया एव महत्त्वं वर्तते। यतः इयं खलु प्रक्रिया छात्रेषु विविधकौशलानि संवर्धयति।

### ह्यूरिस्टिक् विधेः प्रमुखानि उद्देश्यानि

1. परिश्रमः, निरीक्षणं, चिन्तनमित्येषां महत्त्वप्रतिपादनम्।
2. अनुसन्धानतत्त्वानां परिचयः।
3. छात्रेषु वैज्ञानिकासक्तेः प्रवृत्तेश्च संवर्धनम्।

4. स्वाध्यायान्मा प्रमदितव्यमितिज्ञानोत्पादनम्।
5. स्वप्रयासैरधिगततत्त्वानां व्यवस्थापनाय नियमनाय च प्रशिक्षणम्।
6. स्वीयानुभवानां तर्कसङ्गतरीत्या व्यवहारे नयनम्।
7. तत्त्वज्ञानं कथं प्राप्नुयाच्छात्र इति विषये प्रशिक्षणम्। इत्येतानि ह्यूरिस्टिक् विधेः प्रमुखान्युद्देश्यानि भवन्ति।

**आधारभूताः सिद्धान्ताः**

आर्मस्टॉग महोदयः स्व ह्यूरिस्टिक्विधिं केषाञ्चित् सिद्धान्तानामाधारेण समकल्पयत्। सामान्यतया प्रचारे व्यवहारे वा यो विधिः वर्त्तते तत्र सिद्धान्ताः अन्विष्य ज्ञायन्ते। परन्तु अत्र विधिः वास्तविकरूपेण मनोवैज्ञानिक-सिद्धान्तानामाधारेण कल्पितो वर्तते। वस्तुतः इयमेव औपचारिकता नवविधीनामन्वेषणात् शिक्षाशास्त्रिणः उद्घोषयन्ति। तथाऽपि Armstrong महोदयः आवश्यकतां अभिमुखीकृत्य, ताभिः प्रेरितस्सन् इमं विधिं प्रदर्शयिष्यते। अस्मिन् निहितास्सिद्धान्ताः केचन वर्तन्ते। यथा–

1. विधिः प्रामुख्येन क्रियाशीलता सिद्धान्तमनुसरति, यतः छात्राः स्वयमत्र सक्रिया भूत्वा शिक्षन्ते।

2. कार्यमुखादधिगमः इति सिद्धान्तमाधारीकृत्य तिष्ठति, छात्राः निरीक्षणं, तत्त्वानाम् संकलनं, नियमनिर्धारणं इति सर्वं कार्यं सम्पाद्याधिगमं प्राप्नुवन्ति।

3. रुचेः सिद्धान्तः।

4. प्रेरणसिद्धान्तः।

5. प्रयत्नसिद्धान्तः।

6. अनौपचारिकसिद्धान्तः।

7. विकासात्मकसिद्धान्तः। इति विविधसिद्धान्तान् पुरस्कृत्य विधिरयं प्रवर्तते।

**ह्यूरिस्टिक्विधौ शिक्षकस्य स्थानम्–**

अत्र विधौ छात्राः स्वयमेव सर्वं कृत्वाऽवगच्छन्ति, अतः अध्यापकः अनपेक्षितः इति न वाच्यम्। वस्तुतः अध्यापकस्य महत्यावश्यकता वर्तते। अत्र अध्यापकस्य कीदृशं स्थानं भवेदिति विवरणं निम्नं वर्तते। यथा–

1. अध्यापकः विषयज्ञः प्रतिभावान् च स्यात्।

2. सः अल्पमेव बोधयेत्, छात्राः तस्मात् संसूचनं प्राप्य अग्रेसरेयुः।

3. अध्यापकः वैज्ञानिकविषयाणां ज्ञाता, निरीक्षकश्च भवेत्।

4. साधनानि विषयाश्च कुतो लभेरन्निति मार्गप्रदर्शकः।

5. सः तत्त्वं जानन्नपि यावत् छात्राः स्वयं न अवगच्छन्ति, तावन्न वदेत्। ज्ञाने मौनं कष्टमेव, तथापि पालयेत्। यदि छात्राः सर्वथा न अवगच्छन्ति, तर्हिभीतं सम्बोध्याग्रेसारयेत्।

6. प्रश्नकरणे कुशली स्यात्, यतोऽयं विधिः प्रश्नानामाधारेणैव तत्त्वमवगमयति। यथापेक्षमेव मार्गदर्शनं कुर्यात्।

7. छात्राणां समस्याः प्रतिपदमवगत्य समाधानं कुर्यात्।

8. सूक्ष्मनिरीक्षकः।

9. सामाजिकज्ञानयुक्तः।

10. सुमार्ग दर्शकः।

11. आदर्शवादीयगुणयुक्तः, विपयज्ञः, ज्ञानवान् च भवेत्।

**ह्यूरिस्टिक्विधौ निम्नाङ्कित-पञ्चपदानि प्रयुज्यन्ते। ते यथा–**

**1. समस्यायाः प्रस्तावः**–अध्यापकः पाठ्यविषयसम्बद्धां कामपि समस्यां कक्षायां प्रस्तूयात्। समस्यां तथा उद्घोषयेत् यथा सर्वे छात्राः सावधाना भवेयुः। छात्रेषु तादृशी भावना उदीयात्, समस्या पाठसम्बद्धा, उपयोगिनी चेति। व्याकरणशिक्षणे अस्योपयोगिता-मुदाहरणमाध्यमेन प्रदर्शयिष्यन्ते। यथा छात्राणां समक्षमियं समस्या उदेति सन्धिसमासयोर्मध्ये कः भेदः? इति। अर्थात् सन्दिग्धानां समस्तानां च पदानां मध्ये कः भेदः इति। छात्राः अन्वेषणे तत्परा भवेयुः। "अर्जितंज्ञानं चिरं भवति" इत्यालोके अन्वेषनीयम्।

**2. तत्त्वानां निरीक्षणं, सारणीकरणम्**–अत्र छात्राः समस्यां समाधातुमावश्यकं तत्त्वानि, उपकरणानि च स्वयमन्विष्य एकीकृत्य सारणीकरणं कुर्वन्ति। सारणीकरणेन विश्लेषणे सौलभ्यं जायते। यथा–प्रकृतोदाहरणे छात्राः सन्दिग्धपदानि, समस्तपदानि च विविधानि संकलयन्ति। एतदर्थं संस्कृतकाव्यानि, नाटकानि, गद्यानि, पद्यानि, व्यावहारिक-प्रयोगान् च अवलोक्य, संगृह्य सारणीं निर्मान्ति। महेन्द्रः, राजपुरुषः, यस्योभयं, पुँल्लिङ्गः, देवालयः, कुम्भकारः, नदीतटम्, नखभिन्नः, विद्यालयः, स्वागतम्, इत्यादि शब्दान् संकल "य सन्धिसमासयोः पृथक्–पृथक् सारणीं निर्मीय निरीक्षन्ते।

**3. परिकल्पना**–अत्र बालकाः स्वसंकलितविषयाणां निरीक्षणपूर्वकं सन्तर्क्य कामपि परिकल्पनामुचितां स्वसमस्यायाः समाधानत्वेन निश्चिन्वन्ति। यथा– प्रस्तुतविषये छात्राः एवं परिकल्पनां विदधाति–"समस्तपदं एकपदं भवति। तस्य एकपदत्वेनैव ग्रहणं भवति। सन्धियुक्तं पदमनेकं भवति। तस्य सन्दर्भानुगुणं एकत्वेनानेकत्वेन च ग्रहणं भवति। समासे सन्धिरनिवार्यः" इति।

**4. परीक्षणम्**–स्वकृतां परिकल्पनां छात्राः विविधैः प्रमाणैः, अध्यापकस्य सहयोगेन परीक्षन्ते। यथा–प्रकृते सन्धिसमासविषयकपरिकल्पनां परीक्षन्ते।

**5. नियमनिर्धारणम्**–परीक्षणानन्तरं छात्रैः कश्चन् नियमः निर्धार्यते। यदि परिकल्पना पूर्णता साध्वी तां नियमत्वेन स्वीकुर्वन्ति छात्राः। परीक्षणात्परं परिकल्पनायां परिवर्तनस्य आवश्यकता भवति चेत्, तदनुपरिवर्त्य नियमनिर्धारणं कुर्वन्ति। यथा अत्र उदाहरणे "महेन्द्र" इति पदं समस्तं, सन्दिग्धं च वर्तते। तस्य एकपदत्वेनैव ग्रहणम्। परन्तु "यस्योभयम्" इति तु

सन्दिग्धमेव, न समस्तम्। तत्र यस्य+उभयम् इति द्वे पदे वर्तेते। अतः अनेकपदत्वेनात्र ग्रहणं सन्धिरप्यनिवार्या न भवति। एवं परीक्ष्य परिकल्पनां नियमयन्ति छात्राः। सन्धिः—संहितैकपदे नित्या, समासे नित्या, धातूपसर्गयोरपि संयोगे नित्या, वाक्ये तावद्विवक्षाधीना (भवेत् वा न भवेत्)। सन्दिग्धं सर्वं समस्तं न भवति। ''समस्तस्यैकपदत्वेन ग्रहणम्'' इति नियम्य प्रकृतसमस्यां समादधति। एतेन छात्राः ह्यूरिस्टिक् विधौ स्वयं सक्रियाः सन्तः तत्त्वं संकलय्य, परीक्ष्य, नियमं निर्धार्य ज्ञानं प्राप्नुवन्ति।

**ह्यूरिस्टिक्विधेः मूल्याङ्कनम्**–विद्यालयेषु विज्ञानविषयं सरलतया विहितरीत्या शिक्षयितुं Armstrong महोदयः विधिममुं आविष्कृत्योपकृतवान्। अद्य तु अस्य विविधविषयेषु प्रयोगो भवति। एतदर्थं सम्पूर्णं शिक्षाजगत् तं प्रति कृतज्ञः अस्ति। गणितं, व्याकरणमिति विषयेष्वस्याधिक्येन प्रयोगः शिक्षाविद्भिः विधीयते।

अयं विधिः न मौलिकः। समस्या-आगमनविधेः संयोजनायं प्राप्यते। विधिः समस्यां पुरस्कृत्य प्रवर्तते। समस्याविधिरपि इदमेव कर्म करोति। एवं लक्ष्यमवलोक्य लक्षणं परिकल्प्यते आगमनविधौ। तथैवात्रापि समस्यां समाधातुं लक्ष्यमवलोक्य लक्षणरूपेण समाधानं परिकल्प्यते। आगमनविध्यपेक्षया नायमतिरिक्तः विधिः इति प्रमाणयति। अर्थात् आगमनविधेः परिवर्तितं रूपमेव ह्यूरिस्टिक् विधिरिति। तत्र आंशिकः भेदो वर्तते- आगमनविधौ समस्या-मनुत्पाद्योदाहरणानि प्रस्तूयन्ते। अत्र समस्यामुत्पाद्य लक्ष्ये तत्त्वानां निरीक्षणमिति एकं पदमतिरिक्तं वर्तते। विधिरयं समस्याविधेः प्रतिरूपकः वर्तते। यथा समस्याविधौ समस्यायाः समाधानान्वेषणार्थं यतन्ते छात्राः, तथैवात्रापि विधौ। Smith and Harrison स्पष्टयतः—'अस्मिन् विधौ छात्राः स्वीयसमस्यायास्समाधानमितरेषां साहाय्येन विना स्वयमेव सपरिश्रमं सप्रयासं च प्राप्नुवन्ति'' इति। अर्थात् ह्यूरिस्टिक् विधिः समस्यां पुरस्कृत्यैव प्रवर्तते, समस्याविधिवत्। Bossing महोदयः समस्याविधेः पदानि इत्थं वर्गीकरोति। 1. समस्यायाः स्वीकृतिः। 2. समस्यायाः स्पष्टीकरणम्। 3. तत्त्वानां सङ्ग्रहः। 4. तत्त्वानां सङ्घटनम्। 5. तत्त्वानां विश्लेषणम्। 6. निष्कर्षः /प्रयोगः।

"Hamby" महोदयेन शिक्षाचार्येण ह्यूरिस्टिक् विधेः इत्थं पदानि प्रतिपाद्यन्ते–

1. समस्यायाः कथनम्।
2. तत्त्वानां निरीक्षणं सारणीकरणम्।
3. परिकल्पना।
4. परीक्षणम्।
5. निष्कर्षः/नियमनिर्धारणम्।

यदि अस्माभिः तटस्थबुद्ध्या तुलना क्रियते तर्हि अनयोर्मध्ये भेद एव नानुभूयेत। अतः शिक्षाचार्याणां विचार एव प्रामाण्यम्। Prof.S.K.Kocchar निरूपयति-''अध्यापकः समस्यां समुपस्थाप्य विरमेत्। ततः प्रक्रियायाः केवलं निरीक्षणं कुर्यात्'' इति। येन च सुस्पष्टं प्रतीयेत

समस्याविधिमतिरिच्य न कश्चन नूतनोऽयमाविष्कार इति। Bhatia and Bhatia निरूप्यतः—
''ह्यूरिस्टिक् विधिः समस्यायाः समाधानमागमनेननिगमनेन च करोति'' इति। एवं विचार्यमाणे स्पष्टं प्रतिभायाद् ह्यूरिस्टिक् विधिः आगमनसमस्याविध्योः संयुक्ताकारक एवेति।

**निष्कर्षः**

अस्माभिरिदमेवोच्यते नायं समस्याविधिवत्, आगमनवत्, बालोद्यानपद्धति वत् स्वतन्त्र इति। विधेस्तावत् कश्चन् पृथगात्मा नूनमस्त्येव।

नवविधिः कश्चनाविष्कृतो भवति चेत्, तत्रावश्यमेव कानिचन् प्रचलिततत्त्वानि दृश्येरन्। अतः द्वयोः विध्योः संयोजनेन प्रचलितस्य विधेः परिवर्धनेन वा नवविधिराविष्कृतो भवतु, तत्र मौलिकतायाः विवेचनापेक्षया प्रक्रियायाः एव महत्त्वं प्रदेयमस्माभिः। अत्र विधौ प्रक्रिया महत्त्वपूर्णा परिलक्ष्यते। सा च छात्रेषु सर्वाङ्गीनं विकासं कारयति। प्रो0आर्मस्टॉंग महोदयस्य विधिरयं संश्लिष्टस्यास्य विधेः व्याकरणशिक्षणे महत्त्वं निर्विवादम् एव।

**ह्यूरिस्टिक्विधेः गुणाः**

1. वैज्ञानिकभावनामुत्पाद्य, अन्वेषणे प्रयोगे चासक्तिं वर्धयति।
2. छात्रेषु अध्यापकेषु च परिश्रमं प्रयासं चोत्तेजयति।
3. आत्मविश्वासं, आत्मनिर्भरतां च प्रोत्साहयति।
4. अर्जितं ज्ञानं चिरं तिष्ठति, यतः छात्रः स्वयमन्विष्य तत्त्वमवगच्छति।
5. छात्रः सक्रियो भवति।
6. छात्राः स्वयमेव सर्वं कुर्वन्तिं, अध्यापकः मार्गमेव दर्शयति।
7. छात्राध्यापकयोः सम्बन्धः दृढीयान् भवति।
8. छात्राणां मानसिकक्षमता विकासं प्राप्नोति।
9. मनोवैज्ञानिकोऽयं विधिः।
10. पूर्वानुभवानां स्थानान्तरीकरणे सक्षमाः भवन्ति छात्राः।
11. अत्र बहवो गुणाः प्रशंसनीया वर्तन्ते, यैः व्याकरणशिक्षणं हितकरं भवन्ति।

**ह्यूरिस्टिक्विधेः न्यूनताः**

1. कक्षाऽध्यापने सर्वदा अस्योपयोगः न सम्भवति।
2. महान् समयोऽपेक्षितो भवति।
3. प्रक्रियेयं बालानां क्षमतामातिरिच्यते।
4. अन्वेपणशीलता, तत्त्वसंकलनं, निरीक्षणं, सारणीकरणम् इति प्रौढैरप्यतिकष्टेन साध्यते।
5. सामान्यशिक्षकैः व्यवस्थापितुं न शक्यते।
6. रुच्युत्पादनं, समस्यायाः चयनं, निरीक्षणं, सर्वं च श्रमेण साध्यं भवति।

**उपसंहार**

विधेः गुणदोषाणां विवेचनेन गुणानामेवाधिक्यमेवावलोक्यते। किन्तु परीक्षाकेन्द्रितेऽस्मिन्

वातावरणे विधे: प्रयोग: यथावत् न सम्भवति। अपि च विशिष्टोपकरणानां शिक्षकाणां च आवश्यकता महती वर्तते। तथाऽपि विधे: लाभान् विचिन्त्य बालानां, शिक्षकाणां, उपकरणानां, वातावरणस्य च स्थितिमवलोक्य तदनुगुणं यथाशक्ति: विधि: अयं प्रयोगे आनेतव्य:। गणितं, व्याकरणं, विज्ञानादिषु विषयेषु अवश्यमेवायं प्रयोज्य:। विशिष्टमाध्यमिकविद्यालयेषु संस्कृतव्याकरणं यद्यनेन विधिनाऽध्याप्येत तर्हि शिक्षणं सार्थकं हितकरं च भवेत्।

**(ज) प्रयोजनविधि: (योजना)**

(Project Method)

प्रयोजनविधि: वहुकालाद् व्यवहारे वर्तते। प्रयोजनविधि: योजनाविधिरिति शब्दावर्थान्तरे प्रयुज्यते। अस्माकं वेदेषु, उपनिषत्सु, इतिहासेषु, पुराणेषु च प्रयोजनविधेस्संसूचना: प्राप्यन्ते। अस्माभि: न बलादारोप्यते, एतद्दृष्ट्या वा विचार्यते। किन्तु प्रयोजनविधे: अस्तित्त्वे प्रमाणानि लक्ष्यमवलोक्योह्येरन्। इयं योजनाऽध्ययनं अध्यापनं वा विविध- विषयेष्ववलोक्यते-यथा-

1. पशुपालनं, 2. ब्रह्मज्ञानार्जनं, 3. अस्त्रशस्त्रादि प्रापणमिति।

**1. पशुपालनम्**–शतपथब्राह्मणे प्रमाणं लभते-सत्यकामो जाबाल: गुरोराश्रमस्थानां चतुश्शतं गवां संख्यां सहस्रं कारयिष्यामीति योजनां परिकल्प्य तामनु प्रायतत इति।

**2. ब्रह्मज्ञानार्जनम्**–यदृच्छया पित्रा क्रोधेन प्रोक्तस्सन् नचिकेता: ब्रह्मजिज्ञासु र्भूत्वा बलवतीं योजनां विचिन्त्य यमराजमाश्रित्य ब्रह्मज्ञानं प्राप्नोतीति कठोपनिषदि योजनाविधे: प्रारूपमिव दृश्यते।

**3. अस्त्रशस्त्रादि-प्रापणम्**–महाभारतेऽपि श्रद्धालु: भक्त: एकलव्य: गुरोराशिषा महत्त्याऽनुकम्पया च धनुर्विद्यायां नैपुण्यप्राप्तये स्वयमेव वातावरणानुकूलं सुविचिन्त्य "अभ्यासनियमं, एकाग्रतानियमं, स्वतन्त्रतानियमं" इति मनोवैज्ञानिकनियमानामाधारेण काञ्चन् सुयोजनां परिकल्प्य प्रायतत। तत्र साफल्यम् अपि अवाप इति योजनाविधे: संसूचनमिव प्रमाणं लभते। एवम् अर्जुनोऽपि पाशुपतास्त्रप्राप्तये भगवत: कृष्णस्य मार्गदर्शनं प्राप्य, प्रथमं क: उपासितव्य:? कुत्र कथं च तप: आचरणीयम्? किं किमस्त्रं प्राप्तव्यम्? इति प्रश्नान् विचिन्त्य इन्द्रं सन्तोष्य ईशं च तोषयित्वा "दिव्यास्त्रप्रापणम्" इत्याख्यायां योजनायां विजयं प्राप्नोदिति च श्रूयते। एवं विचार्यमाणे योजनाविधितुल्यं तदाकारकं प्रारूपं वा प्रचारे पुराऽऽसीदिति वक्तुमस्ति किञ्चिन्निदानमिति।

**एवं च प्रयोजनविधे: मूलम्**–रूसोमहोदयस्य कृतौ Emile-book 3 .नामके ग्रन्थे, Froebel महोदयस्य "मानवशिक्षा" इति ग्रन्थे, Cobnett महोदयस्य "युवकेभ्य: सन्देश:" इति ग्रन्थे च अवलोक्यते। वस्तुत: विधिरयं शिक्षावाचस्पते: John Dewey महोदयस्य सिद्धान्तानां परिणाम एव। स च व्यावहारिक-साधनात्मक- आवश्यकतात्मक-प्रयोगात्मकदृष्टिकोणेषु प्रयोजनवादं प्रत्यपादयत्। तस्यैव परिणामोऽयं विधि:। John Dewey.तस्य शिष्य: W.H.Kilpatrik चास्य प्रवर्तकौ मन्येते। शिक्षाक्षेत्रे बाहुल्येनायम् उपयुज्यते। अस्य शिक्षेतिहासे महत्त्वपूर्णं-स्थानं वर्तते।

**अर्थः/परिभाषा**

विद्यालयेषु जीवनेन सम्बद्धानां पाठ्यविषयाणां शिक्षणार्थं कामपि योजनां परिकल्प्य क्रमबद्धकार्यान्वयप्रक्रियया अधिगमस्योत्तेजनमेव प्रयोजनविधिरित्यभिधीयते शिक्षाविद्भिः।

1. व्यावहारिक-समस्यानां सामूहिकप्रयासैः बुद्धिशक्त्या, नैतिकप्रशिक्षणेन च समाधानान्वेषणमेव प्रयोजना भवति-(Robert K.RusK)

2. सामाजिकवातावरणे संलग्नतापूर्वकं क्रियमाणाः सोद्देश्यप्रक्रिया एव योजना भवन्ति। [Kilpatrik]

3. प्राकृतिकवातावरणे समस्यात्मकप्रक्रियायाः समाधनान्वेषणमेव योजना। [Stevenson]

4. योजना नाम आङ्गिकप्रक्रिया भवति। यत्र छात्राः उद्देश्ययुक्तां योजनां स्वयं परिकल्पयन्ति। [S.C.Parker]

5. नायम् आगमन-निगमनविधिवत् कश्चन् सामान्यो विधिः। अयं उद्देश्यपूर्णता, क्रियाशीलतेतिसिद्धान्तद्वितयम् आधारीकृत्य प्रवर्तते। अत्र छात्रः स्वयमेव सर्वं सम्पाद्य साधयति। अयं व्यापकः महत्त्वपूर्णश्च विधिः। [James L.Marsell]

6. स्वतन्त्रवातावरणे क्रियमाणस्य स्वाभाविकस्य जीवनोपयोगिनः कार्यस्य एका प्रक्रिया भवति योजना। किमपि कार्यं पूर्णतया साधयितुमत्र प्रयासो विधीयते। शारीरिक-मानसिक-सामाजिक संलग्नताऽत्रापेक्षिता भवति। [Yoakam and Simpson]

7. योजना जीवनस्याभिन्नमङ्गं वर्तते। योजनाविधेः ''क्रिययाऽधिगमः'' इति विवरणापेक्षया ''जीवनेनाधिगमः'' इति विवरणमेवोचितं भवेत्। [Prof. Ballard]

8. या स्वैच्छिकप्रक्रिया निर्माणात्मकप्रयासैः चिन्तनैः वा वांछितपरिणामं प्रापयति, सैव योजना। [Thomas and Long]

उपरोक्तानामभिप्रायाणामालोचनेन योजना नाम जीवस्यैका प्रक्रिया इति फलति। जीवनप्रक्रियायाः कश्चनांश एव विद्यालयेषु प्रयोजनविधिरिति नाम्ना प्रयुज्यते।

**योजनायां चत्वारो विषयाः प्रामुख्यं भजन्ते**

1. स्वाभाविकप्रवाहः,
2. उद्देश्यपूर्णता,
3. रुचिः,
4. क्रियाशीलता, प्रतियोजने एते विषया निहिताः भवन्ति।

यतः योजनाविधौ छात्राः स्वतन्त्राः सन्तः कर्मणि रमन्ते। यदि तत्रोद्देश्यं, स्वाभाविकता, रूचिर्वा न भवेत्, कथं तेषां कार्ये प्रवेशो जायेत? अतः स्वाभाविक- प्रयासोऽपेक्षितः। प्राचीनाः शिक्षाचार्याः—''जीवनस्यैकं साधनं भवति शिक्षा'' इत्यचिन्तयन्। परन्त्वाधुनिकाः शिक्षाचार्याः ''जीवनस्यङ्गं भवति शिक्षा'' इत्यभिप्रयन्ति। अत एव योजना नाम जीवनप्रक्रिया इत्यूरीकुर्वन्ति।

योजनाविधौ अनुभवस्यापि महत्त्वं वर्तते। यतः स्वानुभवजन्यं ज्ञानमेव वास्तविकं ज्ञानं प्रापयितुं शक्नुयात्।

**प्रयोजनविधौ सिद्धान्ताः**

1. स्वभाविकतासिद्धान्तः,
2. मनोवैज्ञानिकसिद्धान्तः,
3. क्रियाशीलसिद्धान्तः,
4. नियोजनसिद्धान्तः,
5. उद्देश्यसिद्धान्तः,
6. रूचेः सिद्धान्तः,
7. वास्तविकतासिद्धान्तः,
8. सामाजिकतासिद्धान्तः,
9. स्वतन्त्रतासिद्धान्तः,
10. उपयोगसिद्धान्तः, एतानि आधारीकृत्यानि सिद्धान्तानि प्रयोजनविधेः परिकल्पितानि वर्तन्ते।

**प्रयोजन विधेः प्रयोगक्रमः**—प्रयोगक्रमे पञ्चपदानि वर्तन्ते। एतानि पञ्चपदानि क्रमशः विवेचितव्यानि–

**1. परिस्थित्युत्पादनम्**–अध्यापकः छात्रेषु न किमपि कार्यमारोपयेत्। छात्राः स्वेच्छया परिस्थित्यानुकूलं वातावरणं परिकल्प्य आकर्षयन्ति। अतः अध्यापकः सावधानं विविध परिस्थितीं अवलोक्य ताश्च छात्रैःसह विचारयेत्। छात्राणां रूच्यनुगुणं किं ते चिकीर्षन्तीति जानीयात्। तदनुकूलं वातावरणं परिकल्प्य आकर्षयेत्। छात्राः स्वयं परिस्थितिं दृष्ट्वा तत्रत्यसमस्यां विज्ञाय आसक्तिं रूचिं च यथा प्रदर्शयेयुः, तथा तान् प्रोत्साहयेत्। एतदर्थं अध्यापकः सावधानेनपरिस्थितिमुत्पांदयेत्। वार्तालापेन, चित्रप्रदर्शनेन, नवग्रन्थस्य परिचय-माध्यमेन, मनोरञ्जनकार्यक्रमैश्च विविधरूपेण यथोचितं परिस्थितिमुत्पादयितुं शक्नुयात्।

व्याकरणशिक्षणे अस्य सुमहान् उपयोगो वर्तते। उदाहरणद्वारा प्रयोजनं प्रमाणयामः। यथा–अध्यापकः कक्षायां छात्रैः सह सरलसंस्कृतेन वार्तालापं करोति। स्वभापणावसरे ज्ञात्वैव तृतीयाविभक्तियुक्तपदानि आधिक्येन प्रयुङ्क्ते। ''सः मुखेन खादति, रामेण सह सीता गच्छति, मासेन व्याकरणम् अधीतम्, वेगेन धावति, कर्णेन वधिरः, '' इति क्रमबद्धमावश्यकतानुगुणं वार्तालापं करोति। छात्राः अपि सोत्साहं सम्भाषणे भागं गृह्णन्ति। सावधानं परस्परं अभिप्रायान् जानन्ति श्रृण्वन्ति च। कश्चन् छात्रः—पुत्रेण सहागतः पिता, अपि वर्तन्ते इति वदति। अन्यः 'रामेण रानणः हतः'' इति, अन्यः ''रामः रावणम् अमारयत्'' इति कथं न? इत्यत्र को दोपः? इति प्रश्नमुत्थापयति। एवं वातावरणं प्रश्नात्मकं परिणयते। छात्राः चर्चायां प्रवर्तन्ते। अध्यापकं पृच्छन्ति किमत्र साधु? इति। एवं समस्यात्मिका काचन् परिस्थितिरूत्पादिता भवति।

**2. योजनायाः चयनं, उद्देश्यनिर्धारणं च**–संवर्धितकक्षा-वातावरणे काचन् समस्याऽपि

उदिता भवति। छात्राः तां समाधातुमुपायं चिन्तयन्ति। परस्परं विचारयन्ति। अध्यापकः मध्ये-मध्ये प्रोत्साहयन् निरीक्षते। छात्रैः प्रस्तुतां, अर्थात् योजनाः गुणदोष पूर्वकं विवेच्यन्ते। सर्वोत्तम-मान्ययोजनायाः चयने साहाय्यमाचरति। किं तस्याः योजनायाः उद्देश्यमित्यपि निर्धारयति। प्रस्तुतोदाहरणे छात्राणां पुरतः इयं समस्या उदेति-''तृतीयाविभक्तेः प्रयोगः कथं, केन प्रकारेण च भवति'' इति। तां समाधातुमुपायान् प्रस्तुवन्ति। कश्चन्-मम पिता संस्कृतज्ञः तं आलोच्य लिखित्वा च आनयामि। अन्यः—''सूत्राणां समालोचनेन स्पष्टं भविष्यति'' इति। अपरः—अनुवादात्मकाभ्यास-पुस्तकान्यवलोक्य समाधातुं शक्नुमः। केचित् ''प्रौढव्यवहारान् प्रसिद्धकविप्रयोगान् दृष्ट्वा समादध्महे'' इति। एकः ''शिक्षकं पृच्छामः" सरलतया स्पष्टं भविष्यति' इति चोपायान् प्रस्तुवन्ति। शिक्षकः सर्वं निरीक्ष्य मार्गदर्शनं करोति। गुणदोपविवेचनपूर्वकं छात्रेपु ऐकमत्यमापादयति। अन्ते सर्वे छात्राः ''पाठ्यपुस्तकानां सान्दर्भिकग्रन्थानां च परामर्शनेन तृतीयाविभक्तेः प्रयोगवैशिष्ट्यज्ञानम्'' इति निर्धारितां योजनामङ्गीकुर्वन्ति। तां कार्ये अन्वेतुं यतन्ते।

**3. कार्यक्रमनिर्धारणम्**-छात्राः सम्भूय योजनाया कार्यान्वयः कथं भवेदिति विचारयन्ति। तत्र अध्यापकः साहाय्यं करोति। क्रमबद्धकार्यं क्रमस्यावश्यकतां च सूचयेत्। प्रथम वाचा कार्यक्रमः कथं भवेदिति विचार्य तान् प्रस्तावान् स्वपुस्तिकायां लिखेयुः। यदि कार्यक्रम-निर्धारणे सर्वथा अशक्ताः भवेयुः छात्राः, तदा अध्यापकः स्वीयान् द्वित्रान् कार्यक्रमान् तत्रान्यतमं स्वीकर्तुं प्रोत्साहयेत्। कदाऽपि स्वीकृतयोजना न स्थगेत्।प्रकृतोदाहरणे छात्राः बहुधाऽऽलोच्य कांश्चन् कार्यक्रमान् प्रस्तुवन्ति-

1. तृतीया विभक्तिघटितां वाक्यानां संकलनम्।

2. श्लोकस्थानां तृतीयाविभक्तिप्रयोगानां पृथक् संकलनम्। तेषामन्वयक्रमेण व्यवस्थापनम्। अनपेक्षितशव्दानामपसारः।

3. लक्षणाण्यवलोक्य नियमपरिकल्पनम्।

4. नियमानां परीक्षणं, निर्धारणं च।

5. नियमानां सारणीकरणम्। एकैकस्यापि नियमस्य पुरतः तत्सम्बद्धोदाहरणमपि स्यात्।

6. स्वपरिकल्पितानां नियमानां व्याकरणसूत्रैः, पाठ्यपुस्तकेपु प्रदत्तेऽनुवादात्मक-नियमैः वा परीक्षणम्।

7. एकैकमपि नियमं प्रयुज्य स्वतन्त्ररूपेण वाक्यानां रचनम्। इति योजनां समाधातुं विविधकार्यान्वयप्रक्रियाः आलोच्य पुस्तिकासु लेखबद्धं कुर्वन्ति।

**4. कार्यान्वयः**-परिकल्पितानां कार्यक्रमाणामाधारेण छात्राः व्यक्तिगतरूपेण वर्गेपु विभज्य वा योजनाकार्ये प्रयोजयेयुः। यदि वर्गेपु विभज्य यतेरन् तर्हि अध्यापकः ''कः वर्गः किं कुर्यात्? कथं विभज्य कर्तुं शक्यते? इति च मार्गदर्शनं कुर्यात् छात्राः यथा स्वयमेव वर्गेपु विभज्य कर्म कुर्युः तथा ते प्रोत्साहनीयाः। अत्र पदे छात्राः सक्रियाः भवेयुः। यतः तेपु

बहुकार्यमापतति। यथा-पठनं, लेखनं, परस्परविचारः, मातृभाषायाः साहाय्येन अनूद्यावगमनं, चिन्तनं इति साक्षात्कार्येषु, तदतिरिच्य पाठनावसरे पठनकौशलं, गद्यपद्यानां शैलीज्ञानं, वाक्यप्रयोगस्य वैशिष्ट्यं, रसानुभूतिः, परस्परविचाराणां गौरवप्रदानं सहिष्णुता, व्यवहारज्ञानमिति प्रासङ्गिकेषु प्रमुखविषयेष्वपि प्रदत्तवधानाः भवेयुः। इत्थं सपरिश्रमं सरूचिं कार्यक्षेत्रे योजनां प्रयोजयितुं छात्राः प्रोत्साहनीयाः। प्रदत्तोदाहरणे छात्राः पूर्वोक्तरीत्या योजनां कार्ये प्रयुज्य तत्त्वानां सारणीमेकां निर्मान्ति।

**5. मूल्याङ्कनम्**–संकलिततत्त्वानि छात्राः स्वयं परीक्षेरन्। तत्र को दोषः? कानि प्रामाणिकानि? इति इतोऽप्युचितं कथं भवेत्? कानि तत्त्वानि प्रामाणिकानि? इति विमृश्यावगच्छेयुः। अत्र अध्यापकः छात्रेभ्यः मूल्यांकनप्रक्रियामेव सूचयेत्, न हि स्वयं मूल्यांकने प्रवर्तेत। परस्परं वर्गाणां कार्याणि स्वातन्त्र्येण यथोचितं छात्राणां सौविध्येन मापयेयुः। अन्ते स्वस्वयोजनापुस्तिकायां सम्पूर्णयोजनाः कार्यक्रमविवरणं लेखबद्धं कुर्युः। प्रस्तुत व्याकरणविषये छात्राः सारणीकृतानां तृतीयाविभक्ति युक्तानि वाक्यानि निरीक्ष्य, परीक्ष्य, विचारं विमर्शयन्ति। दोषान् परिवर्त्य लिखन्ति। अन्ते स्वपुस्तिकायां योजनां परिष्कारेण लेखबद्धं कुर्वन्ति। नियमनिर्धारणम् इत्थं वर्तते। यथा–

1. विना योगे तृतीया भवति।
2. अलं, साकं योगे तृतीया भवति।
3. अङ्गविकारे तृतीया,
4. करणे तृतीया,
5. सहार्थे तृतीया,
6. अपवर्गे तृतीया,
7. प्राकृति कृति स्वभावार्थे तृतीया,
8. लक्षणे उपलक्षणे तृतीया भवति।

इत्थं प्रयोजनविधौ पञ्चसोपानानि महत्त्वपूर्णानि सन्ति। अयं विधिः पूर्णतया बालकेन्द्रितं वर्तते। अत्र छात्राणां परस्परसहयोग–सहानुभूतिषु, क्रियानिष्ठप्रौढतासु, उद्देश्यपूर्णेषु कार्येषु, प्राप्तानुभवानां स्थान्तरीकरण–कौशलेषु, सीमितसाधनानां सहयोगेन उत्तमलाभप्राप्तिकौशलेषु च दृश्येत। एवमयं योजनाविधिः शिक्षणप्रक्रियायां प्रमुखं स्थानं भजते।

**योजनायाःप्रकाराः**—(चतस्रोयोजनाःप्रमुखाः) रचनात्मकः, रसात्मकः, समस्यात्मकः, अभ्यासात्मिकः योजनायाः प्रकारा भवन्ति। यथा–

**1. रचनात्मकयोजना**–अत्र रचनात्मक–कार्याणां योजनाबद्धकार्यान्वयः भवति। छात्रः स्वबुद्धिमुपयुज्य आदर्शवस्तूनि, विषयान् वा विचिन्त्य मौलिकतां प्रदर्शयेत्। यथा-चित्र–निर्माणं, भवननिर्माणं, पुत्तलिकादीनां निर्माणं, पत्रलेखनं, व्याकरण नियमान् उपयुज्य निबन्धलेखनम् इति।

**2. रसात्मकयोजना**–अत्र रसानुभूत्यै, आनन्दप्राप्तये च योजनाद्वारा यत्नः क्रियते। अनुभूतिप्रधानेयं योजना। यथा-कथाश्रवणं, संगीतश्रवणं, चित्रदर्शनम्, नाटकादीनां दर्शनं, व्यवहारनिरीक्षणं इति।

**3. समस्यात्मकयोजना**–इयं समस्याविधिवदेव प्रवर्तते। अत्र कांचन समस्यां पुरस्कृत्य समाधानान्वेषणाय योजना परिकल्पिता भवति। यथा–जले निमग्नो दण्डांशः कथं भग्न इव दृश्यते? लौहपुरुषाः कथं कर्म कुर्वन्ति? शीतोष्णपरिस्थितीनां प्रभावः विविधकालेषु कथं इति विज्ञानं, भूगोलशास्त्रं, इतिहासः इत्यादिषु विषयेषु योजना भवितुमर्हन्ति। विशिष्टव्याकरणशिक्षणे इयं बहूपकरोति। लिङ्गज्ञानं, कारकज्ञानं, समासज्ञानं, सन्धिज्ञानं, इति सर्वत्रास्याः उपयोगः परिलक्ष्यते।

**4. अभ्यासात्मकयोजना**–विशेषकौशलप्राप्तये इयमुपकरोति। यथा- योजनं, वियोजनं, विभाजनं, गुणनमिति गणितविषयेषु, चित्रणं, तरणं, क्रीडनमिति विषयेषु च उपकरोति। व्याकरणशिक्षणे तावदनुपमं स्थानं भजते। यथा–उच्चारणशिक्षणं, शब्दरूपाणां धातुरूपाणां कण्ठस्थीकरणं, कर्तृवाच्यप्रयोगः कर्मवाच्यप्रयोगः भाषणं इति बहुत्र ज्ञात्वाऽज्ञात्वा वा अस्यैव विधेः प्रयोगः क्रियते।

एताः चतस्रोऽपि योजनाः व्यक्तिगतरूपेण, सामूहिकरूपेण च भवितुमर्हन्ति। व्यक्तिगतयोजनायां छात्रः स्वातन्त्र्येण एकाकी भूत्वा कर्म सम्पादयति। सामूहिकयोजनायां परस्परं विचार्य सम्भूय कर्म साधयन्ति।

**प्रयोजनविधौ गुणाः**

1. अभ्यासस्य महत्त्वं बोधयति।
2. विस्तृतज्ञानं प्रापयति।
3. सामाजिकव्यवस्थापने प्रशिक्षणं ददाति।
4. विद्यालयस्य विविधविषयाणां मध्ये सम्पर्कं स्थापयति।
5. परिश्रमस्य महत्त्वं बोधयति।
6. छात्रं क्रियाशीलं कारयति।
7. मनोवैज्ञानिकतत्त्वाधारेण प्रवर्तते।
8. छात्रान् तत्त्वानि स्वयमन्वेष्टुं प्रेरयति।
9. छात्रेषु आत्मसन्तुष्टिं, आत्मविश्वासं, आत्मनिर्भरतां च वर्धयति।
10. छात्रेषु नेतृत्वगुणान् विकासयति।
11. प्रजातन्त्रभावनामभिवर्धयति।
12. तर्क-चिन्तन-विश्लेषण-विचारात्मकशक्तिं वर्धयति।
13. परस्परव्यवहारः, सहिष्णुता, नैतिकता इति गुणेषु वाञ्छनीयं परिवर्तनमानयति।
14. छात्राः तटस्थाः तत्त्वज्ञाश्च भवन्ति।
15. छात्रशिक्षकयोर्मध्ये घनिष्ठसम्पर्कं स्थापयति।

**प्रयोजनविधौ दोषा:**

1. सर्वदा प्रयोगार्हो न वर्तते, समयसापेक्षत्वात्।
2. सर्वै: अध्यापकै: प्रयोक्तुं न शक्यते, विशेष-कौशलानामावश्यकत्वात्।
3. सर्वेभ्य: बालेभ्य: उपकाराय न भवेत्।
4. औपचारिकपाठ्यक्रमस्य समापने बाधामुत्पादयति।
5. माध्यमिकस्तरे लाभप्रदो न वर्तते।

**उपसंहार:**

प्रयोजनविधे: गुणदोषाणां विवेचनेन विधे: स्वरूपं स्पष्टं भवति। केचन् विधिं स्तुवन्ति, अपरे च निन्दन्ति। व्याकरणशिक्षणे सुमहान् उपयोग: वर्तते। सर्वदानेन अध्यापनं न सम्भवति चेदपि, कादाचित्कत्वेनापि अस्य प्रयोग: लाभप्रद एव। यत: छात्र: स्वयमन्विष्य व्याकरणतत्त्वानि अवगच्छति। एतेन तत्त्वं मनसि सुस्थापितं भवति। परन्तु अस्य साफल्यं शिक्षकान् उपजीव्यवर्तते। अत: अध्यापका: स्वकर्तव्यं विचिन्त्य यथोचितं, यथासम्भवं, यथाविधि चास्य प्रयोगं कुर्यु:।

**( झ ) प्रदर्शनविधि:**
(Demunstratrion Method)

सैद्धान्तिकविषयाणां व्यवहारात्मकप्रयोग एव प्रदर्शनविधि:। व्याख्यानानन्तरं व्याख्यातस्य तत्त्वस्य प्रयोगद्वारा प्रतिपादनमत्र क्रियते। छात्रा: प्रदर्शनकाले प्रक्रियां निरीक्षन्ते, सोत्साहं तत्र भागं गृह्णन्ति च। विधिरयं व्याकरणमध्यापयितुं बहुधोपकरोति। व्याख्यानेन छात्रा: निष्क्रिया: भवन्ति। अतएव व्याख्यानेन सह प्रयोगप्रदर्शनमपि कुर्याच्छिक्षक:। प्रदर्शनद्वारा नवतत्त्वानि प्रस्तूयात्। यथा–

1. प्रदर्शनकाले प्रश्नान् प्रष्टुं छात्रान् प्रोत्साहयेत् अध्यापक:।
2. प्रदर्शनं वाचां, चित्राणां, आदर्शाणां, विद्युद्यन्त्राणां च सहयोगेन स्यात्।
3. प्रदर्शनं शुद्धं, सरलं, सुबोधं च स्यात्।
4. प्रदर्शनं रुच्युत्पादकं भवेत्।
5. दैनिकक्रियाभि: सह सम्बन्ध: भवेत्।
6. प्रदर्शनात्पूर्वं विषयवस्तु सम्यगालोच्यागच्छेत् अध्यापक:।
7. पाठ्यपुस्तके प्रदत्तविषयानतिरिच्य तत्समा: विषया अपि प्रदर्शनविधिना पाठयितुं योग्या:। एतेन मौलिकता छात्रेषु वर्धेत।
8. छात्रा: सक्रिया: भवेयु:। तदर्थ शिक्षक: यतेत।

**व्याकरणे प्रयोग:**–व्याकरणशिक्षणे सन्धि-समासादीनाम् अध्यापनं प्रदर्शनेन साध्यं भवति। लेखाचित्रं [Chart] वर्णपत्रं [Letter card]चित्रमित्यादीनां सहयोगेन व्याकरणं रुचिकरमध्यापयितुं शक्नुयाच्छिक्षक:। सन्धि-समासादिषु विषयेषु दैनिकोदाहरणानि स्वीकृत्य प्रदर्शनं कुर्यात्। उच्चारणशिक्षणसमये ध्वनियन्त्रम् उपयुज्य, स्वयं मुखेन व्याख्याय च

स्थानप्रयत्नान् संसूच्य प्रदर्शनविधिना पाठयितुं शक्नुयात्। एवं वचनज्ञानं चित्रादिकं प्रदर्श्य कारयेत् इत्थं यथासम्भवं व्याकरणशिक्षणे अस्योपयोगं कुर्यात्।

**विमर्शः**–प्रदर्शनविधिः व्याकरणशिक्षणं सरलीकरोति। व्याकरणतत्त्वानि सुगमतयोपकरणानां साहाय्येन अवगमयति। छात्राः अपि तत्त्वानि निरीक्ष्य सहभागिनः भूत्वा ज्ञानं प्राप्नुवन्ति। एतेन प्राप्तं ज्ञानं चिरं तिष्ठति। वस्तुतः शिक्षकस्यायं परीक्षकः भवति। यतः अध्यापकः प्रदर्शनात्पूर्व बहुविचिन्त्यावलोक्य प्रक्रियां निश्चिनोति। अत्र एक एव दोषः आरोप्यते, समयसापेक्षी इति। यदि अध्यापकः सोत्साहं सामर्थ्येन च प्रयुञ्जीत तर्हि अयं दोषः दूरीकृतः भवेत्। विधेः साफल्यम् अध्यापकस्य कौशलमवलम्ब्य तिष्ठति। अतः अध्यापकाः समाहवममुं सार्थकं सम्पादयेयुः।

### (ञ) प्रयोगशालाविधिः
(Laboratory Method)

प्रयोगशालाविधिः न स्वतन्त्रः तत्रेतरविधीनामपेक्षा वर्तते। निदर्शनविधिमुपजीव्यायं प्रवर्तते। प्राकृतिक-विज्ञानेषु पार्थक्येनास्य प्रयोगः भवितुमर्हति। परन्तु व्याकरणशिक्षणे कक्ष्या एव प्रयोगशाला भवति। अतः कक्ष्यायां प्रदर्शनविधिना यद्यपि शिक्षणं भवति, तत्र स्वतः एव प्रयोगशालाविधिरप्युपतिष्ठते। उच्चारणशिक्षणमनेन विधिना भवितुमर्हति।

### (ट) शोभायात्राविधिः
(Exrusion Method)

अयं विधिः मनोवैज्ञानिकः। एषः छात्राणां रुच्यनुगुणं प्रवर्तते। छात्राः प्रायेण प्राकृतिकवातावरणे ज्ञानमधिजिगांसन्ते। अतः मासे एकवारं छात्राः बहिः नेतव्याः प्राकृतिकवातावरणे व्याकरणतत्त्वानि व्यावहारिकरूपेण बोधयेदध्यापकः। "भाषाव्याकरणं यस्मिन् स्थाने शिक्ष्यते, तदपेक्षया व्याकरणं यत्र दैनिकव्यवहारे वर्तते तत्स्थानं महत्त्वपूर्णं भवति"। अतः शोभायात्रा माध्यमेन मुक्ते वातावरणे विभिन्नानां व्याकरणतत्त्वानां महत्त्वमधिगम्य व्यवहर्तुमवकाशं लभन्ते छात्राः। शिक्षकोऽपि यात्राकाले व्याकरणनियमान् मनसि निधाय तदनुगुणं विवरणं दद्यात्। एतेन नियमाः छात्राणां मनसि सरलतया व्यवस्थापिताः भवेयुः। यथा-शिक्षकः छात्रान् कांचन् प्राणिशालां नयति। तत्र प्राणिशालादृश्यं सरलसंस्कृतेन विवृणुयात्, येन लिङ्गवचन-समासविषयेषु ज्ञानं प्राप्नुयुः छात्राः। यथा-वचनज्ञानार्थम्-अयं गजः, तौ भल्लूकौ। कारकज्ञानार्थम्- मार्गमुभयतः पुष्पलताः सन्ति, नगरम् परितः बालकाः तिष्ठन्ति। समासज्ञानार्थम्-अयं खलु मृगः, अयं च व्याघ्रभीतः। इति यथासंभवं स्वाभाविकतया व्याकरणनियमान् वाक्येषु प्रयोजयेत्। छात्राः अपि वार्तालापेषु व्याकरणविषयान् यथाशक्ति प्रयोक्तुं प्रेरणीयाः एवं शोभायात्राविधिना अनौपचारिके वातावरणे व्यावहारिकक्षमतां प्राप्नुयुः छात्राः।

## (ठ) इतिहासविधिः
(Historical Method)

छात्रेभ्यः भाषायाः विकासः वर्णनप्रणालीमनुसृत्य बोध्यते। तस्य महत्त्वं, पुराकाले समाजस्य व्याकरणविषयक-धारणा कीदृशी आसीत् इति सर्वम् इतिहासरूपेण पाठ्यते। येन छात्राः सम्प्रेरिताः व्याकरणतत्त्वं सोत्साहं शिक्षेरन्। यथा-कथाकथनप्रणाल्या-

**यस्य षष्ठी चतुर्थी च विहस्य च विहाय च।**
**यस्याहं च द्वितीया स्यात् द्वितीयास्यामहं कथम्।।**

या व्यक्तिः 'विहस्य' (क्रियापदं) संज्ञायाः षष्ठीविभक्तिरूपं, 'विहाय' (क्रियापदं) संज्ञायाः चतुर्थीविभक्तेः रूपं तथा अहं सर्वनामशब्दं द्वितीयाविभक्तेः रूपं कथयति, तस्याः व्यक्तेः अहं द्वितीया (भार्या) कथं भवितुम् अर्हामि।

**यद्यपि बहुनाधीषे तथाऽपि पठ पुत्र व्याकरणम्।**
**स्वजनः (सम्बन्धी) श्वजनो (कुत्ता) माभूत् सकलं (सम्पूर्ण)**
**शकलं (खण्ड) सकृत् (एकवार) शकृत् (विष्ठा)।।**

इति श्लोकाः बोधनीयाः। एवं अन्नंभट्टस्य "दधिमानय" इति कथाश्चात्र भवितुमर्हन्ति। अन्नंभट्टः सामान्यः आसीत्। तस्य गृहे एकदा बहवो विद्वांसः समागता। सर्वे संस्कृते व्यवाहरन्। भोजनकाले अन्नंभट्टस्यापि संस्कृते व्यवहर्तुम् इच्छाऽजागरत्। सः उच्चैः भोजनान्ते "दधिम् आनय" इति पत्नीमादिशत्। सर्वे विद्वांसः तच्छ्रुत्वा उपहसितवन्तः। तदा अन्नंभट्टस्य पत्नी "किमर्थं हसन्ति दधि मा आनय" इति खलु निषेधः कृतः इति प्रयोगं समर्थयत्। ततः पश्चात् लिङ्गज्ञानमपि मम न वर्तते। पत्न्या रक्षितोऽस्मि इति कण्ठमनुभूय काशीं सम्प्राप्य ज्ञानं प्राप्नोदिति कथा। एवं व्याकरणतत्त्वबोधिकाः कथाः श्रावयेत् अध्यापकः। अत्र कथामाध्यमेन तत्त्वानि बोध्यन्ते इति छात्राः रुचिं प्रदर्शयेयुः। तत्त्वं च अवगच्छेयुः।

## (ड) विषयविधिः
(Topic Method)

विषयविधिः परम्परागतपद्धतौ प्रचलन् वर्तते। व्याकरणं विभिन्न विषयेषु वर्गीकृतं वर्तते-कारक-समास-कृदन्त-तद्धितप्रयोगाः इति। यथाक्रमं एते विषयाः पाठ्यन्ते। माध्यमिकविद्यालयेषु तथा न भवति, तत्र पाठ्यपुस्तकमवलम्ब्य प्रासङ्गिकं व्याकरणमेव पाठ्यते। अतः अध्यापकः ज्ञानमुत्तेजयितुं प्रतिमासं, प्रतिपक्षं, प्रतिसप्ताहं वा एकं व्याकरणविषयं सन्दर्भानुसारेण पाठयेत्। एवमस्योपयोगः सीमितः एव वर्तते।

## (ढ) केन्द्रीयविधिः
(Concentric Method)

वस्तुतः नायं विधिः, किन्तु पाठ्यक्रमसंघटनव्यवस्था एव। कस्यचिद्विषयस्य प्रस्ताव-स्तरानुगुणं क्रमिकः स्यात्। प्रथमावस्थायां सामान्यप्रस्तावः, द्वितीयावस्थायां तदपेक्षया घनिष्ठः, ततः अतिघनिष्ठः इति पाठ्यक्रमः व्यवस्थितः स्यात्।

**उपसंहारः**

संस्कृतम् इत्यस्य प्रकृतिप्रत्ययात्मकविचारः इत्यर्थः। संस्कृतस्य पदानि अन्वाख्यायन्ते इति भाष्यव्याख्यानावसरे प्रकृतिप्रत्ययान् विवेचयतीति संस्कृतम्। अतः भाषा नाम्नैव व्याकरणप्रधाना वर्तते। व्याकरणं पुनः सूक्ष्मं विज्ञानं वर्तते। यस्याध्यापनं माध्यमिकविद्यालयेषु विज्ञानरूपेण सुगमतया भवितुमर्हतीति इति धियाऽत्रास्माभिः तस्य विज्ञानत्वमापाद्य तत्पाठनाय यथाशक्ति केचन विधयोऽपि प्रत्यपादि। शिक्षाविदः यथोचितमेतेषां प्रयोगं विदधीरन्निति विश्वासः।

## 2-(क) विज्ञानरूपेण व्याकरणशिक्षणम्।
## Studying Vyakaran as Science

प्रामुख्येन सर्वेऽपि विषयाः कला [Art] विज्ञानं [Science] इति द्विधा वर्गीकृतास्सन्ति। संस्कृते सर्वेऽपि विषयाः शास्त्रशब्देनैव व्यवह्रियन्ते। रसायन-साहित्य-वेदान्तशास्त्रमिति शास्त्रपदवाच्या वर्तन्ते। कथमिदं विभाजनम्? का कला? किं च विज्ञानम्? इत्यत्र किं तावन्निदानमिति विचारयामः। वस्तुतः कला शब्दस्यार्थः विस्तृतः"यत्र व्यक्तेः विवेकपूर्णैः कार्यै घटनानां सामान्य क्रमः स्वयं परिवर्तितः भवति तत्र कला शब्दः प्रयोगार्हतां भजते"इति। एवमालोच्यमाने इतिहासः, अर्थशास्त्रं, समाजशास्त्रं, साहित्यं इत्येतत्सर्वा कलेति भवति। किं तर्हि विज्ञानम्? विज्ञानं तद् भवति यद् वैज्ञानिकविधीनां मूल्यानां कार्यक्रमाणां च प्रयोगं करोति। अवगमनं भविष्यवर्जनं नियन्त्रणं चेति त्रयः विज्ञानस्य गुणाः। एतेषां क्रमबद्धं पालनं यत्करोति तद् विज्ञानं भवति। एवञ्च विचार्यमाणे रसायनं भौतिकं गणितमित्येतत्सर्वं विज्ञानमिति भवति। प्राकृतिकं, सामाजिकमिति भेदेन विज्ञानं द्विधा वर्तते। कला शब्द वाच्यानि शास्त्राणि स्व-विकास-क्रमेण सामाजिक-ज्ञानमिति वर्गे अन्तर्भवन्ति। विज्ञानं च पुनः शुद्ध विज्ञानं प्रयोगविज्ञानमिति विभक्तं भवति।

यतः पूर्वोक्तलक्षणे स्वीकृते सति व्याकरणं विज्ञानपदवाच्यं भवति। व्याकरणं प्रथमं लक्ष्यमवगच्छति यच्च स्वाध्ययनविषयः, तदन्तरं लक्ष्ये प्रयुक्तानां क्रमवद्धतया वर्गीकरणं करोति। ततः भविष्यादिप्रयोगः एवं भवेत्। कदाचित् विकासक्रमेण भविष्यद्योग्यं शब्दजालं अनुभाति। समाजे भाषायाः प्रयोगः व्याकरणेन नियन्त्रितोऽपि भवति। अद्य भाषाप्रयोगशाला, प्रयोज्यः, प्रयोजकः, नव विषयाणामाविष्कारः इति व्याकरणक्षेत्रे महान् विकासः जातो वर्तते। तथा चायं सिद्धान्तः व्याकरणं विज्ञानं साधयति। विज्ञानत्वे सिद्धे के पुनः व्याकरण-विज्ञानस्योद्देश्यानामाधाराः इति विवृणुमः। एतेन व्याकरणस्य विज्ञानत्वं स्पष्टं प्रतिपादितं भविष्यति। यथा-

1. वातावरणस्यावगमनम्।
2. रसानुभूतिः प्रतिपादनम्।
3. वैज्ञानिक दृष्टिकोणम्।

4. ज्ञानार्जने प्रयोगक्षमता च।

5. प्राकृतिकसमस्यासु मानवसामाजिकसमस्यासु च रुच्युत्पादनम्।

समयस्य सदुपयोग: इति केचन विषया: आधारा: वर्तन्ते। तत्रावगमनं प्राकृतिकनियमान् विज्ञातुं लक्ष्ये प्रयोक्तुं छात्रान् प्रेरयति। विविधविषयान् आत्मसात्कर्तुं छात्रान् प्रोत्साहयति। व्याकरणतत्त्वान्यवगत्य तद्द्वारा भाषाया: संरक्षणं, इतरेषां विषयाणामभिवृद्धिं च कारयति।

**विज्ञानशिक्षणविधय: तेषां व्याकरणक्षेत्रे प्रयोगश्च–**

विज्ञानशिक्षणं कलाशिक्षणाद् भिन्नं भवति। एतच्च-

1. बालकेन्द्रितसिद्धान्त:,
2. उपकरणानां समुचितप्रयोग:,
3. आविष्कारसिद्धान्तस्य सम्यक्तया प्रतिपादनम्,
4. आविष्कृतविषयवस्तूनां सरलतया प्रशिक्षणम्,
5. व्याकरणतत्वानां संघटनम्,
6. विशिष्टाज्ञानस्य परिमार्जनम्।

अध्यापकस्य विषयज्ञानम् इति विषयान् आधारीकृत्य प्रवर्तते। एतदनुगुणं विधय: परिकल्पिता: वर्तन्ते। तत्र प्रमुखा: विधय:—

1. व्याख्यानविधि:—(Lecture Method)
2. पाठ्यपुस्तकविधि:—(Text book Method)
3. ह्यूरिस्टिक्विधि:—(Heuristic Method)
4. प्रयोजनविधि:—(ProjectMethod)
5. प्रदर्शनविधि: (Demonstration Method)
6. प्रयोगशालाविधि:—(Laboratory Method)
7. शोभायात्राविधि:—(Excursion Method)
8. इतिहासविधि:—(Historical Method)
9. विषयविधि:—(Topic Method)
10. केन्द्रविधि:—(Concentric Method)

अत्र पाठ्यपुस्तकविधि:, व्याख्यानविधिश्च पूर्वमेवास्माभिर्व्याख्याता:। अत: अवशिष्यन् किञ्चिद्विवृणुम:। ह्यूरिस्टिक-प्रयोजन-विधि पूर्णत: अन्वेषणशीलो वर्तेते। व्याकरणं विज्ञानपदवाच्यं भवति। व्याकरणं प्रथमं लक्ष्यमवगच्छति। लक्ष्ये प्रयुक्तानां क्रमबद्धतया वर्गीकरणं करोति। उचितवातावरणे वैज्ञानिकदृष्ट्या मानवीया सामाजिकीय समस्याया: अन्वेषणपूर्णं ज्ञानं छात्रा: सहजरूपेण प्राप्नुवन्ति। अनुसंधान एवं योजना कार्यक्रमयो: विशिष्टज्ञानं, विविधज्ञानं, विस्तृतज्ञानं व्याकरणनियमान् मनोरंजकरीत्या प्राप्नुवन्ति छात्रा:। समाजे भाषाया: प्रयोग:

व्याकरणेन नियन्त्रितो भवति। अद्य भाषाप्रयोगशाला, प्रयोज्य:, प्रयोजक:, नवविषयाणा-माविष्कार: इतिं व्याकरणक्षेत्रे महान् विकास: जातो वर्तते। विज्ञानस्यायं सिद्धान्त: व्याकरणशिक्षणे अतिमहत्त्वपूर्णो वर्तते इति मन्यन्ते शिक्षाचार्या:। अत: तयो: विध्यो: व्याकरणाध्यापने, सूक्ष्म-व्याकरणतत्त्वानां अन्वेषणे, नियमनिर्धारणे, परीक्षणे च योजनाबद्धरूपेण-कार्यान्वये, मूल्यांकने च महत्त्वपूर्णा: भवन्ति। व्याकरणं रुचिकरमध्यापयितुं योजनात्मकं अन्वेषण-मावश्यकम्। **''मितं भाषेत, बहु कुर्वीत''** इति सिद्धान्तमाश्रित्य अध्यापकेन छात्रा: अत्यल्पमेव पाठ्येरन्, अत्यधिकं अन्वेषणे प्रोत्सहेरन् इति। एवं च योजनां परिकल्प्य क्रमबद्धकार्यान्वयप्रक्रियया अधिगमस्योत्तेजनं करणीयम्।

## (ख) व्याकरणशिक्षणे संगणकस्यानुप्रयोग:।

## Use of Computers in Teaching of Vyakaran

संस्कृतव्याकरणं मनोवैज्ञानिकं वैज्ञानिकं विश्वप्रसिद्धं च वर्तते। सङ्गणक: Computer अद्य अस्माकम् आवश्यक-अङ्गं वर्तते। अद्य अस्य यन्त्रस्य उपयोग:

मुद्रणे, व्यापारे, उद्योगे, शिक्षणप्रशिक्षणे, व्याकरणशिक्षणे, संचारादौ सर्वत्र वर्तन्ते।

**1. संगणकस्य महत्त्वम्-**

1. शीघ्रातिशीघ्रगणनाकार्यम्।
2. सूचनानां संग्रहणम्।
3. छात्राणां विद्यालयसमयसारण्या: संग्रह:।
4. छात्रान् नवीनज्ञानप्रदानम्।
5. छात्राणां विचारशक्ते: कल्पनाशक्तेश्च विकास:।
6. बौद्धिकक्षमताया: विकास:।
7. अनुसंधानकरणे सहायक:।
8. पाठ्यसहगामी क्रियासु सहायक:।
9. परीक्षाकार्यक्रमे प्रमाणपत्रादि-निर्माणे सहायक:।
10. शैक्षिक-पत्र-पत्रिकाणां निर्माणे सहायक:।
11. व्याकरणोपयोगिसूचकचित्राणि निर्माणे सहायक:।

अद्य प्राथमिकस्तरत:उच्चस्तरपर्यन्तम् अस्य शिक्षणं प्रदीयते। व्याकरणशिक्षणाय संगणके "Help Line" इति प्रयोक्तुं शक्यते। देहल्यां गुरुनामकस्य, पूनायां लीलानाम- कस्यकार्यक्रमस्य (Programme) निर्माणमकरोत्। यत् सर्वासु भाषासु प्रयुक्तुं शक्यते। संगणके-जी. आई. एस. आई पत्रक-संयोजने विषयवस्तुन: सर्वासु भाषासु रुपान्तरं कर्तुम् अपि शक्यते। अद्यत्वे अस्मिन् ध्वनिप्रयोगव्यवस्थापि वर्तते। अत: सङ्गणकेन वार्तालापमपि कर्तुं शक्नोति।

**2. व्याकरणशिक्षणे संङ्गणकस्य उपयोग:**

1. उच्चारणस्थानज्ञानाय सचित्रप्रदर्शनम्।

2. प्रयत्नानां विवेचनं प्रदर्शनञ्च करणीयम्।
3. सन्धिशिक्षणावसरे तालिकावद्धरूपेण प्रदर्शनम्।
4. प्रकृति-प्रत्यय व्यवस्थापने सरलतया अवबोधनम्।
5. कारक-समास-प्रत्यय-अव्यय-उपसर्ग-इत्यादीनाम् अध्यापने प्रभावदायको भवति।

**3. Computer BFR इति पदस्य अक्षरश: व्याख्यानम्**

C - Calculate
- गणना
O—Operate
सञ्चालनम्
M - Memorise –
स्मृतौ संस्थापनम्।
P – Print –
मुद्रणम्
U – Update –
आधुनिकीकरणम्
T - Tabulate –
सारिणीनिर्माणम्
E – Edit –
सम्पादनम्
R –Response –
अनुक्रिया

**(ग) व्याकरणोपयोगिसूचकचित्राणि अनुप्रयोग:–**

**(क) उपसर्गेणार्थ विपरिणमते**

प्र ........................
परा ......................
परि ......................
अभि .....................
सं ........................
तिरो .....................
आविर ....................
प्रादुर .....................
उद् .......................

भवति

( ख ) द्विीयाकारकप्रयोगः







( ग ) अव्ययीभावसमासः

| सह | | |
|---|---|---|
| | यौगपद्यार्थे | सचक्रम् |
| | सादृस्यार्थे | ससखि |
| | सम्पत्त्यर्थे | सक्षत्रम् |
| | साकल्यार्थे | सतृणम् |
| | अन्तार्थे | साग्नि |

(घ) एचोऽयवायावः

| वर्णाः | ए | ओ | ऐ | औ |
|---|---|---|---|---|
| आदेशाः | ↓ | ↓ | ↓ | ↓ |
| | अय् | अव् | आय् | आव् |

(ङ) यण् सन्धि

| इ | य |
|---|---|
| उ | व |
| ऋ | र |
| ऌ | ल |

यदि + अपि = यद्यपि
सु + आगतम् = स्वागतम्
पितृ + आदेशः = पित्रादेशः
ऌ + आकृतिः = लाकृतिः

**( च ) तत्पुरुष प्रभेदाः**




卐 卐 卐

# 17

# व्याकरणशिक्षणस्य पाठ्ययोजना

# Lesson Plan for Teaching Vyakaran

## (क) पाठ्ययोजनायाः प्रकारः अध्यापनविन्दवश्च।

## Types of Lesson Plan and its Steps

पठयोजनाया:निर्माणे वहूनि प्रारूपाणि अद्यत्वे प्रचलितानि सन्ति। तानि अधोलिखितानि वर्तन्ते।

**प्रमुखोपागमाः**

1. हरवार्ट–उपागमः (Herbartian approach to lesson plan)
2. ड्वीवी तथा किलपैट्रिक–उपागमः (Dewey and kilpatric approach)
3. मौरिसन् उपागमः (Morrison approach)
4. अमेरिकन् उपागमः (American approach)
5. व्रिटिश् उपागमः (British approach)
6. भारतीय:उपागमः (Indian approach)

एतेषाम् उपागमानाम् आधारेण पाठयोजनाया:यानि प्रमुखप्रारूपाणि सन्ति, तानि इत्थं वर्तन्ते–

1. हरवर्ट–पाठयोजना–(Herbartian approach to lesson plan)
2. ब्यूम् अथवा मूल्याङ्कनपाठयोजना–(Bloom's or evaluation approach)
3. आंशिकपाठयोजना(Unit appach to lesson plan)
4. एन्. सी. ई. आर. टी. पाठयोजना–(N.C.E.R.T approach to lesson plan.

## (ख) पाठ्ययोजना–सन्धि, समास, कारकम्

## Lesson Plan–Sandhi, Samasa and Karaka

(आगमननिगमनविधिमाश्रित्य।)

**व्याकरण-पाठयोजना-1 [Lesson Planning]**

विद्यालयस्य नाम :— कक्षा :—
छात्रध्यापकस्य नाम :— वर्गः :—
विषयः :— कालांशः :—
प्रकरणम् (गुण सन्धि) :— अवधिः :—
दिनाङ्कः :— छात्राणां मध्यायुः :—
वारः :—

**सामान्योद्देश्यानि**

1. ध्वनितत्त्वेन छात्रानां परिचयप्रदानम्।
2. संस्कृतशब्दानां शुद्धरूपेण ज्ञानप्रदानम्।
3. अशुद्धोच्चारणं दूरीकरणार्थ स्थानप्रयत्नानुसारं वर्णानामुच्चारणम्।
4. शुद्धवाक्यरचनायाः ज्ञानप्रदानम्।
5. पदानां सम्यक् प्रयोगार्थं लिङ्गानुशासनस्य ज्ञानप्रदानम्।
6. तर्क-रचनाशक्त्योर्विकासः।

**विशिष्टोद्देश्यानि**—छात्रान् स्वरसन्धेःद्वितीयो भेदः "गुण सन्धिः" विषये विशेषज्ञान-प्रदानम्।

**पूर्वज्ञानम्**—छात्राः स्वर सन्धेः प्रथमो भेदः "यण् सन्धिः" विषये अध्ययनमभ्यासं च अकुर्वन्। छात्राः सन्धेः सामान्य-अर्थं महत्त्वं च जानन्ति।

**सहायकोपकरणानि**—श्यामफलकः, सुधाखण्डः, मार्जनी, पाठ्यपुस्तकं, सन्धेयपत्राणि च।

**प्रस्तावना**—अध्यापकः कक्षायाः श्यामपट्टोपरि निम्नलिखितपदानि लिखित्वा छात्रान् प्रक्ष्यन्ति।

1. इत्यादि 2. स्वागतम् 3. पित्रादेशः 4. लाकृतिः।

प्रश्नाः संभावितोत्तराणि

1. प्रथमपदस्यसन्धि-विच्छेदं कुरुत?-----इति+आदि=इत्यादि (यण्सन्धि)
2. एतयोः पदयोः कयोः वर्णयोः सन्धिं भवति?--इ+आ=य।
3. अन्य पदानां सन्धि-विच्छेदं कुरूत? सु+आगतम्=स्वागतम्,
पितृ+आदेश=पित्रादेश, लृ+आकृतिः=लाकृतिः।
4. एतयोः पदयोः कयोः वर्णयोः सन्धिः भवति? उ+आ=व, ऋ+आ=र, लृ+आ=ल,
5. गुणसन्धिविषये भवन्तः किं जानन्ति? ( **समस्यात्मकोऽयं प्रश्नः** )

**उद्देश्यकथनम्**—अद्य वयं "गुण-सन्धि" विषये विशेषरूपेण अध्ययनं करिष्यामः।

**प्रस्तुतीकरणम्**—अध्यापकः श्यामफलके पूर्वलिखितानि उदाहरणानि उपस्थापयति। यथा-

अआ+ इ=ए/देवेन्द्रः, परमेश्वरः, गणेशः, उपेन्द्रः, हरेन्द्रः इत्यादि (क्रमिक सन्धिविच्छेदं कुरूत) देव+इन्द्रः=देवेन्द्रः।

अ आ+उ=ओ /सूर्य+उदयः=सूर्योदयः, चन्द्रोदयः, छात्रोपस्थितिः, महोदयः, लम्बोदर इत्यादि।

अ आ+ऋ=अर् /देव+ऋषि=देवर्षिः, महर्षिः, राजर्षिः, सप्तर्षिः।

**निरीक्षणम्**—छात्राः प्रस्तुतानि उदाहरणानि सावधानतया निरीक्ष्य परिवर्तनविषये चिन्तयन्ति।

**नियमीकरणम्**—"अदेङ्गुणः, आदगुणः"इति सूत्र-निर्देशानुसारम्-अ आ इति वर्णस्याग्रे इ उ ऋ लृ वा वर्णः आगच्छति तदा पूर्वपरयोः स्थाने (मेलने) "ए, ओ, अर्, अल्" वर्णः भवति।

**स्पष्टीकरणम्**—अध्यापकः नियमं व्यवस्थापयति। सूत्र-सूत्रार्थञ्च बोधयति। यथा- "अदेङ्गुणः, आदगुणः"-"अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। एवं च अत् एङ् अच् इति प्रत्याहारं बोधयति।

**अभ्यासकार्यम्**—शिक्षकः निर्धारितनियमस्य परीक्षणम्, "नियमात् उदाहरणं प्रति, उदाहरणात् नियमं प्रति" इति शिक्षण सूत्रानुसारं श्यामपट्टादि कार्यं करोति।

**गृहकार्यम्**-पाठ्यपुस्तकात् पञ्चदश उदाहरणानि अन्विष्य पदच्छेदं कृत्वा आनयत।

## (ग) (ह्यूरिस्टिक् प्रयोजन, समस्या, विधिमाश्रित्य)

## व्याकरण पाठयोजना-2 Lesson Plan

| | |
|---|---|
| विद्यालयस्य नाम :— | कक्षा :— |
| छात्रध्यापकस्य नाम :— | वर्गः :— |
| विषयः :— | कालांशः :— |
| प्रकरणम् (कारक) :— | अवधिः :— |
| दिनाङ्कः :— | छात्राणां मध्यायुः :— |
| वारः :— | |

**सामान्योद्देश्यानि**

1. संस्कृतभाषायाः वैशिष्ट्यविषये ज्ञानप्रदानम्।
2. विभिन्नशब्दानां शुद्धज्ञानम्।
3. सैद्धान्तिकव्याकरणज्ञानप्रदानम्।
4. छात्रेषु आत्मसन्तुष्टि-आत्मविश्वास-आत्मनिर्भरतानां च वर्धनम्।
5. सुशब्दान् प्रयोक्तुमवकाशकल्पनम्।
6. योजनानुसारं प्रयोगान्वेषणम्।

**विशिष्टोद्देश्यानि**

1. स्वाध्यायस्य महत्त्वं किमिति प्रतिपादनम्।
2. अन्वेषणशीलतायाः अभिवर्धनम्।
3. प्रकृते तृतीया कारकस्य प्रयोगक्षमतोत्पादनम्।

**पूर्वज्ञानम्**-छात्राः कारकविषये सामान्यतया जानन्ति। द्वितीयकारकं निरूढं जानन्ति च।

**समस्याःप्रस्तावः**–( शिक्षकः कक्षां प्रविश्यानौपचारिकरूपेण सम्भाषणं विदधाति। छात्राः सोत्साहं वार्तालापे भागं गृह्णन्ति।भाषणावसरे यथासमयम् एकां समस्यामुत्पादयति। ) यथा-अध्यापकः—द्वितीया विभक्तिः कुत्र भवति?छात्रः—उभयतः, सर्वतः, परितः, योगे एवं उप, अनु, आ, अधि, इत्युपसर्गपूर्वक वस् धातोः प्रयोगेऽपि भवति।

अध्यापकः—तृतीया विभक्तिः कुत्र-कुत्र भवति? कर्मवाच्ये. **( इति समस्यात्मकः प्रश्नः )**

शिक्षकः विषयेऽस्मिन् चिन्तनं विधातुं छात्रान् प्रोत्साहयति। छात्राः परस्परं विचारयन्ति। अध्यापकः पाठ्यपुस्तके अन्यत्र च तृतीया कारकस्य प्रयोगान् अवलोकयितुं प्रेरयति। छात्राः विभिन्न-प्रयोगान् संकलयन्ति, स्वपुस्तिकायां लिखन्ति।

शिक्षकः—छात्राः! किं तृतीया कारकस्य प्रयोगाः दृष्टाः? आम्, ओम्,

शिक्षकः—कुत्र-कुत्र भवति? अत्र पश्यतु श्रीमन् ! अस्माभिः एका सारणी निर्मिता वर्तते।

**सारणी इत्थं वर्तते-**

1. कुम्भकारः दण्डेन चक्रं चालयति।
2. रामेण बाणेन हतो वालिः।
3. नेत्रेण काणः।
4. कर्णेन बधिरः।
5. पादेन खञ्जः।
6. सुखेन जीवति।
7. हस्तेन खादति।?

( अध्यापकः सावधानं सोत्साहञ्चावलोकयन् छात्रान् प्रशंसते। परिकल्पनानां पुनः परीक्षणम् विधातुं प्रेरयति च)

**परीक्षणम्**–छात्राःस्व-स्व परिकल्पनां परीक्षन्ते। परीक्षणकाले शिक्षकस्य सहयोगं गृह्णन्ति।

**नियमनिर्धारणम्**–परीक्षणानन्तरं तृतीयाकारकः कुत्र-कुत्र भवति इति नियमयन्ति। दोषयुक्तां परिवर्त्तयन्ति। सन्दिग्धां परिष्कुर्वन्ति। शुद्धां तथैव स्वीकुर्वन्ति। नियमनिर्धारणम् इत्थं वर्तते। यथा–

1. विना योगे तृतीया भवति।
2. अलं, साकं योगे तृतीया भवति।
3. अङ्गविकारे तृतीया,
4. करणे तृतीया,
5. सहार्थे तृतीया,
6. अपवर्गे तृतीया,
7. प्राकृति कृति स्वभावार्थे तृतीया,
8. लक्षणे उपलक्षणे तृतीया भवन्ति।

**स्पष्टीकरणम्-/अभ्यासकार्यम्-** यथासमयं कक्षायां करणीयम्।

**गृहकार्यम्**-तृतीयाविभक्तिमुपयुज्य विभिन्ननियमान् आश्रित्य दशवाक्यानि लिखत।

卐 卐 卐

# 18

# साहित्यशास्त्रस्य परिचयः

# Introduction to Sahitya Shastra

(क) पद्यम् Poetry (ख) गद्यम्, Prose (ग) नाटकम् Drama (घ) चम्पू Champu

## साहित्यशास्त्रम्

### (क) संस्कृतकाव्यम्

मन्त्राणां छन्दोबद्धतया छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्ते। अतः छन्दोऽपि वेदाङ्गमवश्यज्ञेयञ्च। शौनक विरचिते ऋक्प्रातिशाख्ये चरमभावे छन्दसां पर्याप्तं विवेचनं विद्यते। अस्य छन्दःशास्त्रस्य पिङ्गलच्छन्दः सूत्रनामा ग्रन्थः सर्वाधिक-प्रसिद्धः। अयं केनचित् पिङ्गलनामकेनाचार्येण विरचितः। अत्र वैदिकानि-लौकिकानि-छन्दांसि विवेचितानि। संस्कृतकालस्योदयो यद्यपि प्रशान्तपावने तपोवनेऽजायत। तथापि तस्य विकासो राज्ञां प्रसादेष्वभूदिति कथनं न सत्यादपेतम्। कालिदासो विक्रमादित्यमन्तरा दुराप एवास्थास्यत्। हर्षवर्धनं विना वाणस्य महाकवित्व सम्भवो नासीत्। राजा महाराजाभिः भूयोभूयःसमादृतान् विद्वद्वरेण्यान् तानुत्तमकाव्य निर्माणाय प्रैरयत्। राजानोहि कविनाद्रियन्ते स्म इति। राज्ञामाश्रये कवित्वं प्रस्फुटति स्म। राज्ञामाश्रयमवाप्यैक संस्कृत काव्यं सर्वांशतो विकासमभजत। उक्तञ्च-

**अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते।**<br>**निराश्रया न शोभन्ते पण्डिता वनितालताः।।**

संस्कृत काव्यानि पुराणं रामायणं महाभारतं च बीजभावेनाश्रयन्ति। यतो मेघदूते कालिदासः साधारण भृत्यस्य यक्षस्यैव प्रणयकथाममरतामनयत्। दरिद्र चारुदत्ते भासोऽपि तथैव दरिद्राश्रयकथामुपस्थापितवान्, शुद्रकोऽपि मृच्छकटिके तथैव दरिद्रवृत्तमुपस्थापितवान्। वाल्मीकिना हि काव्यानामादिकाव्ये स्वरामायणे करूणरसस्य या धारा प्रवाहिता सा सततं स्यन्दमाना एव स्थास्यति। अनन्तरकालोत्पन्नाः पुनः कवयो रससापेक्षाः सन्तोऽपि ज्ञानगरिमाणमुपदर्शयितुं कवितामरचयन्। तादृशानां कवीनां मध्ये श्रीहर्षः प्रधानम्। तत्परं तु महावैयाकरणपाणिनेः जाम्बवतीजयम् प्रमाण्यते। पाणिनेः कवित्वं सरसं सरलं च दृश्यताम्-

**गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः।**
**अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति।।**

महाकविकालिदासस्य समयः ई०पू० प्रथमशतके विक्रमादित्यस्य सत्तया तत्सभायां स्थितत्वात् स एव समयः सम्भवति। कालिदासस्य ऊनविंशति सर्गात्मकं रघुवंशमहाकाव्यम्, अत्र रधोर्वंशस्य कथा निबद्धा। द्वितीय-महाकाव्यं सप्तदश-सर्गात्मकं 'कुमारसंभवम्' वर्त्तते। अननतर-कालोत्पन्नेषु अश्वघोषस्य बुद्धचरितम्, कुमारदासस्य जानकीहरणम्, भारवेः किरातार्जुनीयम्, माघस्य शिशुपालवधम्, रत्नाकरस्य हरविजयकाव्यम्, क्षेमेन्द्रस्य शशिवंश महाकाव्यम्, श्रीहर्षस्य नैपधीयचरितम्, कल्हणस्य राजतरङ्गिणी, भट्टिस्वामिनो भट्टिकाव्यम्, इत्यादयः काव्यग्रन्थाः प्रशस्ताः।

सहितस्यभावः साहित्यम् इति व्युत्पत्ति बलेन साहित्यमिति शब्दस्य द्वावर्थौ स्तः—प्रथमस्तु 'शब्दार्थयोः संयोगः' द्वितीयस्तु 'हितेन सह' अर्थात् मानव-हितस्य सम्पादनम्। व्यापकार्थे साहित्यस्य द्वौ विभागौ कर्तुं शक्येते। -एकः काव्यम् द्वितीयः शास्त्रम्। अस्मिन् शास्त्रे काव्य-व्याकरण-दर्शन-नीति-रस-अलङ्कार-पुराण-इतिहासादीनां सर्वे विषयाः सन्निहिताः भवन्ति। अतस्तस्य नाम साहित्यम्। यद्यपि सर्वेषां विषयाणां समावेशः साहित्ये क्रियते तथापि ''काव्यादिलक्षितपदबन्धः एव साहित्यम्'' इत्यवधेयम्। तत्र काव्यं द्विविधम्

**(1) दृश्यकाव्यम्**-रूपकम्, उपरूपकम्।

**(2) श्रव्यकाव्यम्**-गद्य (कथा) -पद्य(महाकाव्यम्) -मिश्रम्(चम्पूकाव्यम्)

**(क) पद्यम् Poetry**

**काव्यस्यार्थः**—मानवः चेतनासम्पन्नः संवेदनशीलप्राणी चास्ति। तस्य मनः शरीरामाधृत्य, दुःखेन, सुखेन, प्रेम्णा, दयया, क्रोधेन, आशया च चलायमानं भवति, तथा-प्रकृत्या प्रतिक्षणं परिवर्तनेन सौम्यं, मनोरमं, विविधरूपैश्च भावं गृह्णाति। काव्येन मानवस्य भावात्मक विकासो भवति। काव्यमस्माकं भावानाम् उत्सर्जनमस्ति। काव्यमिति शब्दोऽयं कवि शब्दे क्रम धातोः औणादिके, इन् प्रत्यये कृते बाहुलकात् मकारस्य वकारादेशे रेफस्य लोपे सति कविरिति शब्दः निष्पद्यते। ''कवेरिदं कर्मभावो वा काव्यम्'' संस्कृताचार्यैः काव्यस्यपरिभाषा विभिन्न 'रूपेण दत्ता-तस्य विवेचनं पद्यशिक्षणे कृतं स्यात्। रमणीयतायां पुरस्कृत्य भामहः, रूद्रटः, उद्भटश्च अलङ्कारमेव काव्यस्यात्मा इति अमन्यत। अनेन प्रकारेण एकस्य श्रेष्ठस्य पद्यस्य कृते तस्मिन् रस-अलङ्कार-ध्वनि-गुण-वक्रोक्ति-रमणीयता-सुशब्दावल्यादीनिसर्वाणि-तत्त्वानि आवश्यकानि सन्ति।

**काव्यस्य प्रयोजनम्**

संस्कृत-साहित्ये काव्यस्य स्थानं महत्त्वपूर्णमस्ति। आचार्य भामहः काव्यालङ्कारे कविता-करणस्य, पठनस्य, पाठनस्य चोद्देश्यं चतुर्वर्गाणां प्राप्तिममन्यत-

**धर्मार्थकाममोक्षाणां वैचक्षण्यं कलासु च।**
**करोति प्रीतिं कीर्तिञ्च साधुकाव्यनिर्षेवणम्।।**

**आचार्यमम्मटः**—काव्यस्य प्रयोजनं यशःप्राप्तिः, धनप्राप्तिः, सद्व्यवहार-ज्ञानम्, शिवेतरस्य च अपाकरणं सद्यः परमानन्दस्यानुभूतिः तथा कान्तासम्मित्तयोपदेशस्य प्राप्तिः विद्यते। व्याकरणशास्त्रनियमानुसारं, पदप्रयोगज्ञानाय, अन्यान्यशास्त्रपरिज्ञानाय यानि काव्यानि विरचितानि, तानि शास्त्रकाव्यानि इत्युच्यन्ते।

**संस्कृतकाव्यानां विकासक्रम**

संस्कृत काव्यानाम् उत्पत्तेः बीजं 'वेदे' प्राप्यते। संस्कृतकाव्यानां प्रथमकिरणं सर्वप्रथमं ऋग्वेदे दृश्यते। तस्य अनेकानि सूक्तानि अथवा मन्त्राः ईदृशा सन्ति, यैः कवेः प्रतिभायाः सुन्दरः परिचयः प्रस्तूयते। महाकाव्यानां विकास परम्परायां महर्षिपाणिनेः नामाऽपि गृह्यते, येन 'पातालविजयम्' 'जाम्बवतीविजयम्' इति द्वे महाकाव्ये लिखिते। प्रसिद्धवैयाकरण-महर्षिपतञ्जलेः नाम कंसवधबलिबन्धनामकनाट्यरचनयोः कृतेऽपि प्रसिद्धमस्ति। लौकिकसंस्कृते काव्यलेखनस्य क्रमः वाल्मीकितः प्रारब्धः। आदिकविः यदा कामातुरक्रौञ्च-पक्षिमिथुनयोरेकस्य वधम् अपश्यत्। हृदयद्रवीकरणाय, रसानुभूतिकृते च आदिकवेः वाल्मीकेः श्लोकः अवश्यं द्रष्टव्यः। यथा–

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीःसमाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।**

तमसा नदीतीरे व्याधः कश्चन क्रौञ्चमिथुनादेकमवधीत्। हृदयविदारिकां तद्घटनां दृष्ट्वा वाल्मीकिः स्वीयामनुभूतिं श्लोकरूपेण व्यक्तीकृतवान्। अर्थात् शोकः श्लोकत्वमागतः एषानुभूतिरेव रसानुभूतिरिति कविना परिभाषायाम् उच्यते। अस्मिन् काव्ये 24,000 श्लोकाःतथा सप्तकाण्डानि सन्ति। रामायणवत् महाभारतमपि एकम् उपजीव्यं काव्यमस्ति। इदम् अष्यदशपर्वेसु विभक्तम् एकं बृहद्ग्रन्थरत्नोऽस्ति, यस्मिन् प्रायः सपादलक्ष श्लोकाः सन्ति। अस्य प्रणेता वेदव्यासोऽस्ति। रामायणेन महाभारतेन च समं पुराणान्यपि संस्कृतसाहिन्यस्य उपजीव्यानि सन्ति। एषु पुराणेषु अष्यदशपुराणानां तथा तावदेव उपपुराणानां विशिष्टं महत्त्वमस्ति। वेदव्यासः अस्य रचयिता अस्ति। महाकाव्यस्य परम्परासु सर्वप्रथमं वेदव्यासस्य तथा तदनन्तरं 'अश्वघोषस्य' नाम आयाति। बुद्धचरितं अष्याविंशति सर्गात्मकं तथा सौन्दरानन्दम् अष्यादशसर्गात्मकम् अस्य द्वे महाकाव्ये स्तः। कविकुलचूडामणिकालिदासस्य नाम संस्कृतसाहित्याकाशे देदीप्यमानसूर्यवत् अद्यापि विद्यमानमस्ति। अस्य काव्यानि ऋतुसंहारः, मेधदूतं, कुमारसम्भवं, रघुवंशञ्चास्ति।

**विकासक्रमे काव्यपरिचयः**

| कविनाम | ग्रन्थनाम | सर्गादि |
|---|---|---|
| 1. कुमारदासः | जानकीहरणम् | षोडशसर्गाः |
| 2. भारविः | किरातार्जुनीयम् | अष्यदशसर्गाः |

contd......

| | | |
|---|---|---|
| 3. माघः | शिशुपालवधमहाकाव्यम् | द्वाविंशतिसर्गाः |
| 4. रत्नाकरः | हरविजयमहाकाव्यम् | पञ्चविंशतिसर्गाः |
| 5. शिवश्वामी | कप्फनाभ्युदयम् | विंशतिसर्गाः |
| 6. क्षेमेन्द्रः | दशावतारचरितम् | |
| 7. मङ्खुकः | श्रीकण्ठचरितम् | पञ्चशितिसर्गाः |
| 8. श्रीहर्षः | नैषधचरितम् | द्वाविंशतिसर्गाः |
| 9. ( एतिहासिककाव्यानि ) वाक्यपतिराजः | गउडवहो | |
| 10. पद्मगुप्तः | नवसाहसाङ्कचरितम् | अष्यादशसर्गाः |
| 11. बिल्हणः | विक्रमाङ्कदेवचरितम् | अष्यादशसर्गाः |
| 12. कल्हणः | राजतरङ्गिणी | अष्यौ तरङ्गाः |
| 13. हेमचन्द्रः | कुमारपालचरितम् | अष्यविंशतिसर्गाः |
| 14. सोमेश्वरः | कीर्तिकौमुदीकाव्यम् | |
| 15. शास्त्रकाव्यानि) भट्टिः | भट्टिः | द्वाविंशतिसर्गाः |
| 16. ( देवकाव्यानि ) गोकुलनाथ | भिक्षाटनकाव्यम् | द्वाविंशतिसर्गाः |

अन्यानि प्रसिद्धानि देवकाव्यानि-

(1) जयद्रथस्यहरचरितचिन्तामणिः,

(2) लोलम्बराजस्यहरिविलासकाव्यम्,

(3) वेदान्तदेशिकस्ययादवाभ्युदयम्,

(4) राजचूडामणिदीक्षितस्यरुक्मिणीहरणम्,

(5) कृष्णदासकविराजस्यगोविन्दलीलामृतम्,

(6) अमरचन्द्रसूरिःबालभारतम्,

(7) देवप्रभसूरिःपाण्डवचरितम्,

(8) कृष्णानन्दस्यसहृदयानन्दम्,

(9) वामनभट्टबाणस्यनलाभ्युदयम्।

17. यमककाव्यानि–घटखर्परस्ययमककाव्यम्–द्वाविंशतिश्लोकैःग्रथितम्।

18. '' ''– नीतिवर्मणःकीचकवधकाव्यम्–पञ्चसर्गाः।

19. '' ''– वासुदेवस्यनलोदयकाव्यम्–चत्वारः सर्गाः।

20. श्लेषकाव्यानि–

(1) सन्ध्याकरनन्दी कवेः—रामचरितम्,

(2) धनञ्जय कवेः –राघवपाण्डवीयम्,

(3) कविराजमाध्वभट्टस्य-राघवपाण्डवीयम्,

(4) हरदत्तसूरेः—राघवनैषधम्,

(5) विद्यामाधवस्य-पार्वतीरुक्मिणीयम्,

(6) वेङ्कटाध्वरीनस्य-यादवराघवीयम्,

(7) चिदम्बरकवेः—राघवपाण्डवयादवीयम्,

(8) दैवज्ञसूरेः—रामकृष्णविलोमकाव्यम्,

**(21) कवयित्र्यः-**

(1) सुभद्रा- विज्जिका,

(2) फल्गुहस्ति-

(3) लखिमा,

(4) मोरिका,

(5) इन्दुलेखा,

(6) वैजयन्ती,

(7) मारुला,

(8) विकटनितम्बा,

(9) त्रिवेणी-क्षमाराव् प्रभृतयः स्त्रीकवयः संस्कृतसाहित्ये प्रसिद्धाः।

**(22) खण्डकाव्यानि-गीतकाव्यानि वा**-खण्डकाव्यमेतत् पञ्चप्रकारकं विद्यते।

(1) ऋग्वेदकालिकं खण्डकाव्यम्,

(2) भक्तिरसमयं खण्डकाव्यम्,

(3) ऐतिहासिकं खण्डकाव्यम्,

(4) रूपकान्तर्गतं खण्डकाव्यम्,

(5) सङ्कीर्णं खण्डकाव्यम्।

1. कालिदासस्य मेघदूतम्-अत्र पूर्वभागः, उत्तरभागश्चेति द्वौ भागो स्तः।
2. कालिदासस्य ऋतुसंहारम्-षट्सर्गाः, 153 श्लोकाश्च सन्ति।
3. जयदेवस्य गीतगोविन्दम्-द्वादशसर्गात्मकं काव्यम्-कृष्णस्तुतिपरकम्।
4. अमरुकस्य-अमरुशतकम्-मुक्तकानिश्रृङ्गाररसस्यन्दीनि प्रबन्धायमानानि प्रसिद्धानि सन्ति।
5. गोविन्दाचार्यस्य-आर्यासप्तशती-मुक्तकस्वरूपं, श्रृङ्गाररससर्वस्वभूतम्।

**6. पण्डितराज जगन्नाथस्य ग्रन्था-**

(1) भामिनीविलासः,

(2) गङ्गालहरी,

(3) सुधालहरी,

(4) अमृतलहरी,
(5) करुणालहरी,
(6) लक्ष्मीलहरी,
(7) यमुनार्णवचम्पूः,
(8) आसफविलासः,
(9) प्राणाभरणम्,
(10) जगदाभरणम्,
(11) चित्रमीमांसाखण्डनम्,
(12) मनोरमाकुचमर्दनम्,
(13) रसगङ्गाधरश्च।

**7 इतरेमुक्तककाराः**

(1) भर्तृहरिः—शतकत्रयम्,
(2) भल्लटः—भल्लटशतकम्,
(3) मधुसूदनः—मधुसूदनशतकम्,
(4) हरिहरोपाध्यायः—हरिहरसुभाषितम्।

**(23) स्तोत्रकाव्यानि-**

(1) पुष्पदन्तस्य महिम्नः स्तोत्रम्,
(2) मयूरस्यसूर्यशतकम्,
(3) शङ्कराचार्यस्यसौन्दर्यलहरी,
(4) कुलशेखरस्यमुकुन्दमाला,
(5) उत्पलदेवस्यशिवस्तोत्रावली,
(6) जगद्धरस्यस्तुतिकुसुमाञ्जलिः।

**(ख) गद्यसाहित्यम्**

'गद्य' शब्दस्य व्युत्पत्तिः गद् व्यक्तायां वाचि इति धातोः 'गदमदचरयमश्चानुपसर्गे' इति सूत्रेण यत् प्रत्यये सति गद्यम् इति शब्दः निष्पन्नो भवति। यस्य च अर्थः भवति 'स्पष्टं कथनम्' इति 'पादशून्या पदसंरचना एव गद्यमिति'। समग्रे वेदसाहित्ये पद्येन सह गद्यस्यापि स्थानं विद्यते। गद्यमिदं सरलं समासरहितं भूत्वा सुबोधकमस्ति। कुत्रचित् गद्येऽस्मिन् उपमा रूपकादीनां अलङ्काराणां च प्रयोगः विहितः। वैदिक गद्यं सरलं स्पष्टं च विद्यते। ततः वेदाङ्गेषु, आयुर्वेदादिग्रन्थेषु, सूत्रवाङ्मये च गद्यस्य प्राधान्यम् अस्ति।

(1) अपादः पदसन्तानो गद्यम् इति-दण्डिना उक्तम्।
(2) गद्यं कवीनां निकषं वदन्ति इति श्रुति।

(3) 'वृत्तबन्धोज्झितं गद्यम्' इति आचार्यविश्वनाथः।

(4) आंग्लभाषायां गद्यम् prose प्रोज इति शब्देन ज्ञायते।प्रोज शब्दस्यार्थः भवति-'स्पष्ट-सरल-अनलंकृत-भाषायां कथनम्' इति।

**गद्यस्यलक्षणम्**–'ओजस्समासभूयस्त्वमेतद्गद्यस्य लक्षणम्' ओजो गुण्सम्पन्नत्वं, समासबाहुल्यं च गद्यकाव्यस्य लक्षणम्।

**गद्यप्रभेदाः**—

(1) **कथासाहित्यम्**-एतत् लेखकस्य कल्पनासु आधारितं भवति।

(2) **आख्यायिका साहित्यम्**-एतत् ऐतिहासिकतथ्याधारितं भवति।

**गद्यसाहित्यस्यपरिचयः**—

(1) सुबन्धेः–वासवदत्ता।

(2) बाणभट्टस्य-हर्षचरितम्-कादम्बरी च।

(3) दण्डिनः–काव्यादर्शः–दशकुमारचरितम् च।

(4) धनपालस्य–तिलकमञ्जरी।

(5) वादीभसिंहस्य–गद्यचिन्तामणिः।

(6) मेरुतुंगाचार्यस्य-प्रबन्धचिन्तामणिः।

(7) राजशेखरस्य-प्रबन्धकोशः।

(8) वामनभट्टबाणस्य-वेमभूपालचरितम्।

(9) वल्लालसेनस्य-भोजप्रबन्धः।

(10) महाकवि- वरददेशिकस्य-गद्यरामायणम्।

(11) महाकविविश्वेश्वरपाण्डेयस्य-मन्दारमञ्जरी।

(12) अम्बिकादत्तव्यासस्य-शिवराजविजय।

(13). ऋषिकेश भट्टाचार्यस्य-प्रबन्धमञ्जरी।

(14) पण्डित- क्षमारावस्य-कथापत्रकम्, ग्रामज्योतिः, कथामुक्तावली।

(15) राजगोपालस्य-शैवालिनी, कुमुदिनी।

(16) कृष्णामाचार्यस्य-मन्दारवती।

(17) आचार्यमेधाव्रतस्य-कुमुदिनीचन्द्रः।

(18) आचार्यश्रीशैलस्य-मेनका।

(19) नृसिंहाचार्यस्य-सौदामिनी।

(20) भट्टमथुरानाथशास्त्रिणः—भारती, संस्कृतरत्नाकर।

(21) शैलताताचार्यस्य-दुर्गेशनन्दिनी।

(22) हरिचरणभट्टाचार्यस्य-कपालकुण्डला।

(23) वामनकृष्णचित्तलस्य- लोकमान्यतिलकचरितम्।

(24) वेङ्कटेश- वातनसोवानि कवेः—शिवाजी प्रबन्धः।

(25) मङ्गलदेवशास्त्रिणः—प्रबन्धप्रकाशः। एवम् आधुनिक गद्यसाहित्यं विविधं विपुलं च वर्तते। संस्कृतपत्रपत्रिकाणां योगदानमपि महत्त्वपूर्णमस्ति।

**संस्कृतगद्यस्यविशेषताः**

(1) **कथा**-ऐतिहासिककथाः, पौराणिककथाः, नैतिककथाः, काल्पनिककथाः, विनोदपूर्णकथाः।

(2) जीवनचरित्रम्।

(3) वैज्ञानिकाविष्काराः।

(4) वर्णनम्, प्राकृतिकदृश्यम्।

(5) विचारात्मक- निबन्धाः,

(6) प्राकृतिकविषयाः, यथा-जीवजन्तुपशुपक्ष्यादिविषयाः।

(7) पत्रव्यवहारात्मकाः।

(8) विमर्शनात्मकाः—यथा-ग्रन्थविमर्शः, रचनाविमर्शः, सामाजिकविमर्शः।

(9) मानवव्यवहारात्मकाः—यथा-निवासः, आचारव्यवहाराः, नीतिनियमादयः।

(10) यात्रा।

**(ग) संस्कृत-नाटकसाहित्यम्**

संस्कृतसाहित्ये वैदिकयुगात् नाटकानां परम्परा प्रवाहः विद्यते। नाटक शब्दोऽयं 'नट्' धातोः निष्पन्नो वर्तते यस्यार्थास्सन्ति-नृत्यम्, अभिनयः, अनुकरणञ्च। एतदङ्गभूतानां ताण्डवलास्यनृत्यानाम् अभिनयगीतवाद्यादीनाञ्च सम्बन्धः शङ्करपार्वतीप्रजापतिनारदा-दिभिरभिहितः प्राचीनग्रन्थेषु वर्णितः। सर्वेन्द्रियाणां नयनं प्रधानम्। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। लोके विद्यमानानाम् इतिवृत्तानां घटनानां वा चित्रणमेव नाटकम्। नाटकान्तम् हि साहित्यम् इति। महाकविना कालिदासेन उक्तम् "नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्" संस्कृतसाहित्ये दशरूपकाण्यष्टादशोपरूपकाणि च सन्ति।

(1) "काव्येषु नाटकं रम्यम्"

(2) अवस्थायाः अनुकरणमेव नाटकमस्ति।

(3) अवस्थाविशेषस्य अनुकरणं कृत्वा आनन्द-मनोरंजन-प्राप्तिकरणमेव नाटकम्।

(4) अवस्थानुकृतिः नाटकम्।

(5) नाट्यशास्त्रं पञ्चमो वेदः इति भरतमुनिः मन्यते।

(6) जग्राह पाठ्यं ऋग्वेदात्सामभ्यो गीतमेव च, यजुर्वेदादभिनयान् रसानाथर्वणादपि। ब्रह्मा ऋग्वेदात् सम्वादं, सामवेदात् गानं, यजुर्वेदात् अभिनयम्, अथर्ववेदात् रसञ्च गृहीत्वा नाट्यवेदमरचयत्।

(7) ''नाट्यकारकृतप्रसिद्ध कल्पितकथासार ग्रथितरचनानुसारी रङ्गपीठे प्रयोक्तृ-प्रशिक्षितनटाभिनयसंगीतादिजन्यरसद्वारा प्रेक्षकाणां विनोदविश्रान्त्युपदेशजनको व्यापारः नाटकं रूपकं वा।''

**नाटकस्य स्वरूपम्**-संस्कृतसाहित्यं भागद्वये विभज्यते-

(1) **श्रव्यकाव्यम्**-अस्यकाव्यस्य पाठेन श्रवणेन च आनन्दः प्राप्तो भवति। यथा-कथा, आख्यायिका प्रभृतयः।

(2) **दृश्यकाव्यम्**-दृश्यकाव्ये आनन्दस्य प्राप्तये दर्शनीयस्य वस्तुनः तथाविधं सामर्थ्यं भवति। नाटकमस्यां श्रेण्याम् आगच्छति। अभिनयद्वारा अधिमञ्चं नाटकं प्रस्तुतीक्रियते।

**नाटकसाहित्यस्यपरिचयः**

(1) **अश्वघोषस्य**-शारिपुत्रप्रकरणे-षट् अङ्काः सन्ति।

(2) **कालिदासस्य**-अभिज्ञानशाकुन्तलम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयं चेति नाटकत्रयम्।

(3) **विशाखदत्तस्य**-मुद्राराक्षसम्, मुद्रया गृहीतो राक्षसःयत्रेति तन्मुद्राराक्षसमिति।

(4) **भवभूतेः**—महावीरचरितम्, मालतीमाधवम्, उत्तररामचरितम् इति नाटक त्रयम्।

(5) **हर्षनृपतेः**—रत्नावलीः, प्रियदर्शिका, नागानन्दनम्(पञ्चाङ्काः) इति तिस्रः नाटिकाः।

(6) **भट्टनारायणस्य**-वेणीसंहारम् (महाभारतकथामाश्रित्य वीररस-प्रधानम्)

(7) **शुद्रकस्य**-मृच्छकटिकम् (दशाङ्काः)।

(8) **भासस्य**-(त्रयोदशरूपकाणि)

1. प्रतिज्ञायौगन्धरायणम्,
2. अविमारकम्,
3. स्वप्न-वासवदत्तम्,
4. प्रतिमानाटकम्,
5. अभिषेकनाटकम्,
6. मध्यमव्यायोगः,
7. पञ्चरात्रम्,
8. दूतवाक्यम्,
9. दूतघटोत्कचम्,
10. कर्णभारः,
11. उरुभङ्गम्,
12. बालचरितम्,
13. दरिद्रचारुदत्तम् चेति।

**संस्कृतनाटकस्यविशेषताः**

नाटकं साहित्यस्य महत्त्वपूर्णमङ्गं वर्तते येन प्रकारेण चित्रस्य भिन्न-भिन्नवर्णाः सहृदयस्य चित्ते वर्णस्य आनन्दस्य अनुभूतिं कारयन्ति तेनैव प्रकारेण नाटके प्रयुक्तनायकादीनां वेशभूषा-नेपथ्य-रचनादयः दर्शकस्यहृदयोपरि विशिष्टं प्रभावयन्ति आनन्दसृष्टिञ्च कुर्वन्ति। अध्ययनप्राप्तैतादृशं किमपि ज्ञानं, शिल्पं, विद्या, कला, योगः, कार्यं नास्ति यन्नाटके न दरीदृश्यते। भरतमुनिना नाटकस्य त्रीणि उद्देश्यानि प्रतिपादितानि। यथा–

(1) हितोपजननम्–व्यक्तेः समाजस्य च कल्यानार्थम् उपदेशप्रदानम्।

(2) विश्रान्तिजननम्- व्यक्तेः समाजस्य च शान्तिप्रदानम्।

(3) विनोदजननम्–व्यक्तेः समाजस्य च मनोरञ्जनम्।

## (घ) चम्पू Champu मिश्रम् ( चम्पूकाव्यम् )

सामान्यतःकाव्यस्य भेदद्वयं प्रथते–दृश्यंश्रव्यञ्चेति। श्रव्यकाव्यमपि द्विप्रकारकम्–गद्यकाव्यं पद्यकाव्यञ्चेति। चम्पूशब्देन संस्कृतसाहित्ये 'गद्यपद्यमयंकाव्यम्'इति कथ्यते। पञ्चतन्त्रादिषु साहित्यग्रन्थेषु गद्यपद्यद्वयप्रयोगो दृश्यते। गद्यकाव्यगतमर्थगौरवं पद्यकाव्यगतमर्थगौरवपुरस्कृत्य रागमयत्वं चेत्युभयं मिलितं सदधिकं चमत्कारं जयनेदिति भावनैव चम्पूकाव्यस्योत्पतौ कारणत्वेन सम्भाव्यते। सर्वप्रथमाचार्यो दण्डी–'गद्यपद्यमयीवाणीचम्पूरित्यभिधीयते' इति चम्पूलक्षण-मुक्तवान्। उपलब्धचम्पूनां प्राचीनतमचम्पूनिर्माणकालश्च ख्रीष्टस्य दशमशतकं (915–959) निश्चीयते।

**चम्पूकाव्यस्यविकासक्रमः**

चम्पूकाव्यं गद्यकाव्यस्यैव परिमार्जितं रूपमिति कथनं सत्यम्। यजुर्वेदे गद्यपद्ययोर्मिश्रणमुपलभ्यते तथापि नासौ चम्पूप्रकारः। त्रिविक्रमभट्टः 'नलचम्पूः' इति संज्ञया प्रसिद्धं चम्पूग्रन्थं प्रणीय गद्येपद्ये च समानभागेन काव्यगुणानुपस्थापयितुमयतत्। नलचम्पूः मदालसाचम्पूः नवसारीशिलालेखश्चेति त्रयः प्रबन्धास्त्रिविक्रमभट्टेन विरचिताः। दिगम्बरजैनःसोमप्रभसूरि–959 तमेशवीयवर्षे यशस्तिलकचम्पू नामकं ग्रन्थं लिखितवान्। धर्मशर्माभ्युदय नामक महाकाव्यप्रणेता हरिश्चन्द्रो नाम दिगम्बरजैनः, 'जीवनधरचम्पू नामकं ग्रन्थं प्रणीतवान्। भोजराजेन धाराधीशेन कृता 'रामायणचम्पूः' एकादश- शतकोद्भवः प्रसिद्धः चम्पूरामायणस्य साहित्यिकं गौरवमतिमहत्त्वपूर्णम्। एवं च भागवतचम्पूरिति नाम्ना अनेके चम्पूग्रन्थाः प्रथन्ते। महाभारतकथामाश्रित्य अनन्तभट्टेन भारतचम्पूःनामको विशालग्रन्थो विरचितो यत्र द्वादशस्तवकेषु महाभारतकथोपनिबद्धा। दक्षिणभारतीयाश्चम्पूग्रन्थान् अधिकसंख्यायां रचितवन्तः। वरदाम्बिका–परिणयचम्पूःऐतिहासिकदृष्ट्या महत्त्वपूर्णः। नीलकण्ठकविना कृतोऽयं ग्रन्थःसमुद्रमन्थनं विषयीकरोति, स चायं नीलकण्ठः शिवलीलार्णवकर्त्तुरभिन्न एवेति ख्रीष्टशप्तदशशतक पूर्वार्द्ध भागोऽस्य निश्चितःसमयः। विश्वगुणादर्शचम्पूःग्रन्थे भौगोलिकं वर्णनं तीर्थानां गुणदोषविमर्शश्च कृतो बोध्यः। तथा च वैष्णवमतपोषकाश्चम्पूग्रन्थाः जैनमतावलम्बिनो वैष्णवविद्वासःरघुनाथदासः चम्पूपुस्तकं कृतवान्।

## (ङ) अलंकार-उपमा, रूपकम्, दीपकम्, अपह्नुति, यमक, शब्दालंकारः, अर्थालंकारश्चेति।

## Rhetories–Upama, Rupakam, Deepakam, Apahnuti & Yamakam, Shabdalankara, Arthalankara

### (क) अलङ्कार-विवेचनम्-Rhetoric

'अलं करोतीति अलङ्कारः" आभूषितं करोतीति अलंकारः'अलं +कृ धातोः घञःयोगेन अलंकार-शब्दः सिद्धयति। लेटिन भाषायां अलंकार शब्दस्यार्थः AURUM सोना विद्यते। आभूषित-करणमेव अलंकारः अलंकारः काव्यस्य महत्त्वपूर्णमङ्गं वर्तते। अलंकृतिरलंकारः। ''काव्य-सौन्दर्यस्य विधायकानां-सम्पूर्ण- तत्त्वानां विवेचनशास्त्रमेव अलंकार-शास्त्रम्।'' अलंकारस्य त्रयो भेदाः (1) शब्दालंकार, (2) अर्थालंकार, (3) उभयालंकार श्चेति मन्यन्ते। ''शब्दार्थौ सहितौ काव्यम्'' इति भामह-कथनेन स्पष्टं भवति यत् 'सत्यं शिवं सुन्दरम्' इत्यत्र चरमतत्त्वं सुन्दरमेव वर्तते। शिव-सुन्दरयोश्च यदा सत्येन सह संयोगो भवति, तदा संसारे मंगलोदयः भवति। ते आचार्या गुण, रस, रीति, भावादि विषयाः अलंकारस्य अन्तर्गते मन्यन्ते। भगवान् शंकरः अलंकारशास्त्रस्य शिक्षणं सर्वप्रथमं ब्रह्मणे दत्तवान्, ब्रह्मा च देवेभ्यः कतिभ्यश्च ऋषिभ्यश्च तच्छिक्षां ददौ। तदनुसृत्याष्टादश ब्रह्मशिष्या अष्टादशस्वधिकरणेषु शास्त्रमिदं निबद्धवन्तः। नन्दिकेश्वरो रसम्, धषणो दोपान्, उपमन्युर्गुणान्, भरतश्च रूपकाणि निरूपितवान्। अलङ्कारो नाम सौन्दर्यम्, यथा-कटक-कुण्डल-हारादिभिः आभूषणैः कामिन्याः सौन्दर्यवृद्धिः भवति। तथेव अनुप्रास-उपमादिभिःअलङ्कारैः कविताकामिन्याः शोभावर्द्धनं क्रियते। येन कविताकामिनीकुरूपासत्यपिसौन्दर्यं प्राप्नोति।

### अलङ्कारस्यलक्षणम्

1. आचार्यमम्मटेनापि उच्यते-

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ।। इति।**

2. कविराजविश्वनाथेनापि उक्तम्-

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ।। (सा०द०)**

ये शब्दार्थयोरनित्यधर्मत्वेन अतिशयशोभाकारिणः रसादीन् उपकुर्वन्ति, ते कालो अलङ्काराः। शरीरे यथा कटककुण्डलादीनां बाह्यशोभाऽऽधायकानाम् आत्मनः परोक्ष- धर्मत्वम्, तथैव कालो अनुप्रासोपमादीनाम् अलङ्काराणाम्।

### (ख) उपमा-Upama

'साम्यं वाच्यमवैधर्म्यवाक्यैक्य उपमाद्वयोः (सा०द-10/14) अत्र एकस्मिन्नेव वाक्ये द्वयोः पदार्थयोः (उपमा-उपमेययोः) साधर्म्येण वाच्यं सादृश्यं भवति। तत्र उपमा नाम अर्थाऽलङ्कारविशेषः। उपमायाःचत्वारः पदार्थाः भवन्ति। यथा-

1. साधारणधर्म: 'इव' उपमावाचकशब्दश्च। पूर्णा लुप्ता इति उपमा मूलत:द्विधा।

2. सौरभमम्भोरूहवन्मुखस्य कुम्भाविव स्तनौ पीनौ, हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले। (सा०द०) अस्मिन् उदाहरणे वाक्यत्रितयमेव वर्तते। वाकयत्रये उपमात्रयी अपि अम्भोरूहमुपमानम्, सौरभम् इति प्रथमवाक्ये मुखमुपमेयम्, अम्भोरूहमुपमानम्, सुरभित्वं धर्म: 'वत्' इति 'उपमावाचकम्', अत्र उपमानोपमेययो: साधर्म्येण वाच्यसादृश्यात् उपमा। एवमन्यत्रचन्द्रालोके लक्षणपद्यमेव उदाहरणम्।

## (ग) रूपकम् Rupakam

निषेधरहिते उपमेये यत्र उपमानस्य अभेदारोप: तत्र रूपकम्। उपमानेन उपमेयस्य उपरञ्जनमेव अस्य अलङ्कारस्य प्रामुख्यम्। इदं रूपकं मूलत:त्रिधा–1. परम्परितम्, 2. साङ्गम्, निरङ्ग्ञ्चेति। यथा–

आहवे जगदुद्दण्डराजमण्डलराहवे।
श्रीनृसिंहमहीपाल! स्वस्त्यस्तु तव वाहवे।।

अत्र उपमेयभूते बाहौ उपमानभूतस्य राहो: अभेदारोपाद् किञ्च राजमण्डलरूपे उपमेये चन्द्रविम्बस्य उपमानभूतस्य अभेदारोपात् रूपकम्। साहित्यदर्पणे–

रूपकं रूपितोरोपो विषये निरपह्नवे।
तत्परम्परितं 'साङ्गं' निरङ्गमिति च त्रिधा।।

चन्द्रलोके–

यत्रोपमानचित्रेण सर्ववाप्युपरज्यते।
उपमेयमयी भित्तिस्तत्र रूपकमिष्यते।।

## (घ) दीपकम् Deepakam

अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत्।। (सा०द०)

प्रस्तुताप्रस्तुतानां च तुल्यत्वे दीपकं मतम्।
मेधां बुध: सुधामिन्दुर्विभर्ति वसुधां भवान्।। (चन्द्रालोके)

अत्र प्रस्तुताप्रस्तुतानां पदार्थानाम् एकेनैव धर्मेण सह सम्बन्ध: तत्र दीपकम्। किञ्च, यत्र अनेकानां क्रियाणामेकेनैव कारकेण सह सम्बन्ध: तत्रापि दीपकस्य लक्षणान्तरम्। उदाहरणम्–

बलावलेपादधुनापि पूर्ववत् प्रवाध्यते तेन जगज्जिगीषुणा।
सती च योषित्प्रकृतिश्च निश्चला पुमांसमग्येति भवान्तरेष्वपि।।
(सा०द०)

अत्र प्रस्तुतभूताया: निश्चताया: योषित्प्रकृते: अप्रस्तुतायाश्चपतिव्रताया:स्त्रिय: एकेनैव अनुगमनरूपेण क्रियाधर्मेण सह सम्बन्ध: वर्णित इति दीपकम्। "दूरं समागतवती--- 'इति

उदाहरणान्तरपद्ये एकस्या एव कारकभूतायाः नायिकायाः उतिष्ठत्यादिभिः बहुक्रियाभिः सह सम्बन्धातृ दीपकमिति। चन्दालोकोदाहरणे प्रस्तुतस्य राज्ञः अप्रस्तुतयोः इन्दुबुधयोः एकेन धारणधर्मेण सह सम्बन्धः।

**(ङ) अपह्नुति Apahnuti**

**प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः**

(सा०द०10/38)

**गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन।**
**यदि श्लेषेण काक्वावान्यथियेत्साऽप्यपह्नुतिः।**

(सा०द०10/39)

अत्र प्रकृतं (उपमेयम्) प्रतिषिध्य तदुपरि उपमानस्य आरोपःक्रियते तत्र अपह्नुतिः। अस्याः लक्षणान्तरम्– यत्र किमपि गोपनीयं वस्तु कथमपि सूचयित्वा श्लेषेण अश्लेषेण वा गोपाय्यते तत्रापि अपहृनुतिः भवति। प्रथमस्य अपहृनुतयलङ्कारस्य उदाहरणं यथा–

**नेदं नभोमण्डलममबुराशिः नैताश्च ताराः नवकेनभङ्गाः,**
**नायं शशीकुण्डलितः फणीन्द्रो, नासौ कलङ्कःशयितो मुरारिः।।**

अत्र नभोमण्डल-तारा-शशि-कलङ्कानां प्रतिषेधात् परं तेषामुपरि अम्बुराशि-नवफेन-भङ्गफणीन्द्र-मुरारि प्रभृतीनामुपमानानाम् आरोपात् अपहनुतिः। काले वारिधाराणाम्.......' इत्याद्युदाहरणं द्वितीयलक्षणस्य। चन्द्रलोके- अपह्नुत्यलङ्कारस्य लक्षणम्–'अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः।' तत्र अपह्नुतिभेदानामपि लक्षणोदाहरणानि प्रदर्शितानि सन्ति ।'नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरूहम्'इति तत्रत्यमुदाहरणम्।

**(च) यमकम् Yamakam**

**सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।**
**क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते।।**

(सा०द०10/8)

**आवृत्तवर्णस्तवकन्दाङ्करं कवेः।**
**यमकं प्रथमाधुर्यमाधुर्य वचसो विदुः।।**

(चन्द्रालोके 5/8)

अर्थवन्तः भिन्नार्थकस्य स्वरव्यञ्जनसमुदायस्य तेनैव क्रमेण पुनरावृत्तिःनाम यमकम्। अत्र द्वयोरपि पादयोः क्वचित् सार्थकत्वं क्वचिन्निरर्थकत्त्वम्। क्वचिदेकस्य सार्थकत्वम् अपरस्य निरर्थकत्वम्। उदाहरणम्–

**नवपलाशपलाशवनं पुरः स्पुटपरागपरागतपङ्कजम्।**
**मृदुलतान्त लतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः।।**

पलाश-पलाश इति सुरभिं-सुरभिं इत्यत्र च द्वयोः सार्थकत्वम्। लतान्त लतान्त इत्यत्र प्रथमस्य निरर्थकत्वम्, पराग पराग इत्यत्र द्वितीयस्य। एतेषां क्रमेण आवृत्तेः यमकम्। चन्द्रालोकस्थं लक्षणपद्यमेव उदाहरणम्। स्तवक-स्तवक इत्यत्र द्वितीयस्य निरर्थकत्वम्। माधुर्य-माधुर्य इत्यत्र प्रथमस्य। परन्तु तेनैव क्रमेण आवृत्तेः यमकम्।

**(छ) शब्दालंकारः**, Shabdalankara

अलङ्काराः त्रिधा विभज्यते। 1. शब्दाऽलङ्काराः—अनुप्रासादयः—यत्र अलङ्कारे शब्दःन परिवर्तनं सहते, तत्र शब्दालंकारः।

**(ज) अर्थालंकारः** Arthalankara

अर्थालंकाराः—उपमादयः, यत्र तु शब्दपरिवर्तनेऽपि अलङ्कारत्वेन काऽपि क्षतिः, तत्र अर्थाऽलङ्कारः।

**(झ) शब्दार्थोभयाऽलङ्कारः**

एकः पुनरूक्तवदाभासः, शब्दस्य परिवर्तन सहत्वे असहत्वे च शब्दार्थोभयालङ्कारः।

## (च) छन्दः–अनुष्टुपः, उपजातिश्च।
## 1.6 Metre – Anushtup and Upajati

**(घ) छन्दःविवेचनम्**-Prosody

मन्त्राणां छन्दोबद्धतया-छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्ते। शौनक विरचिते ऋक् प्रातिशाख्ये चरमभोग-छन्दसां पर्याप्तं विवेचनं विद्यते। अस्य छन्दः शास्त्रस्य पिङ्गलच्छन्दः सूत्रनामा ग्रन्थः सर्वाधिक प्रसिद्धः। अयं केनचित् पिङ्गल नामकेन आचार्येण विरचितः। अत्र वैदिकानि लौकिकानि च छन्दांसि विवेचितानि। लेखकः यदा भावाविष्टः भवति तदा तस्य मुखात् निस्सृतायां भाषायां कश्चन लयः स्यात्। सः लयः एव छन्दः इति व्यवह्रियते। ''गद्यं कवीनां निकषं वदन्ति'' इति उक्तवन्तः अलङ्कारिकाः। सामान्यवस्तूनि सन्निवेशाः, दृश्यानि च कवि भावनायां यदा भावितानि भवन्ति तदा रमणीयतया गोचरीभूतानि भवन्ति। काव्येषु भावाभिव्यक्तेः रूपद्वयम्-गद्यं पद्यञ्च। गद्ये व्याकरणस्य नियमानां पालनं भवति। पद्ये व्याकरणानां नियमैः सह पिङ्गलस्य नियमानां परिपालनं क्रियते। छन्दः शब्दः आच्छादनार्थक-(बन्धनम्) 'छदि' धातोर्निष्पन्नः। पद्यरचनायाः नियमा यत्र यथावद् वर्णितास्तच्छास्त्रं छन्दः शास्त्रं कथ्यते। 'यदक्षरपरिमाणं तच्छन्दः।'मात्राक्षरसंख्यानियता वाक् छन्दः' इति। यथा–

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।
वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेत्।।
सानुसारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।
वर्णःसंयोगपूर्वश्च तथा पादान्तगोऽपि बा।।

'म, य, र, स, त, ज, भ, न, ल, लधुः ग, (गुरुः) 'इत्येभिर्दशभिरक्षरैः समस्तं छन्दःशास्त्रं लक्षणान्वितम्। भगवता विष्णुना यथा समस्त-विश्वं व्याप्तं तथैव एभिर्दशभिः साङ्केतिकाक्षरैः समस्तंवृत्तानि परिव्याप्तानि।

संस्कृतवाङ्मये छन्दश्शास्त्रस्य विशिष्टमहत्त्वं वर्तते। सामान्यतः काव्यम् इति कथनेन छन्दोबद्धमिति बुद्धौ आयाति। अस्य शास्त्रस्य 'छन्दोऽनुशासनम्, छन्दोनिवृत्तिः छन्दोमानम्' इत्यादि नामानि उपलभ्यन्ते। केचित्तु मात्रागणनां कृत्वा जातिः इत्यपि वदन्ति। 'चदि' आह्लादने दीप्तौ च इति धातोःअसुन् प्रत्यये च छन्दश्शब्दः निष्पन्नः। पद्ये यत्र अक्षराणां मन्त्राणां वा प्रतिपादं गणना भवति, तत्र छन्दःइत्युच्यते।

लौकिकच्छन्दश्शास्त्रे अष्टौ गणाः भवन्ति। तद्यथा- भगणः, जगणः, सगणः, यगणः, रगणः, तगणः, मगणः, नगणश्चेति, प्रतिगणं त्रयः एव वर्णाः भवन्ति। तथाहि-

**आदिमध्यावसानेषु भ ज सा यान्ति गौरवम।**
**यरता लाघवं यान्ति मनौ तु गुरुलाघवम्।।** इति।

(S) इत्यस्य चिह्नस्य गुरुत्वेन (।) इत्यस्य चिह्नस्य लघुत्वेन च व्यवहारः वर्तते। पद्यानुसारेण-'भ'गणः=S।।, 'ज'गणः= ।S।, 'स'गणः= ।।S, 'य'गणः= ।SS, 'र'गण=S।S, 'त'गणः SSS।, 'म'गणः =SSS, 'न'गणः= ।।।, इत्येव प्रकारेण गुरुलघुत्वेन गणाः अवबोध्याः। संयुक्तवर्णस्य पूर्ववर्तिवर्णः दीर्घः भवति। यथा-रम्भा इत्यत्र 'म्भा'तःपूर्वं विद्यमानः 'र'कारःगुरुबोध्यः, संयुक्तादित्वात्। दीर्घवर्णोऽपिगुरुबोध्यः।

यथा-का के की कू कै को कौ। अनुस्वारयुक्त वर्णोऽपिगुरुः भवति, यथा-'रामं' इत्यस्य म वर्णःगुरुः। विसर्ग संयुक्तवर्णोऽपिगुरुः भवति। यथा-'नरः' इत्यत्र 'र'रकारःगुरुः भवति।

गणानामाधारेण सामान्यतः वृत्तं त्रिविधम्, तद्यथा-1. समवृत्तम्-यत्र चतुर्ष्वपि पादेषु अक्षराणि गणाश्च समानाः भवन्ति। यथा-अनुष्टुप, इन्द्रवज्रा, उपेन्द्रवज्रा, उपजाति इत्यादि। 2. अर्धसमवृत्तम्-यत्र चतुर्ष्वपि पादेषु अक्षराणि समानानि भवन्ति, परन्तु यत्र प्रथमतृतीयौ, द्वितीयचतुर्थो च पादौ समानौ, अर्थात् प्रथमद्वितीयौ परस्परम् असमानौ तत् अर्धसमवृत्तम् इति कथ्यते। यथा-आख्यायकी, हरिणीप्लुता, पुष्पिताग्रा, वियोगिनी, इत्यादि।

**3. विषमवृत्तम्**-यत्र परस्परं चत्वारोऽपि पादाः असमानाः भवन्ति तत् विषमवृत्तम्। यथा- उद्धता, कलिका, इत्यादि।

**अनुष्टुपः—लक्षणम्**

**श्लोकेषष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।**
**द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।।**

अनुष्टुपछन्दांसि चत्वारः पादाः भवन्ति, प्रतिपादम् अष्टौवर्णाः, प्रतिपादं पञ्चमोवर्णःलघुः। षष्ठवर्णाःगुरुः, द्वितीयपादे चतुर्थे च पादे सप्तमवर्णः लघुः, परन्तु प्रथमे तृतीये च पादे गुरुः, अन्यवर्णानां कृते न कोऽपि नियमः वर्तते। उदाहरणम्-

**विद्वत्त्वं च नृपत्त्वं च नैव तुल्यं कदाचनः।**
**स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते।**

**उपजातिः लक्षणम्–**

**'अनन्तरोदीरितलक्षाभाजौ पादौ यदीयावुपजातयस्ताः'**

अस्मिन् छन्दसि चत्वारः पादःभवन्ति। प्रतिपादम् एकादशवर्णाः भवन्ति। एकस्मिन् पादे इन्द्रवज्रायाः उपेन्द्रवज्रायाः वा लक्षणम्। उदाहरणम्–

**येषां न विद्या न तपो न दानम्, ज्ञानं न शीलं न गुणो न धर्मः।**
**ते मर्त्यलोके भुविभारभूता, मनुष्यरूपेण मृगाश्चरन्ति।।**

## (छ) उपर्युक्तानां महत्त्वमुद्देश्यं च।

## 1.7 Importance and Objectives of Teaching the above

### (क) काव्यस्य स्वरूपम्

भारतस्य सर्वासां भाषाणां जननी संस्कृतमस्ति। प्रत्येका प्रादेशिकी भाषा संस्कृतस्य समृद्ध-साहित्येन स्वां सम्पन्नां, संवृद्धिम्, अनुप्राणिताञ्च कुर्वन्ती अस्ति। 'सहितस्य भावः साहित्यम्''इति व्युत्पत्तिबलेन ''साहित्यमिति'' शब्दस्य द्वावर्थौ स्तः—प्रथमस्तु 'शब्दार्थयोः संयोगः', द्वितीयस्तु 'हितेन सह' अर्थात् मानवहितस्य सम्पादनम्। व्यापकार्थे साहित्यस्य द्वौ विभागौ कर्तुं शक्येते-एकः—काव्यम्, द्वितीयः—शास्त्रम्। अस्मिन् शास्त्रेः—काव्य-व्याकरण-दर्शन-नीति-रस-अलंकार-पुराण-इतिहासादयः सर्वे विषयाः सन्निहिताः भवन्ति। अतस्तस्य नाम साहित्यम्। यद्यपि सर्वेषां विषयाणां समावेशः साहित्ये क्रियते तथापि काव्यादि ललितपदबन्धः एव साहित्यम्।

काव्यशास्त्रस्य प्राचीनतमं नाम काव्यालङ्कार एवास्ति। काव्यालङ्काराभिधानस्यालङ्कारादिः सौन्दर्यस्य बोधको वर्तते। काव्यशास्त्रस्य सम्प्रदायाः प्रख्याताः सन्ति। ये आचार्याः काव्यस्यात्मारूपेण रसं स्वीकुर्वन्ति ते रससम्प्रदायस्याचार्याः कथ्यन्ते। ये अलङ्कारमेव काव्यस्य मुख्यं तत्त्वं स्वीकुर्वन्ति ते अलङ्कारसम्प्रदायस्य प्रवर्त्तका आचार्याः सञ्जाताः। ध्वनिसम्प्रदायस्य प्रवर्त्तका आचार्याः ध्वनिमेव काव्यस्यात्मतत्त्वं स्वीकुर्वन्ति। वक्रोक्तिसम्प्रदायस्य प्रवर्त्तकेनाचार्येण कुन्तकेन अभिहितम्-वक्रोक्तिरेव काव्यस्य जीवितम्। रीतिसम्प्रदायस्याचार्याः रीतिमेव काव्यात्मत्वेन स्वीकुर्वन्ति। औचित्यसम्प्रदायस्य प्रवर्त्तकानुसारेण औचित्यं काव्यजीवितमास्ते। राजशेखरमतानुसारेण नन्दिकेश्वर एव रससम्प्रदायस्य आदि प्रवर्त्तक आचार्यो वर्तते। रसविषयकः साम्प्रतं समुपलभ्यमानः प्राचीनतमो ग्रन्थो नाट्यशास्त्रमास्ते। भरतमुनिरेव काव्यशास्त्रस्य प्रवर्त्तक आचार्यः इति सर्वैरेव स्वीक्रियते। 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' नाट्यशास्त्रीयं मूलभूतंसूत्रमास्ते। रसानां संख्या–

**शृङ्गारहासकरुणे रौद्रवीरभयानकाः। बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।।**

**( ख ) काव्यस्यार्थः परिभाषा च**

मानवः चेतना-सम्पन्नः संवेदनशीलप्राणी चास्ति। तस्य मनः शरीरमाध्यमेन सुखेन, दुखेन, प्रेम्णा, दयया, क्रोधेन आशया च चलायमानं भवति तथा प्रकृत्याः प्रतिक्षणं परिवर्तनेन सौम्य-मनोरम-विविधरूपाणां भावं गृह्णाति। काव्ये मानवस्य भावात्मकः विकासो भवति। काव्यमस्माकं भावानाम् उत्सर्जनमस्ति। काव्यमिति शब्दोऽयं 'कवि' शब्दात् घञ्प्रत्ययस्य योगेन निष्पन्नः, एवंच क्रम् धातोः औणादिके इन् प्रत्यये कृते बाहुलकात् मकारस्य वकारादेशे रेफस्य लोपे सति कविरिति शब्दः निष्पद्यते। अथवा गत्यर्थकात् कु धातोः इनि प्रत्यये कृते कविः इति रूपं सिद्धयति। 'कवेरिदं कर्मभावो वा काव्यम्' तथा 'कवयति-वर्णयति कविरिति व्युत्पत्त्या अपूर्व-चमत्कारि -वस्तु वर्णने समर्थस्यैव कविरिति संज्ञा।

'वाक्यं रसात्मकं काव्यम्' इत्युक्तवा कविराज **विश्वनाथः** रसात्मक-वाक्यमेव काव्यसंज्ञया निरदिशत्। **भोजराजः**— निर्दोषं गुणवत्काव्यं अलङ्कारैरलङ्कृतम्। रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।। पण्डितराज **जगन्नाथः** रसगंगाधरे-रमणीयार्थं प्रतिपादकः शब्दः काव्यम्, यः शब्दः रमणीयार्थं प्रतिपादयति, स एव काव्यम्। रमणीयतापदे बलं दत्त्वा भामहः, रूद्रटः, उदभटश्च अलंकारमेव काव्यस्य आत्मा इति अमन्यन्ते। अनेन प्रकारेण एकस्य श्रेष्ठस्य पदस्य कृते तस्मिन् रस-अलंकार-ध्वनि-गुण-वक्रोक्ति-रमणीयता सुशब्दावल्यादीनि सर्वाणि तत्त्वानि आवश्यकानि भवन्ति। वामनः—सौन्दर्यमलङ्कारः। दण्डिना-काव्यशोभाकारान् धर्मान् अलङ्कारान् प्रचक्षते इत्युक्तम्।

**( ग ) काव्यशास्त्रस्य प्रकारः**

वाल्मीकीयरामायणादि वाक्येन काव्यशास्त्रस्य नामरूपेण निम्नाङ्किताः षट् शब्दाः समुपलभ्यन्ते इति स्पष्टी-भवति-

(1) काव्यालङ्कारः,

(2) अलङ्कारशास्त्रम्,

(3) काव्यशास्त्रम्,

(4) साहित्यशास्त्रम्,

(5) साहित्यविद्या,

(6) क्रियाकल्पश्च।

**( घ ) रसानुभूति स्पष्टीकरणानि**

काव्य-जगत् रसमयमस्ति, गद्य-पद्य-रूपकेषु यं रसाः आगच्छन्ति तेषां रसानुभूतिः आवश्यकी, रसानुभूतिर्नास्ति चेत् विशिष्ट-संस्कृत-श्लोक-पठनं व्यर्थमेव।

(1) कविता-रचनासु रसभेदज्ञापनम्। उदाहरणार्थं-करूण-शान्ति-बीर-अद्भुतादयः।

(2) कवीनां, रचयितृणाञ्चात्मीयता-सूचक-सन्निवेशानामनुस्मरणम्।

(3) पाठ्यांशेषु तन्मयत्व सम्पादनम्।

(4) अलङ्कार-विशिष्टता ग्रहणम्।

(5) कवि-मनोगताभिप्राय-ज्ञान-सम्पादनम्।

(6) विविधग्रन्थेषु विद्यमानानां रसवद् स्थलानाम् आवेदनम्।

(7) ध्वनिज्ञान-सम्पादनम्।

(8) शैलीभेदं प्रदर्श्य रसपरिवर्तनम्।

(9) गद्य-पद्ययोः अन्वयक्रम-आवेदनम्।

(10) संस्कृत गद्य-पद्य-रूपक-रचनासु विद्यमानानाम् आचार-व्यवहारानुसरणम्।

(11) रचनासु विद्यमानानां सुभाषितानां नीतिनाञ्च ग्रहणम्।

एतेषां रसानुभूति-विषयक-स्पष्टीकरणानां पालनेन छात्राः रस-सम्बद्धान् विषयान् ज्ञात्वा स्वयं रसज्ञाः भवेयुः। छात्राः संस्कृत-भाषायाःपर्याप्तज्ञानप्राप्तेः अनन्तरं संस्कृत-साहित्य-स्वाध्यायेन निरन्तरम् मनोविनोदः, आनन्दानुभूतिं च लभेरन्। संस्कृतस्य सरलसाहित्ये छात्राः नूनं रसानुभूतिं प्राप्नुयुः। संस्कृत-साहित्ये रसास्वादनस्य महत् स्थानं वर्तते। रसात्मक-पाठान्तर्गते रसात्मक-पाठस्य वाचनं छन्दोनुरूपं लय-आरोह-अवरोह पूर्वकं भावानुगुणं सस्वर-वाचनं भवति। रसात्मक-पाठस्य प्रधानमुद्देश्यं रसानुभूतिप्राप्तिः अस्ति। यथा-

**स रि ग म प ध नि-रतान्तां वीणा संक्रान्त कान्तहस्तान्ताम्।**<br>
**शान्तां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकान्ताम्।।**<br>
**प्रियेक्षणायाः मदह्विलायाः करस्थितं मङ्गलहेमपात्रम्।**<br>
**सोपानमार्गेण करोतिशब्दं ट टं ट टं टं ट ट टं ट टं टः।।**

## (ङ) काव्यशिक्षणस्य महत्त्वम्

1. छात्रेषु संस्कृतपद्यं प्रति काव्यग्रन्थान् प्रति च अनुरागोत्पादनम्।
2. छात्रेषु छन्दोऽनुरूपं लय-गति-आरोह-अवरोहपूर्वकंभवानुगुणं पद्यवाचनस्य योग्यता प्रदानम्।
3. छात्रेषु पद्ये निहितभावानाम् अवबोधनम्।
4. छात्राणां रसानुभूतिं सौन्दर्यानुभूतिं प्रति अभिप्रेरणम्।
5. छात्रेषु जीवनोपयोगी नैतिकमूल्यानां विकासकरणम्।
6. छात्राणां शब्दभण्डारस्य विकासः।
7. श्रवणवाचनलेखनपठनकौशलानां विकासः।
8. काव्येनिहितस्य 'सत्यं शिवं सुन्दरम्' इत्यस्य दिग्दर्शनं कारणीयम्।
9. कविताया:केन्द्रीयभावानां बोधस्य क्षमतोत्पादनम्।

**(च) काव्यशिक्षणस्य उद्देश्यानि**

(1) छात्राणां रसानुकूल-वाचनस्य योग्यता प्रदानम्।

(2) लय-गति-भावानुसारं वाचनस्य योग्यता प्रदानम्।

(3) श्लोके निहितभावस्य ज्ञान-प्रदानम्।

(4) श्लोके निहितभावस्य अभिव्यक्तेः योग्यता-प्रदानम्।

(5) लोकोक्तीनाम् ज्ञान-सम्पादनम्।

(6) उचित-आरोह-अवरोह-बलाघातादीनां ज्ञान-प्रदानम्।

(7) आदर्शोन्मुख-श्लोकान् कण्ठस्थीकरणम्।

(8) छात्राणां रसानुभूतिं सौन्दर्यानुभूतिं प्रति अभिप्रेरणम्।

(9) छात्राणां काव्यस्य वाच्यार्थेन, लक्ष्यार्थेन, व्यंग्यार्थेन सह परिचय-प्रदानम्।

卐 卐 卐

# 19

# साहित्यशिक्षणविधयः

# Method of Teaching Sahitya

**(क) परम्परागतविधिः**

2.1 Traditional Method

**(ख) दण्डान्वयविधि, (ग) खण्डान्वयविधिः।,**

**(घ) टीकाविधिः।, (ङ) अनुवादविधिः।, (च) अभिनयविधिः।,**

**(छ) व्यासविधिः।**

1. Dandanvaya and Khandanvaya Method. 2.Commentary Method.
3.Translation Method. 4.Acting Method . 5.Vyasa Method.

**(क) परम्परागतविधि**

Traditional Method

प्राचीनकाले शिक्षायाः मुख्योद्देश्यं भवति स्म पुरुषार्थचतुष्ट्य सम्पादनम्। अर्थात् धर्म-अर्थ-काम-मोक्ष इति चतुष्ट्य ज्ञान सम्वर्धनं साहित्याध्ययनस्योद्देश्यमासीत्। तदानीं चतुर्वर्गस्य अवधारणा प्रचलिता आसीत्। तथा चतुर्वर्गेषु धर्मार्थकाममोक्षेषु चतुर्थस्य प्राप्तिरेव शिक्षायाः प्रमुखमुद्देश्यमासीत्। ''मोक्षो हि परम पुरूषार्थः'' इति कथनेन त्रयाणां धर्मार्थकामानां पुरूषार्थ एव संसूच्यते। यतः एषां त्रयाणां सम्प्राप्तिः मनुष्येन क्रियते। किन्तु परमपुरूषार्थरूपो मोक्षः सर्वान् खलु पुरुषार्थानतिशेते। यद्यपि मनुष्यः कर्मं कुरुते किन्तु तत्कर्म न फलाभिसन्धि-रहितं भवति। अयं शिक्षणविधिः पाठशालासु, आश्रमेषु, गुरूकुलेषु, मठेषु, विद्यापीठेषु च प्रचलितः आसीत्। अनेन विधिना शिक्षारम्भः उपनयनसंस्कारात्परं भवति स्म। गुरूः छात्रान् गायत्रीमन्त्रस्य उपासनार्थमुपदिशति स्म। छात्रः प्रतिदिनं नित्यकर्मसम्पादनानन्तरं गुरोः समीपं गत्वा निवेदयति स्म 'सम्माननीया श्रावयन्तु'। छात्रः उत्तराभिमुखो भूत्वा गुरोः समीपे विद्यां प्राप्नोति स्म। तस्मिन् काले गुरूशिष्य सम्बन्धः पितापुत्रवत् आसीत्। अध्यापकाः शिष्याणामादर-भाजः भवन्ति स्म। ते तु मातृपितृसमाः शिष्याणां कृते आसन्। विधिरयं शिक्षणस्य

स्थाने मानवस्य जीवनशैल्या-आचार-विचारयोः विशिष्टं बलं दीयते स्म। वैदिककाले तथा च पाश्चात्यशिक्षापद्धत्याः आगमनात्परं संस्कृतशिक्षणाय ये विधयः प्रयुज्यन्ते ते सर्वे प्राचीनविधीनामन्तर्गत एव विधीयन्ते। (1) पाठशालाविधिः, (2) व्याकरणानुवादविधिः, (3) पाठ्यपुस्तकविधिः इत्येते त्रयः परम्परागतविधिमध्ये अन्तर्भवन्ति।

**संस्कृतकाव्यपाठस्य भेदः**

संस्कृतकाव्यपाठस्य द्विविधःभेदः स्वीकृतः—(1) रसपाठः (2) बोधपाठः,

**रसात्मकपाठः**—संस्कृतसाहित्ये रसास्वादनस्य महत् स्थानं वर्त्तते। रसात्मकपाठान्तर्गते रसात्मकपाठस्य वाचनं छन्दोऽनुरूपं लय-आरोह-अवरोह-पूर्वकं भावानुगुणं सस्वरवाचनं भवति। तस्य प्रधानमुद्देश्यं रसानुभूतिप्राप्तिः अस्ति। प्राथमिकस्तरे रसानुभूतिध्वनिः, अत्यानुप्रासः, सरलमनोभावः इत्यादि स्थूल तत्त्वानाम् आविर्भावो भवति। माध्यमिकस्तरे उन्नतस्तरे च अलङ्कारेषु, रसेषु व्यञ्जितार्थेषु च आधारिता भवति। यथा–

**राज्याभिषेके मदविह्वलायाः हस्ताच्च्युतो हेमघटो युवत्याः।**
**सोपानमार्गे प्रकरोति शब्दं ट टं ट टं टं ट ट टं ट टं ट म्।**
**रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।**
**इत्थं विचारयति कोशगते द्विरेफे हा हन्त हन्त नलिनी गज उज्जहार।।**
**जम्बूफलानि पक्वानि पतन्ति विमले जले।**
**कपिकम्पित शाखाभ्यो गु लु गु ग्गु लु गु ग्गुलु।।**

**बोधात्मकपाठः**—बोधात्मक-पाठानां पाठनविधिः गद्यपाठ-सदृशः एव भवति। पद्यात्मकबोधपाठेषु छन्दोबद्धता, अद्‌भुतता च भवति। छन्दोबद्धता, अद्‌भुतता-चेति कारणात् एव गद्यपाठ-पाठन-पद्यबोधात्मकपाठन-विध्योः भेदः जायते। अत्र छन्दोबद्धताकारणात् अन्वयावश्यकता भवति। अन्वयमाध्यमेन एव अर्थग्रहणं जायते। बोधात्मकपाठस्य प्रमुखमुद्देश्यं छात्रेषु ज्ञानस्य अवबोधकरणं भवति। यथा–

**(ख) दण्डान्वय-पद्धतिः**

गद्यम् अन्वयं विना पाठयितुं शक्यते पद्यन्तु न तथा, गद्ये कर्ता, कर्म, क्रिया च क्रमशः भवन्ति, पद्ये न तथा भवन्ति। भावावगाहनाय कर्तृकर्म क्रियादीनां कश्चन क्रमःआवश्यकः। ईदृशक्रमज्ञानाय अन्वय आवश्यकः। एतदर्थं श्लोके विद्यमानं प्रधानं वाक्यमन्वेषणीयम्। प्रधानवाक्यस्यान्वेषणानन्तरं कर्ता-कर्म-क्रियादीनां ज्ञानमावश्यकम्। तदनन्तरं क्रिया-विशेषणानि अव्ययानि च योजनीयानि। एवं रीत्या कर्तृकर्मक्रियादीनां माध्यमेन यत्राध्यापनं भवति तत्र दण्डान्वयपद्धतिराश्रिता इति वक्तुं शक्यते। पद्यखण्डं पूर्णवाक्ये अर्थात् दण्डे बोधब्यः। यथा–

**उष्ट्राणां विवाहेषु गीतं गायन्ति गर्दभाः।**
**अन्योऽन्यं प्रशंसन्ति अहो रूपमहो ध्वनिः।**

अस्मिन् पद्ये कः कर्ता \ गर्दभः। का क्रिया \ गायन्ति, प्रशंसन्ति। किं कर्म? गीतं, अन्योऽन्यम्। ''उष्ट्राणांविवाहेषु गर्दभाः गीतं गायन्ति तथा अहो रूपम् अहो ध्वनिः इति कथित्वा अन्योऽन्यं प्रशंसन्ति इति दण्डान्वयः।

**आद्ये विशेषणं योज्यं विशेष्यं तदनन्तरम्।**
**क्त्वाणमुल्यप् प्रभृत्येवं पूर्वं दण्डान्वये भवेत्।।**

अस्यां पद्धत्यां व्याकरणस्य प्रधानं स्थानमस्तीति। अत्र कर्त्ता-कर्म-क्रिया-विशेषण-विशेष्य-प्रभृतीनि उन्नतस्तरे विद्यमानाः छात्राः एव अनुस्मर्तुं प्रभवन्ति। अतः लघुबालकानां कृते समुचिता एषा प्रणाली। मनोवैज्ञानिकसिद्धान्तानुकूला प्रणाली। **अस्याःपद्धत्याःगुणाः—**

1. अर्थावगाहने क्लेशः न भवति।
2. विषयं सम्पूर्णरूपेण ज्ञातुं शक्यते।
3. श्लोकस्य भावावगाहनं सरलतया भवति।
4. उन्नतस्तरे एषा अत्यन्तोपयुक्ता इति।

**अस्याःपद्धत्याःदोषाः**

1. पद्धतिरेषा नीरसा।
2. प्राथमिक-माध्यमिक-स्तरेषु एषा नैवोपयुज्यते।
3. छात्राणां स्वयं कृते प्राधान्यं न भवेत्।
4. रसानुभूतिः सौन्दर्याभूत्याभावः।

**(ग) खण्डान्वयपद्धतिः**

खण्डान्वयपद्धत्याः नामान्तरमस्ति यत् प्रश्नोत्तरविधिरिति। दण्डान्वयपद्धति अपेक्षया एषा पद्धतिः उत्तमा अनया मनोरंजकतया प्रभावोत्पादकतया च कवितां शिक्षयितुं शक्यते। मनोविज्ञानसिद्धान्ताधारिता इति हेतोः छात्राः अपि अध्ययने आसक्तिं प्रदर्शयेयुरनया पद्धत्याः। इयम् दण्डान्वयप्रणाल्याः विपरीततया स्यात्।

**अन्वयप्रबोधो खण्डान्वयस्य परिभाषा–**

**कर्तृकर्मक्रियास्तावत् श्लोके योज्यास्ततः परम्,**
**किम् रूपं पुरस्कृत्य तृतीयादिविभक्तिः नियोजयेत्।**
**''ल्यबन्तञ्च तुमन्तञ्च क्त्वान्तं कर्मविभूषितम्।**
**खण्डान्वये पुनः प्रश्नः पूर्वमन्ते प्रयोजयेत्''।**

दण्डान्वय इव खण्डान्वयेऽपि प्रथमतया प्रधानं वाक्यमन्वेष्टव्यम् भवति। यदा प्रधानं वाक्यमन्विष्टं भवति प्रश्नानां एवं समाधानद्वारा वाक्यशेषांशस्य ज्ञानं सम्पादनीयम्। वाक्यशेषांशज्ञानाय पद्धत्यामुपयुक्तानां प्रश्नानां एवम् उत्तरद्वारा कर्त्ता, कर्म, क्रिया, विशेषणम्, अव्ययम् इत्यादीनि निष्कासनीयानि। दण्डान्वयप्रणाल्यां प्रश्नाः व्याकरणाधारिताः भवन्ति।

किन्तु अस्यां पद्धत्यां प्रश्नाः साहित्यमाधारीकृत्य भवन्ति। कर्तृसम्बद्धान् अंशान् छात्रेभ्यः निष्कासनाय कः, किम्, केन, कस्मै, कस्मात्, कस्य, इत्यादीनां सर्वनामशब्दानां माध्यमेन प्रश्नाः पृष्टाः भवेयुः। विशेषणानां ज्ञानाय कीदृशम्, किं भूतम्, कथं भूतम्, इत्यादयः प्रश्नाः प्रष्टव्याः। क्रियाणां ज्ञानाय किं करोति, किं कृत्वा इत्यादयः प्रश्नाः प्रष्टव्याः। क्रिया विशेषणानां ज्ञानाय कुतः, कुत्र, कदा, कथं, किमर्थम् इति रीत्या प्रश्नाः प्रष्टव्याः। अस्यां पद्धत्यां प्रश्नोत्तराणां विशेषमहत्त्वं भवति। चयनीकृतप्रश्नानां एवं समाधान द्वारा श्लोकस्य भावं निष्कासयितुं शक्यते। खण्डान्वयप्रणाल्याः श्लोक-शिक्षणे सूक्ष्मात् सूक्ष्मभावग्रहणं काव्यगत सौन्दर्यानुभूतिं एवं च रसास्वादनं भविष्यन्ति। यथा–

**विद्या ददाति विनयं विनयाद् याति पात्रताम्,**
**पात्रत्वाद्धनमाप्नोति धानाद्धर्मः ततः सुखम्।**

**अत्र खण्डान्वयः प्रश्नाः**

1. विद्या किं ददाति? विनयम्।
2. विनयाद् किं याति? पात्रताम्।
3. धनं कस्मात् आप्नोति? पात्रत्वात्।
4. धनात् कं याति? धर्मम्।
5. ततः परं किं आप्नोति? सुखम्। श्लोकशिक्षणस्य एषा पद्धतिः मनोविज्ञानसिद्धान्तानुकूला स्यात्।

**अस्याः पद्धत्याः गुणाः**

1. अनया पद्धत्याः सरलतया प्रभावोत्पादकरीत्या च पाठं पाठयितुं शक्यते।
2. पद्धतिरेषा मनोविज्ञानसिद्धान्ताधारिताऽस्ति।
3. संस्कृत भाषामाध्यमेन श्लोकः पाठ्यते, फलतः संस्कृतभाषणे निपुणा भवेयुः छात्राः।
4. छात्राणां सर्जनात्मकशक्तिः विकसिता भवेत्।
5. प्रत्यक्षपद्धत्या पाठनं भवतीति हेतोः संस्कृतशिक्षणे पठने लेखने च दक्षाः भवेयुः छात्राः।
6. छात्राः अर्थान् भावाञ्च जानीयुः।
7. सौन्दर्यानुभूतिं रसानुभूतिञ्च सम्पादयितुं शक्यते।
8. सूक्ष्मातिसूक्ष्मभावाः ज्ञातुं शक्यन्ते।

**अस्याः पद्धत्याः दोषाः**

1. व्याकरणांशानां कृते अवकाशः नास्ति।
2. प्राथमिकस्तरे एषां नोपयोक्तमर्हति।
3. सर्वेछात्राः संस्कृतभाषायां समाधानानि दातुं न प्रभवन्ति।
4. आरम्भिकस्तरे इयं पद्धतिः कठिना भवितुमर्हति।

**खण्डान्वयविधिमाश्रित्य-अस्य श्लोकस्य पाठनम् एवं प्रकारेण भवेत्।**

**उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः, दैवेन देयमिति कापुरुषा वदन्ति।**
**देवं निहत्य कुरु पौरुषमात्मशक्त्या, यत्ने कृते यदि न सिध्यति कोऽत्र दोषः।**

1. शिक्षकः—पुरुषःलक्ष्मीं कथं प्राप्नोति? छात्रः—पुरुषः लक्ष्मीम् उद्योगेन प्राप्नोति।

2. शिक्षकः—केन सह पुरुषस्य उपमा प्रदत्ता? छात्रः—सिंहेन सह पुरुषस्य उपमा प्रदत्ता।

3. शिक्षकः—दैवेन देवमिति के विश्वसन्ति? छात्रः—दैवेन देवमिति कापुरुषाः विश्वसन्ति।

4. शिक्षकः—मनुष्यः लक्ष्मीप्राप्तये किं कुर्यात्? छात्रः—मनुष्यः पौरुषं कुर्यात्।

5. शिक्षकः—कदा दोषः न भवति? छात्रः—प्रयत्ने कृतेऽपि कार्यं न सिध्येत् तर्हि न दोषः, अथवा स दोषः अन्विष्यताम्।

**दण्डान्वयविधिमाश्रित्यअस्य श्लोकस्य पाठनम् एवं प्रकारेण भवेत्।**

**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।**
**बालानां सुखबोधाय क्रियते तर्कसंग्रह।।**

(1) शिक्षकः—श्लोके कर्तृपदं किम्? छात्रः—मया।

(2) शिक्षकः—कर्मपदं किम्? छात्रः— तर्कसंग्रहः।

(3) शिक्षकः—क्रिया का? छात्रः— क्रियते।

(4) शिक्षकः—किमर्थं क्रियते? छात्रः—सुखबोधाय।

(5) शिक्षकः—केषां सुखबोधाय क्रियते? छात्रः—बालानाम्।

(6) शिक्षकः— कथं क्रियते? छात्रः— निधाय।

(7) शिक्षकः—कुत्र निधाय? छात्रः—हृदि।

(8) शिक्षकः—पुनः कथं क्रियते? छात्रः—विधाय।

(9) शिक्षकः—किं विधाय? छात्रः— गुरुवन्दनम्।

**(3) गद्ये**—ध्रुवस्य माता सामान्या माता नासीत्। सा नूनं ध्रुव-माता आसीत्। भगवति तस्याः विश्वासःदृढ़ः आसीत्। भगवान् मे पुत्रं रक्षिष्यतीति तस्याः दृढा धारणा आसीत्।

(1) कस्य बालकस्य अयं सन्दर्भः? बालक ध्रुवस्य अयं सन्दर्भः।

(2) ध्रुवस्य माता कीदृशी आसीत्? ध्रुवस्य माता स्थिरमतिः आसीत्।

(3) का भगवन्तं विश्वसिति स्म? ध्रुवमाता सुनीतिः।

(4) पुत्रं कः रक्षिष्यति? पुत्रं भगवान् रक्षिष्यति।

**(ख) परम्परागतविधेःउद्देश्यानि**

(1) संस्कृतशास्त्राणां गम्भीराध्ययनम्।

(2) स्मरणशक्तेर्वर्धनम्।

(3) भारतीयसंस्कृतेः परिरक्षणम्।

(4) आत्मसंयमः, मौलिकचिन्तनं, तर्कशक्ति श्चेत्यादीनां गुणानां वर्धनम्।
(5) स्वाध्यायं प्रति अभिरुच्युत्पादनम्।
(6) शास्त्रार्थप्रशिक्षणम्।
(7) उच्चारणसामर्थ्यसम्पादनम्।
(8) मौखिकाभ्यासे ध्यानम्।
(9) छात्रस्य अवबोधनात्मकशक्तेः जागृतीकरणम्।
(10) व्याकरण-अनुवाद-अभ्यासैः संस्कृतपाठनम्।
(11) चतुर्णां पुरुषार्थानां सम्पादनम्।
(12) सम्प्रदायः, सभ्यता, संस्कृतिः, देशभक्तिः, आस्तिक्यभावना चेत्यादीनां सम्पादनम्।
(13) प्राचीन-धार्मिक-शिक्षायामभिरुचि-सम्पादनम्।
(14) व्याकरणनियमानां ज्ञानस्य सम्पादनम्।
(15) सच्चारित्र्य-सम्पादनम्।
(16) गद्य-पद्य-रूपक-व्याकरणादीनां मनोवैज्ञानिक-रीत्या अध्ययने अवकाश प्रकल्पनम्।

**(ग) परम्परागतविधेः पाठ्यक्रमः**

(1) प्रारम्भे शब्दरूपं, धातुरूपं, समासचक्रं, अमरकोश श्चेत्यादीनां कण्ठस्थीकरणम्।
(2) साहित्यस्य परिचयः।
(3) काव्यानां प्रकरणग्रन्थानां दृढ़तरम् अध्ययनम्।
(4) कविता, गद्यं, नाटकं, चम्पूः, साहित्यिक-समालोचनादीनाम् अध्यापनम्।
(5) पद्यपाठे पञ्चमहाकाव्यानां (रघुवंशः, कुमारसम्भवम्, किरातार्जुनीयम्, शिशुपालवधः, तथा नैषधचरितम्) पाठनम्।
(6) उत्तरावस्थायां सिद्धान्तकौमुदी, अष्टाध्यायी, महाभाष्यादि ग्रन्थानां अध्ययनम्।
(7) संस्कृते विद्यमानानां वैज्ञानिक-आयुर्वेद-ज्योतिषादीनामपि परिचयात्मकस्य अध्ययनस्य अवसरः प्रदातव्यः।
(8) प्रकरणग्रन्थेषु काव्यप्रकाशः, साहित्यदर्पणः, रसगंगाधरःइत्यादि ग्रन्थानां गम्भीराध्ययनम्।

**(घ) परम्परागत-विधेः गुणाः**

(1) स्मरणशक्तेः वर्धनं भवति।
(2) छात्रेषु अनुशासन-भावनायाः विकासः भवति।
(3) गुरूशिष्यसम्बन्धः सुदृढ़ो भवति।
(4) विधिरयं भारतीयसंस्कृतेःसंरक्षणाय संस्कृतसाहित्यस्य अनुसन्धानाय च उपयोगी अस्ति।
(5) स्वाध्यायस्य अभ्यासो भवति।

(6) व्याकरण-नियमान् ज्ञात्वा साधुशब्द-प्रयोगे छात्राः समर्था भवन्ति।
(7) छात्रेषु मौलिक-चिन्तनस्य, तर्कशक्तेः, निरीक्षणशक्तेश्च विकासो भवति।
(8) उच्चारणविधेः सौष्ठवं भवति।
(9) संस्कृतभाषायाः शुद्धं विस्तृतं स्वरूपमवगतं भवति।
(10) कण्ठस्थीकरणापेक्षया छात्राणां चिन्तनशक्तेः निरीक्षणशक्तेश्च विकासो भवति।
(11) छात्राणां शब्दकोशस्य वृद्धिकरणे सहायको भवति।
(12) छात्रेषु जिज्ञासायाः विकासो भवति, यथा ते सक्रियाः भवन्ति।
(13) भाषाकौशलमधिगच्छति।

**(ङ) परम्परागतविधेः दोषाः**

(1) व्यावहारिकज्ञानं न उत्पद्यते।
(2) छात्राणां ज्ञानम् एकस्मिन्नेव क्षेत्रे सीमितं भवति।
(3) अयं विधिः सामान्यमन्दबुद्धिछात्राणां कृते अनुपयोगी अस्ति।
(4) शिक्षणं शिक्षक-केन्द्रितं भवति।
(5) छात्राणां शारीरिक-मानसिक-समाजिक-विकासाः कुण्ठिताः भवन्ति।
(6) जीविकोपार्जने असमर्था भवन्ति।
(7) शिक्षणं सर्वं विषयकेन्द्रितं भवति।
(8) पाठ्यसहगामिक्रियाणां कृते अवकाशो न भवति।
(9) छात्राणां सर्वाङ्गीणविकासो न भवति।
(10) छात्राणां मानसिकक्षमतायाः रुचिभेदस्य च उपेक्षा भवति।
(11) सर्वदाकण्ठस्थीकरणतत्स्मरणाभ्यां व्यक्तित्वविकासो न भवति।

**(च) निष्कर्ष**

परम्परागतविधौः पाठशालापद्धतेः आधारः साहित्यसम्बद्धांशो भवति। अत्र शिक्षणं सर्वविधं मौखिकमासीत्। कण्ठस्थीकरणस्य स्मरणस्य च महत्त्वमधिकं भवति। व्याकरणं यदि भाषया, साहित्येन साकं पाठ्यते चेत् रुचिपूर्णं भवति। बोधने दृश्य- श्रव्योपकरणानामुपयोगः करणीयः। कण्ठस्थीकरणांशानां न्यूनीकरणं विधेयम्। व्याकरणेन साकं नूतनविषयाणां समावेशःकरणीयः। मनोवैज्ञानिकसिद्धान्तानामाधारेण शिक्षणं भवेत्। निष्कर्षतः वयं कथयितुं शक्नुमः यत् व्याकरणस्य ज्ञानाय, भारतीय संस्कृतेः साहित्यस्य च संरक्षणाय अयं विधिः उपयोगी अस्ति।

**(घ) टीकाविधिः**

Commentary Method

टीकृ गतौ इति धातोः 'गुरोश्च हलः'(3.3.303) इति सूत्रेण 'अ'प्रत्यये कृते टीका

शब्दः सिद्धयति। 'टीक्यते अर्थः अनया इति टीका' 'टीकयति-गमयति अर्थान् इति टीका।' टीकाविधिरयं गद्यपद्यानां व्याख्यानावसरे संस्कृतसाहित्ये प्राचीनकालात् प्रचलितोऽस्ति। यथा-प्रसिद्ध-टीकाकाराः मल्लिनाथः—हेमचन्द्राचार्यः—भोजराजादयो वर्त्तन्ते। अयं विधिः समन्वय-विधि रूपेण अपि चर्चितः विद्यते, किं च अस्मिन् विधौ कोशविधिः, प्रयोगविधिः, व्युत्पत्तिविधिः, तुलनाविधि श्चेत्यादि विधीनाम् आवश्यकतानुसारं प्रयोगः सम्भवति। शब्दार्थ-सम्बन्धि-व्याख्यानार्थं तु अस्य प्रयोगः करणीयः। हेमचन्द्राचार्यः अभिलषितार्थ-न्चिन्तामणौ टीकाशब्दस्यार्थो निर्वक्ति-''टीका निरन्तर-व्याख्या'' इति। टीकाविधिरयं भावानां स्पष्टीकरणं विषय-सामग्रयाः आलोचनात्मकं विश्लेषणं च करोति। काव्यशिक्षणस्य अयं विधिः उच्चस्तरीय अधिकोपयोगी च भवति। छात्राणां स्तरानुसारेण विषयवस्तुन आधारेण च विधीनां चयनं कर्त्तव्यम्। माध्यमिक-उच्चमाध्यमिकस्तरयोः एकाधिकविधेः प्रयोगं कुर्वन् समन्वयात्मक-दृष्टिरेव अधिकोपयोगिनी इति सर्वैः स्वीक्रियते। प्राथमिक-माध्यमिक-स्तरयोःउद्बोधनविधिः लाभदायकः भवति। व्याख्यायाः सोपानस्य अन्तर्गते कठिनशब्दानां वाक्यांशानां व्याख्याया-सह-अर्थग्रहणम्, भाषागत-सौन्दर्यं एवं च व्याकरण- सम्बन्धि-कार्यमपि करणीयम्। अध्यापकैः छात्राः सन्धि-समास-सम्बन्धि-प्रश्नाः प्रष्टव्याः।

अमरकोशस्य टीकायां- सुगमानां (सुषमाणां) विषमाणां च व्याख्या यस्यां सा टीका इति वर्णितः, येन स्पष्ये भवति यत् 'व्याख्यायाः विशिष्टरूपमेवटीका' शब्देन कथ्यते। काव्यप्रकाशस्य टीकायां भोजराजः कथयति-

**दुर्बोधं यदतीव तद्विजहति स्पष्टार्थमित्युक्तिभिः,**
**स्पष्टार्थेष्वतिविस्तृतं विदधतिव्यर्थैः समासादिकैः।**
**अस्थानेऽनुपयोगिभिश्च वहुभिर्जल्पैः भ्रमं तन्वते,**
**श्रोतृणामितिवस्तुवित्लवकृतः सर्वेऽपि टीकाकृतः।।**

(क) यत्र अवबोधने वहुकाठिन्यं, अतिविस्तृतं व्याख्यानं च अपेक्षितम्, तत्र स्पष्टमित्युक्त्वा तमंशं परित्यजन्ति। (ख) अनावश्यक-स्थाने निरर्थकैः समासादिभिः भ्रमम् उत्पादयन्ति। (ग) यत्र अर्थः स्पष्टतया प्रतिभाति तत्र निरपेक्षितैः सन्धि-समासादिभिः अतिविस्तृतां व्याख्यां कुर्वन्ति इति भावः।

**(क) टीकालक्षणानि-**

(1) मूलश्लोका एव व्याख्यातव्याः।
(2) मूले यानि रहस्यानि सन्ति, तानि स्वशक्त्या प्रकाशनीयानि।
(3) अन्वयविधि-द्वारा सर्वेषां शब्दानां व्याख्या करणीया।
(4) मूले यन्नास्ति तन्न कथनीयम्।
(5) मूलादधिकं न लेखनीयम्।
(6) महान् टीकाकारः मल्लिनाथः वदति-

**भारती कालिदासस्य दुर्व्याख्या विषमूर्च्छिता।**
**एषा सञ्जीवनी टीका तमद्योज्जीवयिष्यति।**

**(ख) टीकाकरणस्य प्रयोजनानि–**

(1) सुगूढ-दुर्बोधं वा ग्रन्थाशय-बोधनं भवति।
(2) संस्कृते दृढं, विस्तृतं च ज्ञानं सिद्धयति।
(3) शब्दभण्डागारस्य अभिवृद्धिः भवति।
(4) भाषणकौशलसामर्थ्यं सहजरूपेण जायते।
(5) शास्त्रज्ञानं सम्यग्रूपेण भवति।
(6) कवेः हृदयं ज्ञापयति।
(7) काव्यशास्त्रविनोदेन विदुषां तुष्टिं जनयति।
(8) बालकानां सुखबोधाय, उपकाराय च कल्पते।
(9) छन्दसामनुसारं श्लोकपाठस्य अभ्यासो भवति।
(10) छात्राणां सहज-रूपेण शास्त्रीयज्ञानं वर्धयति।
(11) भाषायाम् अधिकारः आगच्छति।

**(ग) टीकायाःविधिक्रमः**

शिक्षकः कक्षायां श्लोकशिक्षणं यदा कुर्यात् तदाऽयं विधिः अनुकरणीयः। सर्वप्रथमं श्लोकं गति-यति-लयपुरस्सरं पठित्वा-पाठयित्वा च श्लोकस्य अन्वयः करणीयः। ततःपरं तु श्लोके स्थितानां सर्वेषां क्लिष्ट-शब्दानाम् अर्थावबोधः करणीयः। पुनः श्लोके विद्यमानानां सन्धि-युक्त-पदानां सरलशब्देन व्याकरणज्ञानं प्रदातव्यम्। शब्दरूपाणां धातुरूपाणां च ज्ञानं सम्पादनीयम्। समासपदानां विग्रहवाक्यानि दर्शयितव्यानि, समासनाम च कथनीयम्। श्लोके यदि अलङ्कारः अस्ति चेत् तस्यलक्षणस्य परिचयं प्रदाय लक्षणसमन्वयमपि कार्यम्। पर्यायपदस्य ज्ञानं व्यतिरेकार्थक-शब्द-ज्ञापनं च देयम्। श्लोकछन्दसः परिचयोऽपि कार्यः।

पद्यस्योदाहरणे यथा कालिदासः—

**सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।**
**नरेन्द्रमर्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः।।** 6/67

पतिंवरा सा इन्दुमती रात्रौ संचारिणी दीपशिखेव यं यं भूमिपालं व्यतीयाय अतीत्य गता स स भूमिपालः, स सर्वं इत्यर्थः। नरेन्द्रमार्गे राजपंथे अट्टाख्यः गृहभेद इति। विवर्णभावं विच्छायत्त्वम्। अट्टस्तु तमोवृतत्त्वम्, प्रपेदे।

**पद्यस्योदाहरणे यथा भारविः**

**स किं सखा साधु न शास्ति योऽधिपं, हितान्न यः संशृणुते स किं प्रभुः।**
**सदानुकूलेषु हि कुर्वते रतिं, नृपेष्वमात्येषु च सर्वसम्पदः।।**

(1) सखा कः भवति? यः साधु शास्ति।
(2) स्वामी कीदृशः स्यात्? स्वामी सर्वदा हितं चिन्तयेत्।
(3) सम्पदः कुत्र रमन्ते? सम्पदः अमात्येषु अनुकूलेषु नृपेषु च रमन्ते।
(4) राज्ञः मित्रं कीदृशं भवेत्? राज्ञः मित्रं उचित परामर्शं दद्यात्।
(5) अमात्यः कः भवति? अमात्यः राज्ञः मन्त्री भवति।

**गद्यस्योदाहरणम्**

गृहे तस्य भार्या सपदि समागतं पतिं दृष्ट्वा अपृच्छत्–आर्य! किं सर्वगतं कुशलं वर्तते? अयथाकालं समागतोऽसि?सम्प्रति धर्ममतिः सः पश्चात्तापेन दग्धमानसः सर्वं वृत्तान्तं निवेद्य सकरुणम् उच्चैः अक्रन्दत्। बुद्धीमती सा अवदत्–अलं चिन्तया, आपदां तरणिः धैर्यम्।

(1) भार्या पतिं केन पदेन सम्बोधयति? आर्य इति पदेन।
(2) अयथाकालः कः समागतः? पतिः।
(3) धर्ममतिःभार्यायै किं न्यवेदयत्?धर्ममतिः भार्यायै–सर्व वृत्तान्तं न्यवेदयत्।
(4) 'अलम्'इति पदस्य योगेन का विभक्तिःप्रयुज्यते? तृतीयाविभक्तिः।
(5) 'आपदां' तरणिः किम्? धैर्यम्।
(6) आपदां इति पदे का विभक्तिः प्रयुक्ता?षष्ठी विभक्तिः।

**(घ) टीकाविधेःसमीक्षणम्**

प्राचीनकालतः संस्कृत–साहित्यस्य–अध्यापनार्थं शास्त्रशिक्षणाय वा टीकापद्धतिः समाश्रिता। टीकापद्धत्या काव्यानां तथा साहित्यस्य संरक्षणं सम्यक् रूपेण भवति। अस्याः पद्धतेः प्रयोगः सर्वैः विद्वद्भिः कृतो वर्तते। अनेन विधिना शिक्षणं सरलं तथा सुन्दरं च भवति। संस्कृतमाध्यमेन संस्कृतशिक्षणाय अयं विधिः समीचीनः। उन्नतस्तरे अयं विधिः अत्यन्तोपयोगी।

**(ङ) टीका–विधेः गुणाः**

(1) शास्त्रज्ञानं सम्यक् रूपेण भवति।
(2) शब्दार्थज्ञानं सुगमतया भवति।
(3) कविगता–भावना विकसिता भवति।
(4) छात्राणां भावावबोधनं सुगमतया भवति।
(5) उन्नतस्तरे पद्धतिरियं समुचिता अनुसरण–योग्या च वर्तते।
(6) छात्राणां रचनाशक्तेः–कल्पनाशक्तेश्च संवर्धनं भवति।
(7) अध्यापकः सक्रियः भवति।

**(च) टीका–विधेः दोषः**

(1) माध्यमिकस्तरे अयं विधिः न स्वीकरणीयः।
(2) छात्राणां निष्क्रियता अनेन भवति।

(3) अस्या पद्धतेः उपयोगिता अतिविशिष्य वर्तते।

(4) प्राथमिक-दशायां छात्राः सरलसंस्कृतमेव पठन्ति, अत:टीकाविधिः नोपयुक्ता भवति।

(5) एषा पद्धति:नीरसा, अमनोवैज्ञानिकी च भवति।

### (ङ) अनुवादविधिः
### Translation Method

विधिरयं परम्परागतविधिः अथवा अर्थबोधविधिरिति नाम्ना अपि कथ्यते। एतदनुसारम् अध्यापकः कमपि श्लोकं स्वयमेव पठित्वा अर्थं कथयति अथवा छात्रद्वारा श्लोकं वाचयित्वास्वयमेव साहाय्यं कुर्वन् अर्थं कथयति। तथा पूर्वं श्लोके आगतानां कठिन-शब्दानां मातृभाषायाम् अर्थमपि करोति। प्रथमस्तु पाठ-विषयस्य प्रत्येक-शब्दस्य मातृभाषायामनुवादः कर्त्तव्यः। ततः सम्पूर्णस्य अनुवादस्य प्रस्तुतिः भवति। अस्यां प्रणाल्यां छात्राणां कृते इदम् अत्यावश्यकम् भवति यत् शब्दानामनुवादं मनसि निधाय, अनुवादस्य साहाय्येन श्लोकस्य गद्यखण्डस्य च अवबोधः विधातव्यः। पद्यानामनुवादानन्तरं अध्यापकः छात्रद्वारा अनुवादं कारयति। अयं विधिः पाठ्यक्रमस्य पूरणार्थं स्वीकृतोऽस्ति। अनुवादपद्धतेः तात्पर्यमस्ति यत् संस्कृतभाषायाम् अनुवादं कृत्वा पाठयेत्। छात्रः जन्मतः एव मातृभाषायाम् शिक्षणं प्रारभते। अन्यान्य-विचारान् च मातृभाषायामेव स्वीकरोति। कस्यापि भाषायाः अधिगमः अनुवाद पद्धत्या एव भवितुं शक्यते इति केचन जनाः मन्वते। केचन च अनुवादपद्धत्याः विरोधं कुर्वन्ति, किन्तु एतस्मिन् विरोधेऽपि संस्कृतशिक्षणे अस्याः पद्धत्याः महत्त्वपूर्णं स्थानमस्ति।

#### (क) अनुवादपद्धतेः महत्त्वम्-

अस्याः पद्धतेः संस्कृतभाषाशिक्षणे अधिकं महत्त्वं नास्ति। कुत इति चेत् अस्याः आधारेण पद्यशिक्षणस्य वास्तविकोद्देश्यस्य च पूरणं न भवति, परन्तु पद्यात्मिकायाः भगवद्गीतायाः प्रथमाध्यायस्य कृते पद्धतिरियं समीचीना। यतो हि तत्र शब्दापेक्षया भावस्यैव महत्त्वं विद्यते। अधुनाऽपि अस्याः पद्धत्याः प्राच्यसाहित्यग्रन्थस्य अध्यापनाय विभिन्नेषु संकृतविश्वविद्यालयेषु प्रयोगः भवति।

#### (ख) अनुवादपद्धतेः उद्देश्यानि-

(1) सरलतया-स्पष्टतया च विषयावबोधनम्।

(2) भाषान्तर-करणशक्तेः संवर्धनम्।

(3) सरलव्याकरण-ज्ञान सम्पादनम्।

(4) संस्कृतभाषायां दक्षतोत्पादनम्।

(5) शब्द-भण्डागारस्य अभिवृद्धिः।

(6) पर्यायवाचि-शब्दानां अवबोधनम्।

(7) सुगमतया भाषाभिव्यक्तिः।

(8) अध्यापकानां सक्रियताः।

**( ग ) अनुवादविधेः पाठ्यक्रमः**

शिक्षकैः भावानुसारम् उचित-भाव-भङ्गिमया भावाभिव्यञ्जकतया अभिनयेन सह श्लोकस्य गद्यखण्डस्य च सस्वरवाचनं करणीयम्। ततःपरं तु छात्रैः अनुकरणवाचनम्, श्लोकस्य अन्वयः करणीयः। अन्वयान्तरं तु शब्दार्थ-सन्धि-समासविग्रहादि-कार्यम् करणीयम्। श्लोके समागतानि नानार्थ-पर्याय-पदानि, तद् व्युत्पत्ति-पूर्वगाथा-व्याकरण-अलङ्कारांश्च अध्यापकः स्वयं वदेत। यथा-पद्यशिक्षणे-

**वासांसि जीर्णानि यथा विहाय, नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।।**

–गीता 2/22

अध्यापकः उपर्युक्त-श्लोकस्य वाचनं स्वयमेव अथवा छात्र द्वारा कारयित्वा, वासांसि, जीर्णानि, विहायादि शब्दानाम् अर्थं कथयित्वा स्वयमेव श्लोकस्य अर्थान् अनेन प्रकारेण कथयति यत् "येन प्रकारेण जीर्णवस्त्राणि त्यक्त्वा मानवाः नवीनवस्त्राणि धारयन्ति, तद्वदेव आत्मा पुरातनं शरीरं त्यक्त्वा नवानि शरीराणि प्रतिगृह्णाति।

**अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति।**
**व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात्।।**

हे भारति? तव अयं कोशः कोऽपि अपूर्वः विद्यते, सः व्ययतः वृद्धिम् आयाति, सञ्चयात् च क्षयम् याति। यतः अन्यकोशाद् धनस्य व्यये सति कोशस्य क्षयो भवति किन्तु विद्या-रूप-कोशाद् व्यये कृतेऽपि अतिवृद्धिमेव विद्यायाः परिदृश्यते।

( 3 ) गद्यशिक्षणे-कलियुगस्य विचित्रप्रभावः अस्ति। यत्र कुत्रापि पश्यतु, कलहः विवादः दृश्यते। पत्नी पतिम् उपेक्षते। पुत्रः पितुः आज्ञां न अनुमनुते। छात्राः गुरूणां सम्मानं न विदधति।

(1) अस्मिन् सन्दर्भे कस्य प्रभावः वर्णितः? अस्मिन् सन्दर्भे कलियुगस्य प्रभावः वर्णितः।
(2) उपेक्षा कस्य भवति? उपेक्षा पत्युः भवति।
(3) सर्वत्र किं दृश्यते? सर्वत्र कलहः विवादःदृश्यते।
(4) केषां सम्मानो न दृश्यते? गुरूणां सम्मानो न दृश्यते।
(5) कलियुगस्य कीदृशः प्रभावः? पुत्रः पितरम् अवमानयति।

**( घ ) अनुवाद-विधेः गुणाः**

(1) छात्राणां शब्दकोशस्य अभिवर्धनम्।
(2) वाक्य-रचना-क्रमस्य दक्षता।
(3) अनुमान-तुलना-निरीक्षणस्य च अभ्यासः।
(4) सरलतया सुगमतया च विषयस्य ज्ञानम्।
(यतोहि मातृभाषा-माध्यमेन बोधः सरलः भवति।)

(5) छात्राणां विचारशक्तेः जागरणं क्रियते।
(6) अयं विधिः मनोविज्ञानात् विज्ञानं प्रति गच्छति।
(7) विषयाणां वर्गीकरणेन क्रमिक-विन्यासः अध्ययन-काठिन्यं निवर्त्तते।
(8) कठिन-शब्दानाम् अर्थस्य स्पष्टीकरणम्।
(9) स्वाध्याये स्वानुसन्धाने च दक्षता।

**(ङ) अनुवाद-विधेः दोषाः**

(1) कस्यापि भाषायाः मूलभावस्य पूर्ण-रक्षाकरणं अनया पद्धत्या दुष्करम्।
(2) छात्राः श्लोकार्थान् कण्ठस्थी कृत्व-लेखने तु समर्थाः भवन्ति, किन्तु तस्य मुख्यभावस्य, संरचनायाः सौन्दर्यस्य च अनुभूतौ असमर्थाः भवन्ति।
(3) छात्राः निष्क्रियाः भवन्ति।
(4) विधिरयम् अमनोवैज्ञानिकोऽस्ति।
(5) अनेन भाषागत-सौन्दर्यस्य ह्रासो जायते।

(विस्तरेण अनुवादपाठशिक्षणे पश्यन्तु)

**(च) अभिनयविधिः**

Acting Method

रूपक शिक्षणे कथाशिक्षणे श्लोकशिक्षणे च अभिनयविधिः प्रशस्ततरः। अभिनयं कृत्वा पाठं पाठयति शिक्षकः। अयं विधिः गीतविधेः एव विकसितं रूपम् अस्ति। संस्कृत-साहित्ये कतिपयबालगीतः अभिनय-प्रधानो भवति। छात्राणाम् अपि अभिनये अभिरुचिः भवति। अध्यापकः उचित-हावभावसहितः कथायाः वाचनं करोति तथा छात्रान् पात्रानुसारं वाचनस्य कृते आदिशति। यासु कथासु संवादानां संख्याः अधिकाः भवन्ति तेषां कृते अयं प्रविधिः सर्वाधिकः उपयुक्तो वर्तते। अस्मिन् विधौ अध्यापकः छात्रेभ्यः नाटकस्य भूमिकां प्रददाति, छात्रः स्व-स्व भूमिकानुसारं नाटकस्य वाचिकाभिनयं कुर्वन्ति। अस्मिन् विधौ वास्तविकाभिनय द्वारा नाटकस्य सम्वादस्य वा शिक्षणं भवति। अध्यापकः कक्षायामेव छात्रद्वारा पाठस्य अभिनयं कारयति। अत्र छात्राः वेषभूषादि विषयेषु ध्यानं न ददति। केवलं पात्रोचितम् अभिनयं कुर्वन्ति। रङ्गमञ्चस्य आवश्यकता नास्ति। वेषभूषादीनाम् अवसरोऽपि कक्षा पाठने न भवति। अयं विधिःकक्षा पाठनम् अत्यन्तोपयोगि वर्तते। प्रणालीयं प्राथमिकस्तरे अर्थात् सप्तमकक्षा-पर्यन्तं समीचीना वर्तते। यतो हि तस्मिन् स्तरे बालगीतानि पाठ्यविषय-रूपेण भवन्ति। तेषाम् अर्थावबोधनेऽपि अधिक-महत्त्वं न भवति। गीतानामुद्देश्यं भवति यत् बालकानां लय-तालादीनां परिचय प्रदानमेव। अत्र गानस्य कदाचित् सङ्गीतस्य प्राधान्यं भवति। गाने बालकानां महती रुचिः वर्तते। एतेषु गीतस्य श्रवणे स्वयं गाने च अभिरुचिः सहजतया एव तिष्ठति। गीतेषु विद्यमाना भाषा सरला-सुगमा च भवेत्। तदा ते गीतादिकण्ठस्थीकरणे समर्थाः भवन्ति। व्यक्तिशः सामूहिक रूपेण च छात्रैः अभ्यासः कारणीयः। गीतगान-समये करतालध्वनि वर्जनाय

च छात्राः प्रेरिता भवेयुः। परन्तु संस्कृतभाषायां बालगीतादि अभिनयगीतादि च विरलतयैव उपलभ्यते। अतः गीतानां संग्रहणे, लेखने, गाने च संस्कृताध्यापकेन अपेक्षितः प्रयत्नः विधेयः।

**(क) संस्कृत-गद्य-पद्य-शिक्षणे अभिरुच्युत्पादनाय उपायाः**

(1) सरल-सरस-श्लोकानां सुभाषित-पाठानां च कण्ठस्थीकरणम्।
(2) प्रहेलिकादीनाम् उपयोगः।
(3) अक्षरक्रीडा-पदक्रीडा-माध्यमेन शिक्षणम्।
(4) अन्त्याक्षरी-क्रीडा द्वारा पद्यप्रस्तुतीकरणस्य अभ्यासः।
(5) प्रसिद्ध-कवीनां जयन्त्युत्सवे सहभागित्वम्।
(6) गीतायाः सामूहिक-पाठाभ्यासः।
(7) विभिन्न-संस्कृत-कवीनां काव्यग्रन्थ-संग्रहः।

**(ख) अभिनय-विधेः उद्देश्यानि (Aims of Acting Method)**

(1) रसानुभूति सम्पादनम्।
(2) मानव-स्वभावस्य अध्ययनम्।
(3) व्यावहारिक-ज्ञान-संवर्धनम्।
(4) आरोह-अवरोह-क्रमेण विभिन्न-भावानां ग्रहणं व्यक्तीकरणं च।
(5) हितोपदेश-जननम्।
(6) स्वस्थ-मनोरंजनम्।
(7) अनुकरणस्य अवसरः।
(8) नृत्त-नाट्य-ताल-लयादीनां ज्ञानम्।
(9) छात्रेषु विद्यमानस्य समाकम्पस्य दूरीकरणं धैर्योत्पादनञ्च।
(10) संस्कृतभाषां प्रति अभिरुचि-संवर्धनम्।
(11) छात्र द्वारा अध्यापकेन उक्तं भावानुगुणं पद्यस्य सस्वरं वाचनम्।

**(ग) प्रयोगक्रमः-(सरल-सरस-सुभाषित-श्लोकानां अध्यापनम्)**

(1) 'हस्त-परिवारः' 'उदाहरणाय गीतमेकं प्रस्तूयते।'

एषः स्नेहालुस्तातः, निकटे निवसति ननु माता।
ज्येष्ठा भगिनी दीर्घतमा, मध्ये तिष्ठति अनामिका।।
कनिष्ठिका सा अन्ते च, हस्तकुटुम्बं मम पश्य।
हस्तद्वयेन प्रणमामि, आशीर्वाद विन्दामि।।

(2) चित्रं दर्शयित्वा

हंसः श्वेतः बकः श्वेतः को भेदो बक हंसयोः।
नीर-क्षीर विवेके तु हंसो हंसः बको बकः।।

**(3) मूर्खस्य लक्षणम्- चित्रं दर्शयित्वा**

**गतं न शोचामि कृतं न मन्ये खादन्न गच्छामि, हसन्न जल्पे।**
**द्वाभ्यां तृतीयो न भवानि राजन्। किं कारणं भोज भवामि मूर्खः।।**

**(4) गद्यशिक्षण**

एकदा कृष्णः सहचरैः सह यमुनातटे क्रीडन् आसीत्। क्रीडतां तेषां कन्दुकं यमुनायाः गम्भीरजले प्राविशत्। तस्मिन् जलाशये कालियनामकः महासर्पः न्यवसत्। कृष्णः तं सर्पं हन्तुं व्यवस्यति।

(1) प्रश्नः—कृष्णः कुत्र क्रीडति स्म? उत्तरम्-कृष्णः यमुनातटे क्रीडति स्म।

(2) प्रश्नः—कृष्णः कैः सह क्रीडति? उत्तरम्-कृष्णः सहचरैः सह क्रीडति।

(3) प्रश्नः—कन्दुकं कुत्र प्राविशत्? उत्तरम्- कन्दुकं यमुनायाः जले प्राविशत्।

(4) प्रश्नः—सर्पस्य नाम किम्? उत्तरम्-सर्पस्य नाम कालियः।

(5) प्रश्नः—कृष्णः सर्पं किं कृतवान्? उत्तरम्-कृष्णः सर्पं हन्तुं चेष्टितवान्।

**(घ) अभिनयविधेः गुणाः**

Merites of Acting Method

(1) अनेन विधिना नाटक-शिक्षणं रुचिकरं भवति।

(2) लय-गति-भावानुसारं वाचनस्य योग्यता-प्रदानम्।

(3) आदर्शोन्मुख-श्लोकानां कण्ठस्थीकरणम्।

(4) अस्मिन् विधौ छात्रेभ्यः भावानुसाराभिव्यक्तेः अवसरः प्रदीयते, तेन तेषां व्यक्तित्वस्य विकासो भवति।

(5) श्लोके निहितभावस्य ज्ञान-प्रदानम् एवं च अभिव्यक्तेः योग्यता-प्रदानम्।

(6) छात्राणां रसानुकूलवाचनस्य योग्यता-प्रदानम्।

(7) मानवोचित-व्यवहारस्य शिक्षण-प्रदानम्।

(8) छात्राणाम् उचितारोहावरोहेण तथा उचित-भावभङ्गिमया सह नाट्याभिनयस्य योग्यतोत्पादनम्।

(9) हितोपदेश-जननं -व्यक्तेः समाजस्य च कल्याणाय उपदेशनम्।

(10) विश्रान्ति-जननं-व्यक्ति समाजाभ्याञ्च शक्तिप्रदानम्।

(11) विनोद-जननं-व्यक्तेः समाजस्य च अनुरञ्जन-करणम्।

**(ङ) अभिनयविधेः दोषाः**

Demerites of Acting Method

(1) विधिरयं रङ्गमञ्चाभिनय-विधेरपेक्षया प्रभावशाली न भवति, यतोहि वास्तविकस्थितौ नाटकं न प्रस्तूयते।

(2) अस्मिन् विधौ समय-धन-शक्ति इति त्रितयस्य अधिकावश्यकता भवति।

(3) अस्मिन् विधौ नाटकस्य अन्योद्देश्यानां यथा नाटकस्य तात्त्विक समीक्षाया शब्दानां सन्दर्भानाञ्च व्याख्यादीनाम् अपेक्षा क्रियते।

(4) विद्यालये कुशल-अध्यापकानां संसाधनानां च अभावो वर्त्तते।

**(च) उपसंहार: (Conclusion)**

उपयुक्त-प्रणालीनां परिशीलनेन इदं स्पष्टतया वक्तुं शक्नुमः यत् माध्यमिक-विद्यालयेषु संस्कृत-पद्य-रूपक-कथा-शिक्षणाय अभिनयविधिः अत्युत्तमो भविष्यति, यदि कुशल-विशिष्ट-प्रशिक्षित अध्यापकानां नियोजनं भवेत्।

**(छ) व्यासविधि**

अस्मिन् विधौ अध्यापकः कथावाचकस्य इव नैक दृष्टान्तमाश्रित्य श्लोकान् स्पष्टयति। (तत्सत्वे तत्सत्वम् अन्वयः, तदभावे तद् अभावः व्यतिरेकः, यथा-मंगलसत्वे ग्रन्थसमाप्तिः मंगलाभावे-ग्रन्थसमाप्ताभावः।) अस्मिन् विधौ प्रत्येकपदानि भावभाषादृष्ट्या परीक्षीयन्ते भाषा-दृष्ट्या विचारयन् अध्यापकः शब्दस्य महत्त्वं, तद्स्थाने शब्दान्तरप्रयोगेण अर्थ-दोष-माधुर्य-वाक्यविन्यासोपरिपतितप्रभावादेः संकेतं करोति। शब्दशक्तिछन्दोऽलङ्कार-प्रसाद-माधुर्यादीनां ज्ञानं कारयति। भावदृष्ट्याबहुनाम् उदाहरणानां साहाय्यं गृहणाति।अन्तः कथामाध्यमेन, ऐतिहासिक-सन्दर्भमाध्यमेन विषयःसरलतया स्पष्टो भवति। अध्यापकैः भावानुसारोचित-भावभङ्गिमया भावाभिव्यञ्जकतया अभिनयेन सह श्लोकस्य सस्वरवाचनं करणीयम्।

**व्यास विधौ उद्देश्यानि-**

1. सरस-सरलश्लोकानां सुभाषितपद्यानां कण्ठस्थीकरणम्।
2. प्रहेलिकानादीनाम् उपदेशः।
3. अक्षरक्रीडा-पदक्रीडामाध्यमेन शिक्षणम्।
4. अन्त्याक्षरीक्रीडा द्वारा पद्यप्रस्तुतीकरणस्य अभ्यासः।
5. प्रसिद्धकवीनां जयन्त्युत्सव पालनम्।
6. गीतायाःसामूहिकपाठनाभ्यासः।
7. व्यस्ताक्षरीक्रीडायाः अभ्यासः।

साहित्यक-पौराणिक-ऐतिहासिक-वैज्ञानिक-अंशानां पाठनप्रसङ्गे अस्याःमहान् उपयोगः। अपि च भगवत्पादस्य श्रीशङ्कराचार्यस्य उपनिषद्भाष्यस्य, भगवद्गीतायाः ब्रह्मसूत्राणां च टीका पठनसमये इयं पद्धतिः स्वीकार्या। तथा व्याख्याने, शास्त्रार्थे, धार्मिकप्रसङ्गे, उपदेशे चेयं समुचिता परन्तु कक्ष्याशिक्षणे समयाभावात् स्तरस्य अननुकूलत्वाच्च पद्धतिरियं नानुसर्त्तव्या। अत्र विषयावबोधनाय (क) विषयः, (ख) संशयः, (ग) पूर्वपक्षः, (घ) उत्तरपक्षः, (ङ) समन्वयः, इति पञ्चविषयाः आवश्यकाः। यथा-

**सम्पूर्णकुम्भो न करोति शब्दम् अर्धो घटो घोषमुपैति नूनम्।**
**विद्वान् कुलीनो न करोति गर्वम् अल्पो जनो जल्पति साट्टहासम्।।**

**पदच्छेदः**—सम्पूर्णकुम्भः, न करोति, शब्दं, अर्धः, घटः, घोषम्, उपैति, नूनम्, विद्वान्, कुलीनः, न गर्वं करोति, अल्पः, जनः, जल्पति, साटटहासम्।

**पदार्थोक्तिः**—सम्पूर्णकुम्भः—पूर्णःघटः, शब्दं-ध्वनिं, न करोति, अर्धः—अर्धभागे एवं जलं यत्र अस्ति सः, घटः—कुम्भः, नूनम्-अवश्यं, घोषं-शब्दं, उपैति-प्राप्नोति, कुलीनः—सद्वंशभवः, विद्वान्-पण्डितः, गर्वम्-अहङ्कारं न करोति, अल्पः—स्वल्पः, जनः—पुरुषः, साट्टहासं-आडम्बरेण सह, जल्पति-निरर्थकं वदति।

**विग्रहवाक्यानि**-सम्पूर्णश्चासौ कुम्भश्च-सम्पूर्णकुम्भः—कर्मधारय-समासः। अट्टहासेन सह-साट्टहासम्-तृतीयातत्पुरुषसमास।

**व्यास विधेःगुणाः**

1. स्मरणशक्तेः वर्धनं भवति।
2. गुरुशिष्यसम्बन्धः सुदृढ़ो भवति।
3. मौखिक-कार्याय अपेक्षितं ध्यानं दातुं शक्यते।
4. अध्यापकाःसक्रियाः, छात्राः निष्क्रियाः भवन्ति।
5. संस्कृतभाषायाःशुद्धं, विस्तृतं स्वरूपमवगम्यते।
6. उच्चारणसामर्थसम्पादनम्।

**व्यास विधेःदोषाः**

1. शिक्षणं सर्वं विषयकेन्द्रितं भवति।
2. जीवकोपार्जने असमर्था भवन्ति।
3. व्यावहारिकज्ञानं न स्यात्।

## 2. आधुनिकविधिः।
## Modern Method

**(क) परियोजनाविधिः।** 2.1Project Method. **(ख) क्रीडाविधिः।** 2.2 Playway Method. **(ग) निरीक्षणविधिः।** 2.3 Observation Method. **(घ) स्वाध्यायनिर्देशनविधिः।** 2.4 Self Study and Guidance

### (क) परियोजनाविधिः
### Project Method

परियोजनाविधिः योजनाविधिरिति शब्दावनर्थान्तरे प्रयुज्यते। अस्माकं वेदेषु, वेदाङ्गेषु, उपनिषत्सु, पुराणेषु च प्रयोजनविधेः संसूचनाः प्राप्यन्ते। प्रयोजनविधेः स्वरूपं रूसो महोदयेन स्वपुस्तके एमील नामके ग्रन्थे, फ्रोबेल महोदयेन Education of man नामके स्वपुस्तके च

शिक्षणकार्यकलापमाधारीकृत्य निरूपितम्। एवमेव विलियम कॉवेट महोदयः Advice to young men नामके स्वपुस्तके बालकानां कृते ग्रामीण-योजनाः अवर्णयत्। अस्य विधेः प्रयोगः सर्वप्रथमतया कृषि-क्षेत्रे कृतः। शिक्षाक्षेत्रे प्रोफेसर जॉन डुई महोदयेन सम्यग्विचारःकृतः। किन्तु 1918 तमे वर्षे प्रयोजनवाद-सिद्धान्तानाम् आधारेण अस्य विधेः निर्माणं विकासश्चेति विलियम किलपैट्रिक महोदयेन सम्पादितम्। पार्कर महोदयः प्रयोजनविधिम् एवं निरूपयति यत् प्रायोजनकार्ये योजनायाः कार्य-साधनायाश्च उत्तरदायित्वं छात्रणाम् एव भवति। अत्र कार्य-करणाय छात्राणां समक्षं काश्चन समस्याः उपस्थाप्यन्ते। तासां समस्यानां समाधानाय अपेक्षित-सामग्री, छात्रैरेव सम्पाद्यते। जीवन-सम्बद्ध-समस्याः एव छात्रेभ्यः प्रदीयन्ते।

**(क) परियोजनाविधेः आधारभूत-सिद्धान्ताः**

(1) क्रियाशीलता-सिद्धान्तः।
(2) अनुभूति-सिद्धान्तः।
(3) स्वतन्त्रता-सिद्धान्तः।
(4) समन्वयता-सिद्धान्तः।
(5) उपयोगिता-सिद्धान्तः।
(6) वास्तविकता-सिद्धान्तः।
(7) अभिरुचि-सिद्धान्तः।
(8) सामाजिकता-सिद्धान्तः।
(9) प्रयोजनशीलता-सिद्धान्तः।
(10) व्यक्तिगत-भिन्नता-सिद्धान्तः।
(11) उद्देश्य-निर्धारणात्मक-सिद्धान्तः।

**(ख) परियोजनाविधेः प्रकारः**

संस्कृत-शिक्षकः संस्कृते विविधानि प्रयोजन-कार्याणि छात्रेभ्यः प्रदाय तेषां रुचौ वृद्धिं सम्पादयति। सामान्यतः प्रयोजनकार्यं द्विप्रकारकं भवति। यथा–(1) वैयक्तिकम् (2) सामूहिकञ्च। किलप्रैट्रिक महोदयः प्रयोजनकार्यं चतुष्प्रकारकम् निरूपयति। यथा-(1) कलात्मकम् (2) समस्यात्मकम् (3) रचनात्मकम् (4) अभ्यासात्मकम् इति।

**(ग) परियोजनाविधेः सोपानानि**

(1) परिस्थितेः कल्पनम्।
(2) प्रयोजनायाः चयनम्।
(3) उद्देश्यानां निर्धारणम्।
(4) प्रयोजन-कार्यक्रमस्य निर्माणम्।
(5) प्रयोजनायाः कार्यान्वयनम्।

(6) प्रयोजनायाः मूल्याङ्कनम्।

(7) प्रयोजनायाः विवरणम्।

**(घ) प्रयोजनविधेः पाठ्यक्रमः**

(1) अक्षरक्रीडा-पदक्रीडा-वाक्यक्रीडा-माध्यमेन शिक्षणम्।

(2) अन्त्याक्षरीक्रीडा द्वारा पद्य-प्रस्तुतीकरणस्य अभ्यासः।

(3) व्यस्ताक्षरीक्रीडायाः अभ्यासः।

(4) विभिन्न संस्कृत-कवीनां काव्यग्रन्थ संग्रहः।

(5) योजनानुसारं गद्य-पद्य-शिक्षणावसरे व्याकरणज्ञान-परीक्षणम्।

(6) भाषाप्रयोगशाला-माध्यमेन अध्यापनम्।

(7) दृश्यश्रव्यसाधनेन उच्चारणज्ञान-सम्पादनम्।

(8) अन्वयप्रबोधे दण्डान्वयखण्डान्वय-भेदेन द्विभेदोऽन्वयः क्रियते।

यथा-(1) दण्डान्वयः-

**येषां न विद्या न तपो न दानं, ज्ञानं न शीलं न गुणो न धर्मः।**
**ते मर्त्यलोके भूवि भारभूताः, मनुष्यरूपेण मृगाश्चरन्ति।।**

येषां (मानवानांसकाशे) विद्या, तपः, दानं, ज्ञानं, शीलं, गुणः, धर्मश्च न (सन्ति) ते (मानवाः) (अस्मिन्) मर्त्यलोके भुवि भारभूताः (सन्ति) (तथा) मनुष्यरूपेण मृगाः (ते मानवाःसन्तोऽपि पशु-सदृशाः) चरन्ति।

(1) अस्मिन् श्लोके कर्तारः के? ते(मानवाः), मृगाः(पशवः)।

(2) क्रिया का? चरन्ति।

(3) श्लोकेऽस्मिन् प्रथमान्तानि पदानि कानि कानि सन्ति? विद्या, तपः, दानं, ज्ञानं, शीलं, गुणः, धर्मः।

(4) ते (मानवाः) इति पदस्य विशेषणवाचकपदं किम्? भारभूताः। (5) अव्ययपदं किम्? न।

**(2) खण्डान्वयः**

**शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपः,**
**नागेन्द्रो निशितां कुशेन समदो दण्डेन गोगर्दभौ।**
**व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं,**
**सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्यनास्त्यौषधम्।।**

जलेन हुतभुक् छत्रेण सूर्यातापः, निशितांकुशेन समदः नागेन्द्रः, दण्डेन गोगर्दभौ, भेपजसंग्रहैः व्याधिः, विविधैः मन्त्रप्रयोगैः विषादिः वारयितुं शक्यः। शास्त्रविहितोपायः सर्वस्य औषधम् अस्ति। (किन्तु) मूर्खस्य औषधं शास्त्रं न अस्ति।

(1) प्रश्नः–जलेन कः वारयितुं शक्यः? उत्तरम्–हुतभुक्।
(2) प्रश्नः–हुतभुक् केन वारयितुं शक्यः? उत्तरम् – जलेन।
(3) प्रश्नः–छत्रेण कः निराकर्तुं शक्यः? उत्तरम्–सूर्यातापः।
(4) प्रश्नः–नागेन्द्रः कीदृशः? उत्तरम्–समदः।
(5) प्रश्नः–निशिताङ्कुशेन कः अवरोद्धुं शक्यते? उत्तरम्–समदः नागेन्द्रः।
(6) प्रश्नः–दण्डेन कौ दमयितुं शक्यौ? उत्तरम्– गोगर्दभौ।
(7) प्रश्नः–व्याधिः कैः वारयितुं शक्या? उत्तरम्–भेषजसंग्रहैः।
(8) प्रश्नः–मन्त्रप्रयोगैः किं दूरीकर्तुं शक्यम्? उत्तरम् –विषम्।
(9) प्रश्नः–शास्त्रे कस्य औषधम् अस्ति? उत्तरम्–सर्वस्य।
(10) प्रश्नः–शास्त्रे कस्य औषधं नास्ति? उत्तरम्–मूर्खस्य।

**(3) गद्यस्योदाहरणम्**–अलौकिकी इयं भाषा संस्कृतभाषा। इयं गीर्वाणी इत्याख्याता। संस्कृतभाषायाः प्राचीनतमं रूपं वेदेषु उपलभ्यते। वेदाः ईश्वरोक्ताः कथ्यन्ते। एतेषु निर्मलः मानवधर्मः प्रोक्तः।

(1) प्रश्नः–अलौकिकता कस्यां भाषायाम् अस्ति?उत्तरम्–अलौकिकता संस्कृतभाषायाम् अस्ति।
(2) प्रश्नः–अस्याः अपरं नाम किम्? उत्तरम् –गीर्वाणी अस्याः अपरं नाम।
(3) प्रश्नः–अस्याः भाषायाः प्राचीनरूपं कुत्र अस्ति? उत्तरम् वेदेषु अस्याः प्राचीनरूपम् अस्ति।
(4) प्रश्नः–वेदानां वक्ता कः? उत्तरम् –ईश्वरः वेदानां वक्ता।
(5) प्रश्नः–वेदानां मुख्यः प्रतिपाद्यविषयःकः? उत्तरम् –शुद्धमानवधर्मः वेदानां मुख्यविषयः।

**(ङ) प्रयोजनविधेः गुणाः** (Merites of Project Method)

(1) अनेन विधिना–छात्रेषु व्यावहारिक–ज्ञानं सुगमतया भवति।
(2) लोकतान्त्रिक–भावनायाः विकासो भवति।
(3) छात्रेषु उत्तरदायित्व–गुणः विकसितो भवति।
(4) आत्मविश्वासः अनुशासन–प्रियता इत्यादयो गुणाः विकसन्ति।
(5) कार्यमिदं रुचिपूर्णं छात्रकेन्द्रितं च भवति।
(6) विभिन्न–विषयाणां परस्पर–सम्बन्धे अवगतिः भवति।
(7) स्वविचाराभिव्यक्तीकरणाय सु–अवसरः मिलति।
(8) स्वयं कार्यकरणे प्रवृतिः जायते वर्धते च।
(9) अध्यापकस्य उपयुक्तं–मार्गदर्शनं मिलति।
(10) विभिन्न–विषयाणाम् एकत्र समावेशः भवति।

**( च ) प्रयोजन-विधेः दोषाः** (Demerites of Project Method)

(1) पूर्णतया समयसारण्याः दुरूपयोगः भवति।

(2) सम्पादितस्य ज्ञानस्य पुनरावृत्तये अवसरः न लभ्यते।

(3) विषयवस्तु सामग्री सम्पादने क्लेशः भवति।

(4) समयस्य, शक्तेः, धनस्य च महती आवश्यकता भवति।

(5) सुशिक्षित-अध्यापकानाम् अभावः अत्र प्रधानसमस्या।

(6) सर्वेषु विषयेषु अयम् उपागमः उपयोगी न भवति।

**( छ ) निष्कर्षः**

'अन्वेषितं ज्ञानं चिरं भवति' अस्य वचनस्य सार्थकता सहजरूपेण भवति। एतद्विधेः सम्यक् परिपालनार्थं तु सुयोग्य-अध्यापकानाम् आवश्यकता भवति। प्राकृतिक-विज्ञानेन सह सामाजिक-विज्ञान-परक संस्कृत-साहित्य-शिक्षणमपि प्रयोजन- विधिना सम्भवति। व्याकरणस्य आधारमभिलक्ष्य 'धर्मार्थकाममोक्षाणाम्' इति पुरूषार्थ सिद्धयर्थं साहित्यशास्त्रम् अध्यापितव्यम्। संस्कृत-साहित्ये काव्यस्य स्थानं महत्त्वपूर्णमस्ति। स्वतन्त्रवातावरणे योजना Project माध्यमेन उपर्युक्त-पाठ्यक्रमस्य प्रयोगः करणीयः।

## ( ख ) क्रीडाविधिः
## Play-way-Method

'बालस्तावत् क्रीडाशक्तः' इति शंकराचार्यस्य निर्देशेन स्पष्टे भवति यत् बालकेषु क्रीडां प्रति आशक्तिर्भवति। क्रीडायां बालानां स्वभाविकी-अभिरुचिः, अतः क्रीडाविधिः आविष्कृतोऽभूत्। क्रीडाविधेः प्रवर्तकः फ्रॉवेल महोदयः वर्त्तते। परञ्च आधुनिकयुगे हेनरीकाल्डबैलकुक महोदयः क्रीडाविधिं परिष्कृत्य शिक्षण-प्रक्रियां संकलय्य आदर्शः व्यवस्थापितः। क्रीडाविधिः Play-way method नामकं पुस्तकं प्रकाशयित्वा कूक महोदयेन विशद रूपेण अस्योपरि प्रकाशः प्रदत्तः। It is the core of my faith that the only work worth doing is really play by play.I mean doing anything with one's heart in it. (Page-4) बालकेन पूर्णमनोयोगेन क्रीडामाध्यमेन विषय-वस्तु अवगन्तव्यम्। यस्मात् कारणात् तेषां शारीरिकी-मानसिकी- सामाजिकी-आध्यात्मिकी-शक्तिश्च क्रियाशीला जायते। अयं विधिः बालानां शिक्षण-क्षमतां सोत्साहेन वर्द्धयति। तथा स्वतन्त्र-विषयाणाम् अन्वेषणे उत्साहवर्धनं विदधाति। क्रीडाविधि-माध्यमेनबालकाः'क्रीडा-कार्य-जीवनेति', एतेषु त्रिषु विषयेषु च अन्तरं करिष्यन्ति। अतः एतेषां त्रयाणां समाहारः एव क्रीडाविधि नाम्ना व्यपदिश्यते।

**क्रीडाविधौ आधारित-मुख्याः शिक्षणविधयः**

(1) प्रयोजनविधिः (योजनाविधिः)-Project method.

(2) डाल्टन विधिः - Dalton method.

(3) मॉन्टेसरीविधिः—Montessori method.

(4) किंडरगार्टनविधिः— Kindergarten method.

(5) ह्यूरिस्टिकविधिः— Heuristic method.

(6) बेसिकशिक्षा- Basic Education.

(7) विनेटका योजना- Vinnetka plan.

(8) गैरी योजना- Gary system.

**क्रीडाविधौ आधारिताः–पाठ्य-सहायिका क्रियाः**

(1) छात्र-स्वशासनम् -Student self Government.

(2) स्काउटिंग - Scouting

(3) गर्ल गाइडिंग - Girl Guiding.

(4) विद्यालयोत्सव- School Functions.

(5) पर्यटनम् - Excursion.

(6) एन. सी. सी. N.C.C.

(7) ए. सी. सी -A.C.C.

(8) संगठितक्रीडा-Organized Games

**क्रीडाविधौ विभिन्न-विषयाणां शिक्षणम्**

विभिन्न-विषयाणां शिक्षणे विभिन्न-क्रियाणां समावेशे क्रीडाविधौ प्रयोगः निम्नांकित वर्णनेन स्पष्टो भवति।

**(1) भाषायाम्** Languages–अभिनये, वाद-विवादे, विचार-गोष्ठ्यां, भाषणे, कथायाम् एवंच उच्चारणे, कविता(श्लोक) वाचने, विद्यालय-पत्रिकायां लेखादि लेखने च क्रीडाविधयः उपयोगिनः भवन्ति।

**(2) इतिहासः** History–अभिनय-कथा-अस्त्र-शस्त्र एवं च कलात्मक-चित्रादि निर्माणे, ऐतिहासिक पर्यटने, ऐतिहासिक-फिल्मादि दर्शनान्ते तु पात्राणि घटनायाः वर्णनम्, ऐतिहासिक-स्थानम्, संग्रहालयादिकं दृष्ट्वा विचारविनिमयः।

**(3) भूगोलः** Geography–चित्राणां-टिकटानां संकलनम्। विभिन्न-देशनिवासिनां गृहानि, पशवः, वस्तूनि रेखाचित्र- निर्माणम्, तथा च चर्ट, मॉडल, मैप, आदि निर्माण कार्यम् करणीयम्।

**(4) गणितम्** Arithmetic–विभिन्न-वस्तूनां सहयोगेन गणनं, तोलनं, विक्रयाद्यः करणीयाः।

**(5) विज्ञानम्** Science–प्रयोगेण नियमानां सिद्धान्तानां निर्माणम्, यन्त्रादि निर्माणं च करणीयम्।

**क्रीडाविधीनां सिद्धान्ताः**

(1) अयं विधिः शिक्षणस्य परम्परागतविधिं परिवर्त्य Variable नूतनविधि-स्वीकरणाय विद्यालय-प्रशासनम् उत्प्रेरयति।

(2) विद्यालयीय-कार्यस्य सांसारिक-कार्येण सह प्रत्यक्ष-लाभदायकश्च सम्बन्धः स्थापयति।

(3) अनेन विधिना जायते अभिभावकानां शिक्षकाणां च प्राचीन-निरंकुश दृष्टिकोण परिवर्तनम्।

(4) स्वच्छवातावरणं-निर्माय अध्यापकः कक्षायां कलां विज्ञानं च प्रति रुचिमुत्पादंयति।

(5) छात्राणां आनुकूल्यं मनसि निधाय सुखग्राह्यं औपचारिकञ्च शिक्षणविधिं प्रस्तौति।

(6) क्रीडाविधिम् अभिलक्ष्य उपयुक्त शिक्षण-सामग्रीं प्रयोगार्थं आनेतव्या।

(7) क्रीडनक्रियाम् आधारीकृत्य शिक्षण-प्रक्रियाः यथा रुचिकरा-स्वास्थ्यकरा-निर्दोषवहा च भवेयुः, तथा शिक्षकैः विधातव्यम्।

(8) छात्रेभ्यःसंगीत-आलबाल-हस्तकार्य-अभिनय-शारीरिकव्यायामादिकं सहायक-क्रियाणामपि व्यवस्था विधेया।

(9) क्रीडाविधिमनुसृत्य छात्राणां शिक्षां-प्रदाय अधिकाधिको लाभः प्रदेयः।

(10) बालकानां रचनात्मक-शक्तीनां विकासः करणीयः।

(11) अधिगत-विद्यान् छात्रान् स्वाधीत-विषयान् व्यावहारिक-दृष्टिकोण प्रगत्यर्थं स्वतन्त्र-उत्तरदायित्वं च निर्मातव्यम्।

**क्रीडाविधेः पाठ्यक्रमः–**

(1) अक्षरक्रीडा-पदक्रीडा-वाक्यक्रीडा-माध्यमेन शिक्षणम्।

(2) अन्त्याक्षरीक्रीडा द्वारा पद्य-प्रस्तुतीकरणस्य अभ्यासः।

(3) व्यस्ताक्षरीक्रीडायाः अभ्यासः।

(4) विभिन्न संस्कृत-कवीनां काव्यग्रन्थ संग्रहः।

(5) योजनानुसारं गद्य-पद्य-शिक्षणावसरे व्याकरणज्ञान-परीक्षणम्।

(6) भाषाप्रयोगशाला-माध्यमेन अध्यापनम्।

(7) दृश्यश्रव्यसाधनेन उच्चारणज्ञान-सम्पादनम्।

(8) प्रहेलिकाः प्रस्तुत्य उत्तराणि निर्दिश्यन्ते। यथा -

**वृक्षाग्रवासी न च पक्षिराजः, त्रिनेत्रधारी न च शूलपाणिः।**
**त्वग्वस्त्रधारी न च सिद्धयोगी, जलं च बिभ्रन्न घटो न मेघः।।**

(नारिकेलम्)

**अपादो दूरगामी च साक्षरो न च पण्डितः।**
**अमुखः स्फुटवक्ता च यो जानाति स पण्डितः।।**

(पत्रम्)

**एकचक्षुः न काकोऽयं बिलमिच्छत्यहिर्नहि।**
**क्षीयते वर्धते चैव न समुद्रो न चन्द्रमा।।**

(सूची)

**(9) गद्यशिक्षणे**-भारतम् एकः शान्तिप्रियो देशो वर्तते। स कदापि युद्धं न कामयते। भारतम् अन्यदेशं कदापि आक्रान्तुं न इच्छति। परराष्ट्रेण आक्रान्तः सन् अस्माकं देशः शत्रुं धूलिसात् करोति।

(1) प्रश्नः—भारतीयानां प्रिया का? उत्तरम् -शान्तिः भारतीयानां प्रिया।

(2) प्रश्नः—भारतीयाः किं न इच्छन्ति? उत्तरम् -भारतीयाः युद्धं न इच्छन्ति।

(3) प्रश्नः—आक्रमणं कः न इच्छति? उत्तरम् -भारतदेशः आक्रमणं न इव्छति।

(4) अस्माकं देशः शक्तिं कदा प्रदर्शयति? परराष्ट्रेण आक्रान्तः अस्माकं देशः शक्तिं प्रदर्शयति।

(5) प्रश्नः—आक्रमणे शत्रोः कीदृशी दशा भवति? उत्तरम्-शत्रुः धूलिसात् भवति।

**(10) भाषाक्रीडाः** (Language games) प्रायः छात्राणां क्रीडासु शक्तिः भवति। भाषाकृत्यानि क्रीडारूपेण पाठयति चेत् भाषाक्रीडाः भवन्ति।

**(क) पदक्रीडा**-कक्षायां प्रथमम् एकः छात्रः एकं पदं वदति। अन्यः, तस्य पदस्य अन्तिमाक्षरमाश्रित्य एकं पदं वदति। पुनः तस्य पदस्य अन्तिमाक्षरमाधृत्य अन्यं पदं वदति। अस्यैव नाम पदान्त्याक्षरी। यथा-रामः, तरुः, भरतः, तनवः, . . एवं प्रकारेण क्रीडा चलति। कक्षायां सर्वे छात्राः क्रीडायां यथा सक्रियाः भवेयुः तथा प्रयतेत् अध्यापकः।

**(ख) अन्तिमाक्षरसमक्रीडा**-यथा-रामः, सोमः, भीमः, श्यामः. . . .।

**(ग) क्रियापदक्रीडा**-लिखति, पिवति, क्रीडति.। एवम् विविधलकाराणाम् अभ्यासं कारयितुं प्रभवति।

**(घ) संख्यावाचकपदक्रीडा**-छात्राः एकैकशः क्रमशः संख्याः वदन्ति। एवम्-एकं, द्वे, त्रीणि।

**(ङ) व्यतिरेकपदक्रीडा**-एकः छात्रः एकं पदं वदति। अन्यः छात्रः तस्य विपरीतपदं वदति। यथा-प्रकाशः—अन्धकारः, मन्दम्-तीव्रम्, ह्रस्वः—दीर्धः, दृढः—दुर्बलः। एवं वहुविधाः भापाक्रीडाः भवन्ति। अध्यापकः सम्यग्विचिन्त्य नूतनक्रीडाः आविष्कुर्यात्। एताभिः भाषाक्रीडाभिः छात्रेपु भापणशक्त्या सह विज्ञानं, विनोद श्च वर्धेते।

**क्रीडाविधेः गुणाः** Merites of Play-Way

(1) छात्राणां रचनामक-कार्येषु स्वीय प्रतिभाशक्तिः—प्रदर्शनाय उत्प्रेरयति।
(2) अयं विधिः सामाजिक-सम्बन्ध-स्थापनाय सहायको भवति।
(3) अयं विधिः बालकानां कृते संघीय-प्रवृत्तेः (Herd Instinct) एवं च जेतुं प्रवृत्तेः (Instinct of Pugnacity) अवसरं जनयति।

(4) अयं विधिः स्वजीवने सामाजिक पर्यावरणेन सह सामंजस्यं क्षमतां च स्थापयति।
(5) अयं विधिः बालकानां स्वाभिव्यक्ति-प्रकटनाय कार्ये परिणमनाय च अवसरं ददाति।
(6) अयं विधिः बालकानां शारीरिक-मानसिक-सामाजिक-अध्यात्मिक-शक्तीनां च विकासपथमानीय तेषां व्यक्तिं सन्तुलितं करोति।
(7) अयं विधिः छात्रेषु अभिनयादि द्वारा प्रजातन्त्रीय-परम्पराणाम्, अनुभव-स्मृत्यादि-विषयानाम् अभिव्यक्तये अवसरं ददाति।
(8) अयं विधिः बालकानां बाह्यनियंत्रणात् परिमुञ्चनं स्वतन्त्रता-प्रदानञ्च कृत्वा 'स्वानुशासनस्य-स्वप्रगतेः—स्वशिक्षायाश्च (Self-discipline, Self-Advancement, Self-Education) प्रशिक्षणं करोति।

**क्रीडाविधेः दोषाः Demerites of Play-Way**

(1) अयं विधिः उन्नतकक्षायाः बालकानां कृते न उपयोगी अस्ति।
(2) अनेन विधिना संचालित-विद्यालयेषु शिक्षा अत्यन्त-व्ययकारिणी भवति।
(3) संसाधनाभावेन सामान्य-विद्यालयेषु अस्य विधेः उपयोगः असंभवं भवति, यतः वैविध्येन च व्ययाधिक्यात् नानुपयोगी विधिरयम्।
(4) अस्य विधेः संचालनार्थं कुशल-विशिष्ट-प्रशिक्षित-अनुभविनः-अध्यापनस्यावश्यकता भवति।
(5) विद्यालये विशुद्ध-वातावरणस्य निर्माणं करणीयम्।

**उपसंहार Conclusion**

केचित् शिक्षाशास्त्रिणो वदन्ति यत् शिक्षायां क्रीडा-भावनायाः समावेशे सति ''मृदुशिक्षा-शास्त्रस्य'' (Sofi-Pedagogy) आविर्भावो भवितुमर्हति? नेदं-समीचीनम्। अस्य विधेः अभिप्रायः अयमस्ति यत् -क्रीडाविधेः समावेशे सति कार्ये ज्ञानार्जने च व्याप्तनीरसत्वस्य अपाकरणे सहायको भवति। येन कारणेन बालकानां कृते ज्ञानार्जन- विषयकानि कार्याणि रोचकानि आनन्ददायकानि च भवेयुः।

## (ग) निरीक्षणविधिः

## Observation Method

नवीन-स्थलानि नवीन-वस्तूनि च दर्शयित्वा तेषां संस्कृते वर्णनं कारयितव्यम्। अनेन छात्राणां शब्दकोशे वृद्धिर्भविष्यति, उच्चारणमपि शुद्धं भविष्यति। निरीक्षणं-ज्ञानार्जनस्य सुबोधम् एवंच सरलं साधनं वर्तते। यस्मिन् बालकाः स्वयं क्रियाशीलाः भवन्ति। कस्यचिद् वस्तुनः स्थानस्य क्रियायाश्च सावधानतया अवलोकनार्थं अवगन्तुं च या क्रिया भवति सैव निरीक्षणविधिः/अवलोकनविधिः इति नाम्ना प्रसिद्धा। अस्मिन् विधौ अध्यापकः स्वयं मौनमवलम्ब्य छात्रान् उत्प्रेरयति, छात्राश्च अवलोकन-निरीक्षण द्वारा स्वयं ज्ञानार्जनं कुर्वन्ति।

प्रायश: सर्वेषां विषयाणां शिक्षणेषु अस्योपयोग: भवति। सामाजिकविज्ञान-व्यावसायिक-शिक्षाभ्यां विधिरयं महान् उपयोगी अस्ति। निरीक्षणं ज्ञानेन्द्रिय-सम्बन्धि-शिक्षणस्य महत्त्वपूर्ण-विधि: वर्तते, येन छात्रै: स्व-चतुर्दिक्षु-संसारस्य ज्ञान-प्राप्ति:सर्वतोभावेन क्रियते।

**निरीक्षण विधे: विशिष्टता**

(1) अयं वैज्ञानिको विधि:, यत: अस्मिन् विधौ: छात्रा: स्वयमेव क्रिया माध्यमेन ज्ञानार्जनं कुर्वन्ति।

(2) अस्मिन् विधौ छात्राणां अवलोकन-निर्णय-चिन्तन-स्वतन्त्र-अभिव्यञ्जना- शक्तश्च विकसन्ति।

(3) अस्य प्रयोगेन शिक्षालय-गृह-समाजेषु प्रगाढ़: सम्बन्धो भवति।

(4) विषयस्य अस्य प्रयोगेण छात्र: विषयज्ञानं प्रत्यक्षमनुभवन्ति।

(5) अस्य विधे: प्रयोगेण छात्रा: सामाजिक-संस्था एवं सामुदायिक-समभावाभावयो: ज्ञानं सुगमतया रुचिपूर्वकं प्राप्नुवन्ति।

**निरीक्षणस्य प्रविधय:**

(1) क्षेत्रीय-पर्यटनं शैक्षिक-भ्रमणं च। Field trips or educational excursions.

(2) सामुदायिक-सर्वेक्षणम्-Community surveys.

(3) सामुदायिक-सेवा-सर्वेक्षणम्- Community service surveys.

**निरीक्षणस्य प्रकार:**

(1) **सहजनिरीक्षणम्**-वयं यं छात्रं निरीक्षामहे स: न जानाति, मां निरीक्षन्त इति। एतादृशं भवति-सहजनिरीक्षणम्।

(2) **नियन्त्रितनिरीक्षणम्**-निरीक्षणाय अपेक्षितपरिस्थितिं परिकल्प्य यन्निरीक्षणं क्रियते तद् भवति नियन्त्रितनिरीक्षणम्।

(3) **दैनिककार्यनिरीक्षणम्**-अध्यापकेन प्रतिदिनं गृहकार्यं दीयते। पुन: प्रदत्तस्य गृहकार्यस्य अङ्का: दीयन्ते। कक्षायां छात्राणां संस्कृतभाषणं, वार्त्तालाप: इत्यादि पाठ्य-सहगामिक्रियासु दैनिककार्यनिरीक्षणं परीक्षणञ्च भवति।

(4) **वार्षिकनिरीक्षणम्**-सम्पूर्णे वर्षे छात्राणां संस्कृतभाषायां कियत् ज्ञानं प्राप्तम्? कीदृशी प्रगतिरधिगता? इति विषयो निरीक्ष्यते।

**निरीक्षणस्य प्रयोगक्रम**

(1) निरीक्षणस्य योजना पूर्वनिर्धारिता भवेत्।

(2) छात्रेभ्य: निरीक्षण कर्त्रा स्वतन्त्र: अवसरो दातव्य:।

(3) अध्यापकै: छात्राणां शंकाया-जिज्ञासायाश्च समाधानं करणीयम्।

(4) अध्यापकैः परिस्थितिः निर्मातव्या।

(5) कस्यचित् वस्तुनः उपकरणस्य वा निरीक्षण-समये छात्रान् प्रति तेषाम् अवयवानां कार्य-प्रणालीनां च विषये अध्यापकैः ज्ञान-प्रदानं कारणीयम्।

(6) निरीक्षणोपरान्तम्-अध्यापकेन छात्रेषु मध्ये तत्सम्वन्धि-ज्ञानस्य क्रमबद्ध-व्यवस्थायै प्रश्नः प्रष्टव्यः।

(7) निरीक्षणस्य सामाजिक-व्यवहारे ज्ञाने शिक्षणे च महत्त्वपूर्णं-स्थानं वर्तते।

(8) विपयावबोधने निरीक्षणे च विद्यमानं काठिन्यं दूरीभवति। यथा-

**सम्पूर्णकुम्भो न करोति शब्दम् अर्धो घटो घोषमुपैति नूनम्।**
**विद्वान् कुलीनो न करोति गर्वम् अल्पो जनो जल्पति साट्टहासम्।।**

**पदच्छेदः**—सम्पूर्णकुम्भः, न करोति, शब्दं, अर्धः, घटः, घोषम्, उपैति, नूनम्, विद्वान्, कुलीनः, न गर्वं करोति, अल्पः, जनः, जल्पति, साटट्हासम्।

**पदार्थोक्तिः**—सम्पूर्णकुम्भः—पूर्णःघटः, शब्दं-ध्वनिं, न करोति, अर्धः—अर्धभागे एवं जलं यत्र अस्ति सः, घटः—कुम्भः, नूनम्-अवश्यं, घोपं-शब्दं, उपैति-प्राप्नोति, कुलीनः—सद्वंशभवः, विद्वान्- पण्डितः, गर्वम्-अहङ्कारं न करोति, अल्पः—स्वल्पः, जनः—पुरुषः, साट्टहासं-आडम्बरेण सह, जल्पति-निरर्थकं वदति।

**विग्रहवाक्यानि**—सम्पूर्णश्चासौ कुम्भश्च-सम्पूर्णकुम्भः—कर्मधारय-समासः। अट्टहासेन सह-साट्टहासम्-तृतीयातत्पुरुषसमास।

**(2) गद्ये**—ग्रामप्रदेशे कृषकाः क्षेत्रेषु हलं कर्षन्ति। ते सूर्योदयात् प्रागेव जाग्रति। ते झटिति हस्तौ पादौ च प्रक्षाल्य स्वल्पं प्रातराशं भुञ्जते। ते निजान् वृषभान् क्षेत्रे संनीय मध्याह्नपर्यन्तं तत्र कार्यं कुर्वन्ति।

(1) कृषकाः कुत्र वसन्ति? कृषकाः ग्रामेषु वसन्ति।

(2) कृषकाः कदा शय्यां त्यजन्ति? कृषकाः सूर्योदयात् प्रागेव शय्यां त्यजन्ति।

(3) वृषभाः किं कुर्वन्ति? वृषभाः हलं कर्षन्ति।

(4) प्रातराशस्य कः अर्थः? प्रातः कालीनः अल्पाहारः।

(5) कृषकस्य मुख्यसहायकः कः? वृषभः कृषकस्य मुख्यसहायकः।

**निरीक्षण-विधेः उद्देश्यानि** Aims of Observation Method

(1) छात्रेभ्यः निरीक्षणस्य प्रशिक्षणं प्रदातव्यम्।

(2) छात्राणां सक्रियतायाः निरीक्षणम्।

(3) अनुकरण-वाचनस्य निरीक्षणम्।

(4) छात्राणां दुर्वलतायाः निरीक्षणम्।

(5) भावाभिव्यक्तेः निरीक्षणम्।

(6) अन्वेषण-कार्यस्य निरीक्षणम्।
(7) छात्राणां व्यक्तित्वस्य निरीक्षणम्।
(8) अवबोधनस्य निरीक्षणम्।
(9) छात्राणां अभिरुच्युत्पादनम्।
(10) गृहकार्यस्य सम्यक् निरीक्षणम्।
(11) छात्राणां गतिविधीनां निरीक्षणम्।

**निरीक्षण-विधेः गुणाः** Merites of Observation Method

(1) निरीक्षणेन छात्रेषु सक्रियता-आगच्छति।
(2) निरीक्षणेन उच्चारणगत-दोषाणां निवारणं भवति।
(3) निरीक्षणेन छात्राणां दुर्वलतायाः निवारणं भवति।
(4) निरीक्षणाय छात्राः प्रशिक्षिताः भवन्ति।
(5) छात्राणां व्यक्तित्वस्य विकासो भवति।
(6) विज्ञान-विपयस्य शिक्षणम् अनेन सुगमतया भवति

**निरीक्षण-विधेः दोषाः** Demerites of Observation Method

(1) विद्यालये कुशल-अध्यापकानां संसाधनानाम् अभावेन अस्य परिपालनं सम्यक्-तया न भवति।
(2) सर्वेषु विषयेषु अयम् उपागमः(विधिः) उपयोगी न भवति।
(3) समयस्य दुरुपयोगः अनेन भवति।

**उपसंहारः** (Conclusion)

निरीक्षण-विधेः प्रयोगेण छात्रेषु निरीक्षणस्य प्रशिक्षणं सहजतया भवति। अयं वैज्ञानिको विधिः, यतः अस्मिन् विधौ छात्राः स्वयमेव क्रिया माध्यमेन ज्ञानार्जनं कुर्वन्ति। सामाजिकविज्ञान-व्यावसायिक-शिक्षाभ्यां विधिरयं महान् उपयोगी अस्ति। सुयोग्य-अध्यापकस्य, समयस्य स्थितेरावश्यकतानुसारं अनेन प्रयोगेण छात्रैः सफलतापूर्वकं ज्ञानं प्राप्स्यते।

## (घ) स्वाध्यायः, निर्देशनश्च
## Self Study and Guidance

"स्वाध्यायोऽध्येतव्यः" "स्वाध्यायान्माप्रमदः" "स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमिति" उपनिषत् प्रमाण-वाक्यम्। सु+अतीव आवृत्त्याध्ययनं स्वाध्यायः घञ्प्रत्ययेन सिद्धति। स्वस्य अध्यायः स्वाध्यायः, अत्र स्व शब्दः आत्मकुलपरम्परावाचकः। अध्याय शब्दश्शाखावच्छिन्न वेदपरः। अध्येतव्य इत्यस्य अधिपूर्वकेण् धातोरध्ययनमर्थः। तस्माच्चाऽऽर्थीभावानायां स्वाध्यायस्य धर्मत्वेन अध्ययनस्य करणत्वेन चाऽन्वयः। तथा च

अध्ययनेन गुरुमुखोच्चारणेन स्वाध्यायं स्वकुलपरम्परागतैक-शाखावच्छिन्नं वेदं भावयेत् प्राप्नुयादिति श्रुतशाब्दबोधः—स्वाध्यायः पठनस्य अन्तिमं रूपम्। स्वाध्यायेन मनोविनोदः, आनन्दश्च जायेते। छात्राः संस्कृत-भाषायाः पर्याप्त-ज्ञानप्राप्तेः अनन्तरं संस्कृत-साहित्य-स्वाध्यायेन निरन्तरं मनोविनोदम्, आनन्दानुभूतिं च लभेरन्। स्वाध्यायो नाम "अधीतविषयाणाम् पुनरावर्तनम्"। ब्रह्मचर्यदशायां ये अंशाः अधीताः तान् गृहस्थाश्रमे विविधकार्यभारैः स्मर्तुमवकाशो न भवेत्। अधीताः अंशाः वारं वारम् न पठिताश्चेत् ते अंशाः क्रमशः विस्मृति-पथादपगच्छेयुः। अतः ब्रह्मचर्याश्रमेऽधीता अंशाः गृहस्थाश्रमे वारं वारम् आवर्त्तनीयाः, नोचेत् कालक्रमेण अधीता-अंशाः विस्मृताः भवेयुः। एतत्तु सर्वेषां-विषये समानतयान्वेति।

परन्तु अद्यतनेषु दिनेषु केऽप्यस्मिन् विषये स्वीयमवधानं न प्रयच्छन्ति। इतराध्यापकानां स्थितिः अन्या, परन्तु संस्कृताध्यापकानां स्थितिः भिन्ना। संस्कृतभाषायां व्याकरण, न्याय, मीमांसा, साहित्यात्यादयो विषयाः भवन्ति। ते सर्वे विस्तारतया सन्ति संस्कृत वाङ्मये। तत्रापि विषयाधिक्यं, विषयकाठिन्यं, नूतनपदानि, विभक्तयः, वचनानि, लिङ्गानि, लकाराः, कारकाः बहवस्सन्ति। एतेषु अनेकास्संशयाः वारं वारम् आगच्छन्ति। पूर्व अधीताः एते विषयाः स्मृतौ नोपतिष्ठन्ति। अतः अध्यापकः झटिति कक्षायां वक्तुं न समर्थो भवति। यदा वक्तुम् असमर्थो भवति तदा छात्राः अपि तादृशस्य अध्यापकस्य गौरवं न प्रदर्शयन्ति। अतः अधीताःविषयाःवारं वारम् आवर्त्तनीयाः। एवं वारं वारम् आवर्त्तनं स्वाध्याय इत्युच्यते। एषः स्वाध्याय आजीवनान्तं करणीयः। "अनभ्यासे विषं विद्या" "यावज्जीवमधीते विप्रः" इति वचनमपि इदमेव दृढ़ीकरोति।

**(क) निर्देशनम्-निर्देशित-स्वाध्याय-प्रणाल्याः—(Supervised Study)**

निर्देशःकार्यादेशः, घञ् प्रत्ययेन सिद्ध्यति, "शासनोपरान्त-कथनेषुप्रयुङ्क्ते इतिनिर्देशः।" अमरकोषे निर्देश-शब्दस्यार्थः—निदेश, अपवादः, शासनम्, शृष्टिः, आज्ञा इति। अयं निर्देशित - स्वाध्यायः शिक्षणविधि-रुपेण प्रतिष्ठितोऽस्ति। येषु प्रेरणायोग्य-निर्देशनं एवंच आवश्यक-सहयोग-माध्यमेन प्रत्येकस्य छात्रस्य कृते स्वकीय-सम्पूर्ण-शैक्षिक-वृत्तिषु आत्मनिर्भरतायाः—कुशलतायाश्च उद्देश्यं निहितं भवति।

(क) छात्राणां समुचित-निर्देशनम्।
(ख) छात्राणां शिक्षणविधिना परिचय-प्रदानम्।
(ग) छात्राणां शैक्षिक-दृष्ट्या आत्मनिर्भरतायाः कुशलतायाश्च निर्माणम्।

**(ख) निर्देशित-स्वाध्यायस्य अवबोधनार्थमुदाहरणम्**

**उत्तिष्ठ वत्सेत्यमृतायमानं वाचो निशम्योत्थितमुत्थितः सन्।**
**ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम्।।**

राजा अमृतायमानम् वत्स! उत्तिष्ठ इति उत्थितम् वचः निशम्य उत्थितः सन् अग्रतः प्रस्रविणीं गां स्वां जननीमिव ददर्श(तं) सिंहं न (ददर्श)।

राज्ञो दिलीपस्योपरि पुष्पवृष्टिःभवति स्म, तस्मिन् समये अमृतमय्या मनुष्यस्य वाण्या नन्दिनी उवाच पुत्र! उत्तिष्ठ? इति दिलीपः उत्थितःसन् वात्सल्यभावात् प्रस्नविर्णी कामधेनोः आत्मजां नन्दिनीं स्नेहमयीमातृ सदृशीं ददर्श, मायारूपी सिंहः अदृश्यः अभूत्। छात्राणां शङ्कासमाधानाय गुरुः व्याख्यानस्य षडङ्गत्वं अध्यापयेत्–

**पदच्छेदः पदार्थोक्तिः संशयो वाक्ययोजना।**
**आक्षेपश्च समाधानं व्याख्यानं षड्विधं स्मृतम्।।**

भर्तृहरिणाप्युक्तम्–

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।**

शनैः शनैः क्लिष्टपदानामर्थज्ञापनाय व्याख्यानं कर्तव्यम्।

**कदा-कस्मिन् समये, कति-संख्या-प्रयोगक्रमः**

(1) प्रश्नः—कृषकः कदा जागर्ति?उत्तरम्– कृषकः प्रातःकाले जागर्ति।

(2) प्रश्नः—रामः कदा कार्यालयं गच्छति? उत्तरम्–रामः प्रातःनववादने कर्यालयं गच्छति।

(3) प्रश्नः—वेदाः कति सन्ति? उत्तरम्– वेदाः चत्वारः सन्ति।

(4) प्रश्नः—दशरथस्य कति पुत्राः आसन्? उत्तरम्– दशरथस्य चत्वारः पुत्राः आसन्।

(5) प्रश्नः—रामस्य कति भ्रातरः आसन्? उत्तरम्– रामस्य चत्वारः भ्रातरः आसन्।

(6) प्रश्नः—कति बालिकाः आगच्छन्ति? उत्तरम्– तिस्रः बालिकाः आगच्छन्ति।

(7) प्रश्नः—वृक्षात् कति फलानि पतन्ति? उत्तरम्– वृक्षात् चत्वारि फलानि पतन्ति।

## (ङ) साहित्यशिक्षणस्यपरम्परागत-आधुनिकविधीनां समीक्षात्मकं मूल्यांकनम्।
## 2.5 Critical Evaluation of the Traditional and Modern Methods of Teaching Sahitya Shastra

प्राचीनकाले शिक्षणं सर्वं मौखिक-पद्धत्या एव प्रचलितम् आसीत्। गुरूः उच्च-वर्गीयान् छात्रान् पाठयति स्म। उच्चवर्गीयाः छात्राः पुनः अन्यान्य-छात्रान् पाठयन्ति स्म। उच्चवर्गीयस्य छात्रस्य नाम आसीत् प्रिति-आचार्यः इति। संस्कृत-शिक्षणे अनेके विधयः सन्ति। एते विधयः द्विविधाः भवन्ति। (1) परम्परागतविधयः (2) आधुनिक-विधयः। पाठशालाविधिः, व्याकरणानुवादविधिः, पाठ्यपुस्तकविधिः इत्येते त्रयः परम्परागतविधिमध्ये अन्तर्भवन्ति। प्राचीनकाले शिक्षायाःमुख्योद्देश्यं भवति स्म पुरुषार्थ-चतुष्टयसम्पादनम्। अस्य विधेः मुख्य-आशयः अस्ति यत्–''आचार्य पूर्वरूपम्, अन्तेवास्युत्तररूपम्।'' उपनयन-संस्कारानन्तरंबटुःअन्तेवासीभूत्वा द्वादशवर्षम् यावद् गुरुकुले उषित्वा वेदवेदाङ्गादीनि पठति स्म। अत एव गुरुकुलविधिरिति प्रसिद्धा गता। अस्यैव विधेः पण्डितविधिः, व्याकरणविधिः, प्राचीनविधिः, इति नामानि सन्ति। अयं विधिः प्राचीन-भारतीय-शिक्षा-प्रणाल्याःप्रतिनिधिरूपो

वर्तते। पाठशालासु, आश्रमेषु, मठेषु, गुरूकुलेषु विद्यापीठेषु च अस्या पद्धतेः उपयोगः विद्यते। अध्यापकस्य प्राचीनकालात् एव ईश्वरस्य प्रतिकृति-रूपेण मान्यता वर्त्तते। यथा-

**गुरूर्ब्रह्मा गुरूर्विष्णुः गुरूर्देवोमहेश्वरः।**
**गुरूः साक्षात् परं ब्रह्म तस्मै श्री गुरूवे नमः।।**

शिक्षकाः राष्ट्रस्य भाग्यनिर्मातारः सन्ति। अस्यां पद्धत्यां अध्यापकः स्वयं श्लोकान् गद्यखण्डान् वा पठति। विनाऽनुवाचनं श्लोकानाम् गद्यखण्डानाञ्च अर्थः विशदी क्रियते। गुरूरेव सक्रियोभूत्वा सर्वान् अंशान् वदेत्। परन्तु अद्यतनेषु दिनेषु अद्यतनीयस्य पाठ्यक्रमस्य कृते एषा पारम्परिक-पद्धतिः नोपयुक्ता भवेत्।

**(क) गद्यशिक्षणे आधुनिकी पद्धतिः**

एषा पद्धतिः हर्बार्ट पञ्चपद्या अनुगुणं भवति। आदौ पूर्व-ज्ञातमाश्रित्य प्रस्तावना क्रियते तदनन्तरं आदर्शवाचनम् अनुवाचनम् त्रुटिसंशोधनञ्च भवेयुः। पाठप्रवर्धने छात्रक्रियाणाञ्च प्रामुख्यं भवेत्। अत्र प्रश्नोत्तर-विधिः आश्रीयते। अद्यतने काले प्रश्नाः अध्यापकेन पृष्यश्चेत् समाधानानि छात्राः वदेयुः। एवं रीत्या प्रचलति तदनन्तरं सार कथनम्, मौनवाचनम्, पुनरावृत्ति-प्रश्नाः, गृहकार्यम् इत्यादीनां सोपानानां कृते अवकाशः प्रदीयते। पद्धतिरेषा मनोवैज्ञानिकी, छात्राः सदा सक्रिया भवेयुः। अधीतेंऽशे झटिति अधिकारं सम्पादयेयुः। पद्धतिरेषा भावग्रहण-भावप्रकटयोः ज्ञानसम्पादनं कुरूते।

**(ख) गद्यशिक्षणे काठिन्यनिवारणस्य प्रविधयः**

**(1) वस्तुं प्रदर्श्य-** इदं पुस्तकम्, इदं पुष्पम्, इत्यादीनाम् अर्थस्पर्ष्टी करणम्।

**(2) चित्रं प्रदर्श्य-** प्राथमिककक्षासु चित्रप्रदर्शनमाध्यमेन अवबोधः सुगमतया भवति।

**(3) प्रतिकृतिःमाध्यमेन-**शिक्षणकार्यं सफलं कर्तुं शक्नोति।

**(4) रेखाचित्रप्रविधिः—**अस्मिन् प्रविधौ शिक्षकः कक्षायां श्यामपट्टस्योपरि शुधाखण्डेन रेखाचित्राणां चित्रणं कृत्वा छात्रान् सम्यक् तया अवबोधयितुं शक्यते।

**(5) अनुवादविधिः—**मातृभाषायां अनुवादं कृत्वा अर्थबोधः भवति।

**(6) प्रश्नोत्तरप्रविधिः—** खण्डान्वयविधिमाध्यमेन अर्थं स्पष्टं कर्तुं शक्नोति।

**(7) उदाहरणप्रविधिः—**उदाहरणं दत्वा शिक्षकः छात्रान् अवबोधयति।

**(8) दन्तकथाप्रविधिः,**

**(9) अर्थकथनप्रविधिः,**

**(10) पर्यायकथनप्रविधिः,**

**(11) विलोमकथनप्रविधिः,**

**(12) अभिनयप्रविधिः,**

**(13) सन्धिविच्छेदप्रविधिः,**

**( 14 ) समासविग्रहप्रविधिः,**

**( 15 ) व्याख्याप्रविधिः,**

**( 16 ) व्युत्पत्तिप्रविधिः**, यथा-

कृतयुगं त्रेतायुगं द्वापरयुगं कलियुगञ्चेति चत्वारि युगानि। चतुर्णां युगानां समूहः एव महायुगम्। एकसप्तति महायुगानाम् एकं मन्वतरम्। चतुर्दशमन्वन्तराणां समूहः कल्पः। एकःकल्प एव ब्रह्मणः एकं दिनं मन्यते। ब्रह्मणः आयुः शतं वर्षाणि।

(1) प्रश्नः—कस्य आयुः शतं वर्षाणि? उत्तरम्- ब्रह्मणः।

(2) प्रश्नः—कल्पः केषां समूहः? उत्तरम्-चतुर्दशमन्वन्तराणां समूहः कल्पः।

(3) प्रश्नः—महायुगं केषां समूहः? उत्तरम्-चतुर्णां युगानां समूहः एकं महायुगम्।

(4) प्रश्नः—मन्वन्तरे कति महायुगानि? उत्तरम्-एक सप्ततिः।

(5) प्रश्नः—ब्रह्मणस्य आयुः कति वर्षाणि? उत्तरम्- शतं वर्षाणि।

(6) प्रश्नः—ब्रह्मणः एकं दिनम्? उत्तरम्-एकः कल्प एव ब्रह्मणः एकं दिनं मन्यते।

**( ग ) पद्यशिक्षणे आधुनिकी पद्धति**

पूर्वश्लोकगताः प्रश्नाः एव अनन्तरं विद्यमानानां श्लोकानां प्रस्तावना प्रश्नाः भवेयुः। मुक्तकश्लोकानां नीतिश्लोकानाञ्च प्रतिवारं प्रस्तावना प्रश्ना:आलोच्य लेखनीयाः। प्रस्तावना गतैः प्रश्नैः यज्ज्ञानं सम्पाद्यते तज् ज्ञानं पाठनीय पाठ्यांशेन सह योजनीयम्। विषय-प्रस्तुतीकरणस्य समनन्तरं शिक्षकः पाठ्यमानस्य श्लोकस्य आदर्शवाचनं कुर्यात्। श्लोक-अवगाहन पूर्वकं आदर्शवाचनं कुर्यादध्यापकः। तेन आदर्शवाचनेन छात्राः स्थूलार्थं जानीयुः। श्लोके विद्यमानानि नूतनपदानि पाठप्रवन्धने विविधोदाहरणान्युपयुज्य छात्रेभ्यः ज्ञानं प्रदेयम्। तदनन्तरं द्वित्रैः छात्रैः अनुवाचनं कारयेत् अध्यापकः। अनेन अनुवाचनेन छात्रेषु पठनकौशलं सम्पाद्यते। छात्रानुवाचने त्रुटयः सम्भवेयुः ताः इतर छात्राणां साहाय्येन श्यामफलकसाहाय्येन वा निवारयेदध्यापकः। आदर्शानुवाचनयोः समाप्त्यनन्तरं श्लोकस्य भावं ईषत् सम्पादयेयुः। पाठ-प्रवर्धने छात्रक्रियाणामपि प्रामुख्यं प्रदीयते श्लोक पठने प्रायः प्रत्यक्ष-पद्धतिराश्रिता भवेत्। विविध-दृश्य-श्रव्य-साधनान्युपयुज्यन्तेऽत्र। पाठ- प्रवर्धन-समये ज्ञानाय मध्ये-मध्ये मूल्याङ्कनमपि भवेत्। निम्न-कक्षासु सार-कथनम् उच्चकक्षासु सार निष्कासनच्च स्यात्। मौनवाचनान्तरं पठिते श्लोके पुनरावृत्ति-प्रश्नाः पृष्टाः स्युः। ज्ञातांशस्य दृढ़ीकरणाय नूतनज्ञान-सम्पादनाय च गृहकार्यं देयात्। उन्मुखीकरणम्, प्रदर्शनम्, अमूर्तीकरणम्,, सामान्यीकरणम्, अनुप्रयोग इत्यादीनां पञ्चसोपानानां कृते अवकाशः प्रदेयः। यथा महाभारतात् उद्धृतः—

**आचार्यात्पादमादत्ते पादं शिष्यं स्वमेधया।**
**कालेन पादमादत्ते पादं सब्रह्मचारिभिः।।**

**अन्वयः**—शिष्यः पादम् आचार्यात् आदत्ते पादं स्वमेधया आदत्ते, पादं कालेन आदत्ते, पादं च सब्रह्मचारिभिः आदत्ते।

(1) कः आचार्यात् पादम् आदत्ते? शिष्यः।

(2) शिष्यः चतुर्थं पादं कैः शिक्षते? शिष्यः चतुर्थं पादं सहाध्यायिभिः शिक्षते।

(3) कालेन इति पदस्य कः अर्थः? कालक्रमेण।

(4) स्वमेधया इति पदे का विभक्तिः? तृतीया विभक्तिः।




**कीदृश शब्दस्य प्रयोगः विशेषणसम्बन्धि-प्रश्ने**

(1) प्रश्नः—हरिश्चन्द्रः कीदृशःपुरूषः असीत्?उत्तरम्-हरिश्चन्द्रः सत्यवादी आसीत्।

(2) प्रश्नः—फलं कीदृशम् अस्ति? उत्तरम्- फलं मधुरम् अस्ति।

(3) प्रश्नः—गंगा कीदृशी नदी अस्ति? उत्तरम्- गंगा पवित्रा नदी अस्ति।

**(घ) समीक्षात्मकं मूल्याङ्कनम्**

| पारम्परिकविधयः | आधुनिकविधयः |
|---|---|
| अध्यापकः सक्रियाः छात्राश्च निष्क्रियाः भवन्ति स्म। | छात्राः सक्रियाः भवन्ति, प्रयोगान् कुर्वन्ति। |
| प्रारम्भे शब्दरूपं, धातुरूपं, समासचक्रं, अमरकोशः इत्यादीनां कण्ठस्थीकरणस्य महत्त्वं भवति स्म। | अक्षरक्रीडा-पदक्रीडा-वाक्यक्रीडा-माध्यमेन अभ्यास-प्रयोगेन च शिक्षणम्। |
| अध्यापनकाले प्रश्नोत्तरं मूल्यांकनं च न भवति स्म। | अध्यापनकाले प्रश्नोत्तरं मूल्यांकनं च भवति। |

contd......

| संस्कृते: संरक्षणाय साहित्यस्य अनुसंधानाय च उपयोगी मन्यते। | सम्पूर्णात् अशं प्रति गच्छति, मनोवैज्ञानिक सिद्धान्तानामनुसरणंकरोति। |
|---|---|
| अध्यापनकाले मूल्याङ्कनं न भवति स्म। | अध्यापनकाले मूल्याङ्कनं भवति। |
| गुरुशिष्ययोर्मध्ये मधुर:सम्बन्धो भवति स्म। | छात्रेषु लेखन–पठन–श्रवण–भाषण कौशल-स्य विकास:। |
| स्वाध्यायस्य अभ्यासो भवति स्म। | अक्षरक्रीडा, पदक्रीडादि माध्यमेन अभ्यासस्य प्रयोगस्य वा शिक्षणम्। |
| छात्रेषुमौलिकचिन्तनस्यतर्कशक्ते:निरीक्षण-शक्तेश्च विकासो भवति स्म। | छात्राणां व्यवहारे परिवर्तनं भवति। प्रश्नोत्तरस्य अनिवार्यता आवश्यकी भवति। |
| विषयस्य विस्तृतं ज्ञानं भवति स्म। | वस्तु–शब्दयो: सम्बन्ध: प्रत्यक्षो भवति। |
| कण्ठस्थीकरणस्य प्रामुख्यं भवति स्म। | कण्ठस्थीकरणस्य आवश्यकता एव न भवति। |
| नैतिक–आध्यात्मिक–मूल्यानां विकासाय महत्त्वं प्रदीयते। | छात्राणां भाषणशक्ते: विचारशक्तेश्च विकास:। |
| अभ्यासस्य स्मरणशक्तेश्च अधिकं प्राधान्यं प्रदीयते। | अन्वेषण–व्यावहारिक–प्रयोगस्य प्राधान्यं भवति। |
| बालकस्य मानसिक–क्रियाशीलताया: वृद्धिर्भवति स्म | छात्राणां पठनेरुचि:, योग्यता, अवधानम् इत्यादय: गुणा: वर्धिता। |
| शब्दानां संरचनया परिचयो भवति स्म। | अध्यापक: छात्रान् प्रश्नान् पृच्छति छात्राश्च उत्तराणि दास्यन्ति। |

卐 卐 卐

# 20

# पाठ्ययोजना

# Lesson Plan

### (क) अधोलिखितानां पाठ्ययोजना

3.1 Lesson Plan of the following

Prose, Poetry, Rhetoric & Metre-गद्य, पद्य, छन्द, अलंकार, गद्य Prose

पाठ्ययोजना (107-120) पृष्ठे पश्यन्तु।

1. विद्यालयस्यनाम-
2. दिनांक:—
3. अवधि:—
4. अन्तरम्
5. विषय:— पद्य, छन्द, अलंकार शिक्षणम्।
6. छात्राध्यापकस्यनाम-
7. कक्षा- दशमी
8. छात्रसंख्या-
9. वासर:—
10. प्रकरणम्-परोपकार:
11. पाठ्यविषय:—
12. छात्राणांमध्यायु:

**सामान्योद्देश्यानि**

1. छात्रेषु संस्कृतकाव्यं प्रति अनुरागोत्पादनम्।
2. छात्राणां काव्यगतसौन्दर्यानुभुत्यै अभिप्रेरणम्।
3. गति-यति-लय-भावाभिनयपुरस्सरं श्लोकपठने दक्षतोत्पादनम्।
4. पद्यगतसौन्दर्यास्वादने क्षमतोत्पादनम्।
5. रसानुभूते: सम्पादनम्।
6. छन्दस: सम्बद्ध-ज्ञान-सम्पादनम्।
7. पद्य सम्बद्ध कविमनोगतभावाविष्करणम्।
8. पद्यगत-शिल्प-ज्ञानात्मकं सम्पादनम्।
9. रसालंकार-ध्वनि-ज्ञानसम्पादनम्।

10. सर्जनात्मकशक्तेः संवर्धनम्।
11. संस्कृतशिक्षणप्रक्रियया विश्वबन्धुत्वभवनायाः विकसनम्।

**विशिष्टोद्देश्यानि**

1. छात्राणां कृते परोपकारस्य महत्त्वज्ञापनम्।
2. छात्रेषु सुभाषितेन परोपकारस्य प्रवृत्तिसमुत्पादनम्।
3. छात्राणां संस्कृतपद्यस्य अर्थग्रहणक्षमतायाः विकसनम्।

**सहायकोपकरणानि**–श्यामफलकम्, सुधाखण्डाः, मार्जनी, संकेतयष्टिका, आकुञ्चन-श्यामपुलकम्, चित्राणि।

**पूर्वज्ञानम्**–छात्रैःपरोपकारविषये स्वमातृभाषायां पूर्वं पठितम्।

1. अध्यापकः—परोपकाराय के फलन्ति? छात्राः—परोपकाराय वृक्षाः फलन्ति।
2. अध्यापकः—नद्यः केषाम् उपकाराय वहन्ति? छात्राः—नद्यः परेषाम् उपकाराय वहन्ति।
3. परोपकाराय के दुहन्ति? परोपकाराय गावः दुहन्ति।
4. परोपकारार्थमेव किमस्ति? इदं शरीरं परोपकारार्थमेव अस्ति।
5. परोपकारस्य महत्त्वं किम्? समस्यात्मकोऽयं प्रश्नः। (छात्राः किञ्चिद् वदन्ति)

**प्रस्तावनायाः कृते श्लोकः**

**परोपकाराय फलन्ति वृक्षाः, परोपकाराय वहन्ति नद्यः।**
**परोपकाराय दुहन्ति गावः, परोपकारार्थमिदं शरीरम्।।**

**उद्देश्यकथनम्**–अद्य वयं परोपकारमहत्त्वस्य विषये पठिष्यामः।

**प्रस्तुतिकरणम्**–

**'छायासुप्तमृगः शुकुन्तनिवहैर्विष्वग्विलुप्तच्छदः।**
**कीटैरावृतकोटरःकपिकुलैः स्कन्धेकृतप्रश्रयः।।**
**विश्रब्धं मधुपैर्निपीतकुसुमः श्लाधयःस एव द्रुमः।**
**सर्वाङ्गैरुपकारकश्च सुखदो भूभारभूतोऽपरः।।**

**आदर्शवाचनम्**–छात्राध्यापकः उचितस्वरेण, भावस्फुटीकरणपूर्वकं गति-यति-लयानुसारेण शार्दूलविक्रीडितवृत्तानुगुणेन श्लोकस्योच्चारणं करोति। छात्राःसावधानं शृण्वन्ति।

**अनुवाचनम्**–छात्राध्यापकः छात्रान् क्रमशः पद्यस्य अनुवाचनाय निर्दिशति। छात्राः तथैव पठन्ति। अशुद्धिसंशोधनम्–छात्राध्यापकः अनुवाचनसमये छात्राणामुच्चारणे अनुभूतत्रुटिं छात्राणां श्यामपट्टस्य च साहाय्येन दूरीकरोति।

**काठिन्यनिवारणं विस्तृतव्याख्या च**–छात्राध्यापकःश्लोके छात्रदृष्ट्या जटिलान् दुर्बोधान् शब्दान् विभिन्नैः प्रविधिभिः स्पष्टयति।

1. शकुन्तनिवहैः–खगवृन्दैः–समासविग्रहेण (षष्ठीतत्पुरुषः) शकुन्तानाम्–पक्षिणाम्, निवहैः–समूहैः।
2. विष्वक्–सम्पूर्णः–अर्थावबोधने–सर्वतः, सम्पूर्ण, परितः।
3. विलुप्तछदः–आवृतपर्णः–समासविग्रहेण–विलुप्ताःछदाःयस्य सः विलुप्ता–आवृताः छदाः–पर्णाः यस्य वृक्षस्य।
4. कपिकुलैः–वानरयूथैः–चित्रेण–अयं कपीनां समूहैः आवृतः वृक्षः।
5. स्कन्धे–शाखामूले–चित्रेण–वृक्षस्य कस्मिन् भागे वानराः उपविशन्ति?
6. प्रश्रयः–आश्रयः–प्रश्नोत्तरेण–वानराणां प्रश्रयः कः?
7. मधुपैः–भ्रमरैः–समासविग्रहेण–मधु पिबन्ति ये ते मधुपाःतैः।
8. सुखदः–सुखदायकः–व्युत्पत्तिमाध्यमेन–सुखं ददातिऽसुखदः, दुखं ददतिऽदुखदः, जलं ददतिऽजलदः।
9. भूतोऽपरः–अन्योऽस्ति–व्युत्पत्ति–माध्यमेन–भूतःअपरः, भूक्तऽभूतः, मृक्तऽमृतः, धृक्त धृतः।
10. श्लाध्यः–प्रशंसनीयः–विलोमेन–अप्रशंसनीयः–इत्यस्य विलोमः कः?

**पाठप्रवर्धनम्**–खण्डान्वयविधिना चित्रमाध्यमेन च।

**पाठोन्मुखीकरणम्**–प्रश्नोत्तरैः पद्यस्य तात्पर्यबोधनम्।

1. अध्यापकः–छायायां कः सुप्तः? छात्रः छायायां मृगः सुप्तः।
2. अध्यापकः–मृगः कस्य छायायां सुप्तः? छात्रः–मृगः वृक्षस्य छायायां सुप्तः।
3. अध्यापकः–शकुन्तनिवहैः के विलुप्ताः? छात्रः–शकुन्तनिवहैःछदाः विलुप्ताः।
4. अध्यापकः–कोटरः कैः आवृत्तः? छात्रः–कोटरः कीटैः आवृत्तः।
5. अध्यापकः–कपिकुलेः प्रश्रयः कुत्र कृतः? छात्रः–कपिकुलेः प्रश्रयः स्कन्धे कृतः?
6. अध्यापकः–विश्रब्धं कुसुमं केः निपीतम्? छात्रः–विश्रब्धं कुसुमं मधुपैःनिपीतम्।
7. अध्यापकः–कस्य कुसुमं मधुपैः निपीतम्? छात्रः–वृक्षस्य कुसुमं मधुपैः निपीतम्।
8. अध्यापकः–श्लाध्यः कोऽस्ति? छात्रः–सैव द्रुमः श्लाध्योऽस्ति, यः परोपकारं करोति।
9. अध्यापकः–सः द्रुमःसर्वाङ्गैः कीदृशोऽस्ति? छात्रः–सःद्रुमःसर्वाङ्गैःउपकारकः सुखदश्चाऽस्ति।
10. अध्यापकः–भूभारभूतःकोऽस्ति? छात्रः–अपरः शुष्कः वृक्षः भूभारभूतोऽस्ति।

**सारकथनम्**–संसारेऽस्मिन् परोपकारःएव एतादृशः गुणो विद्यते, येन मनुष्येषु जीवेषु वा सुखं वर्धते। समाजसेवायाःभावना परदुःखसहानुभूतिश्च परोपकारःएव भवति। प्रकृतिरपि परोपकारमेव शिक्षयति। यः द्रुमः परोपकारी सुखदश्चास्ति सः एव प्रसंशनीयःभवति। एकस्य वृक्षस्य छायायां मृगाः शयनं कुर्वन्ति। तस्मिननेव वृक्षे बहवः खगाः सुखेन निवसन्ति। कोटराःअपि कीटानाम् आवासस्थानमस्ति। वानराः तस्य शाखासु वसन्ति क्रीडन्ति च। भ्रमराः अपि तस्य वृक्षस्य एव कुसुमानां रसं पिबन्ति। एतादृशःवृक्षः सर्वेषां कृते सुखदायकःउपकारकश्च अस्ति,

अतः तस्यैव जीवनं धन्यमस्ति। अपरःशुष्कःनिरुपकारकःवृक्षः भूमौ भार एव अस्ति। जीवनस्य साफल्यं तु परोपकारेणैव अस्ति।

**पुनःसस्वरवाचनम्**—छात्राध्यापकः कक्ष्यायां काव्यमयवातावरणाय पुनर्वाचनं करोति।

**पुनरावृत्तिप्रश्नाः**—तात्पर्यज्ञानेन संकलनयोग्यतोत्पादनम्।

**गृहकार्यम्**-ज्ञातांशस्य दृढीकरणपूर्वकं विस्तार-सम्पादनम्। समग्रस्य सारस्य लेखनाभिव्यक्तिश्च रचनाविन्यासोत्पादनम्। 1. **'परोपकारस्य महत्त्वम्'** इति विषयमधिकृत्य लघुनिबन्धमेकं लिखन्तु।

## (ख) ज्ञान-दक्षतायाश्च सम्पादने पाठ्ययोजनायाः महत्त्वम्।

## 3.2 Inclusion of Knowledge, Skill and Appreciation in Lesson Plan

निश्चितलक्ष्यस्य प्राप्तये, निश्चितानामुद्देश्यानां साधनाय कार्यप्रणाली सुनिश्चिता स्यात्। एषैव 'योजना' इति कथ्यते। गृहनिर्माणात् पूर्वं यथा योजना निर्मीयते, तथा तदनुसारं कार्यं क्रियते तथैव अध्यापकेन कक्षायां पाठस्य बोधनात् पूर्वं बोधनकार्यस्य योजना निर्मेया भवति। एषा योजना विषयानुगुणं, छात्राणां स्तरानुसारञ्च स्यात्। अध्याप्य विषयाणामपि त्रिधा विभागः सिध्यति। यथा:—

**1. ज्ञानपाठेः**—नूतनशब्दज्ञानम्, गद्यपाठः, व्याकरणं, रचना, अनुवादः, इत्यादयः।

**2. कौशलपाठे :**—उच्चारणं, मौखिकनिबन्धः, भाषणं, दृष्टलेखनं श्रुतलेखनं, वाचनम् इत्यादयः।

**3. सौन्दर्यपाठेः**—पद्यपाठः, वर्णनं, नाटकम् इत्यादयः।

### पाठयोजनायाः अर्थः, परिभाषाश्च

कक्षाप्रवेशात् प्राक् पूर्वपाठसम्बद्धतथ्यानां क्रमशःएकत्रीकरणम् एव पाठयोजनायाः सामान्यप्रयोजनं भवति। पाठयोजना नाम पाठस्य तादृशसन्नाहःयत्र अध्यापकःकक्षायां पाठं विषयवस्तु वा छात्राणां पुरतः केन क्रमेण, केन विधिना, कैः सहायकसाधनैः कियति काले उपस्थापयेत् इति निर्धारयति। बॉसिंग (Bossing) महोदयानुसारं "शिक्षणोद्देश्यानि ज्ञातुं निश्चिते समये शिक्षकः याः क्रियाः नियोजयति, तासां क्रियाणां वर्णनरूपमेव पाठयोजना इत्युच्यते।"

बिनिंग् तथा बिनिंग् (Bining &Bining) महोदयौ लिखतः—"दैनिकपाठयोजनायाः निर्माणे उद्देश्यानां परिभाषीकरणं, पाठ्यवस्तूनां चयनं, व्यवस्थीकरणं, विधानां प्रस्तुतीकरण-निर्णयश्च प्रमुखाः अंशाः भवन्ति।"उपर्युक्तपरिभाषाभिः इदं स्पष्टं भवति यत् वैज्ञानिकरुपेण या क्रमबद्धशिक्षणयोजना शिक्षणात् प्राक् सज्जीक्रियते सा पाठयोजना इति उच्यते।

### पाठयोजनायाःउद्देश्यानि: (Objectives of Lesson plan)

1. समयानुसारं पाठनीयस्य विषयस्य निर्धारणम्।
2. शिक्षणोपकरणानां, दृश्यश्रव्योपकरणानाञ्च सञ्चयः।

3. पाठनीयविषये सामान्य अंशानां, विशिष्ट अंशानाञ्च विवेचनम्।
4. मूल्याङ्कनप्रविधीनामुपयोगः।
5. विभिन्नानामंशानां पाठनाय अपेक्षितानां पद्धतीनां, शिक्षणयुक्तीनाञ्च निर्णयः।
6. छात्राणां वौद्धिकस्तरस्य उन्नयनम्।
7. पाठ्यक्रमे सक्रियतासम्पादनम्।
8. विविधपद्धत्यनुगुणं विषयाणां प्रस्तुतिकरणम्।
9. अध्यापनसमये छात्रप्रतिक्रियाणाम् अवगमनम्।
10. छात्राणां नूतनज्ञानार्जने साहाय्यम्।
11. शिक्षणकार्यक्रमेमनोवैज्ञानिकोद्देश्यानां पूर्ति।
12. शिक्षकस्य शिक्षणधारायाःव्यवस्थीकरणम्।
13. कक्षायां छात्राणां ज्ञानार्जनक्षमतानाम् अभिज्ञानम्।

एतानि उद्देश्यानि मनसि निधाय पाठयोजनायाः निर्माणं कर्तव्यम्। प्रशिक्षणार्थिनः छात्राध्यापकाः विस्तृतपाठयोजनां निर्मान्ति। अनुभवशालिनः अध्यापकास्तु संक्षिप्तां योजनां लिखन्ति।

**(ग) पाठयोजनायाः आवश्यकताः महत्त्वञ्च।**

Needs and Importance of Lesson Plan

पाठयोजना किञ्चन सर्जनात्मकं कार्यं विद्यते। केषाञ्चन विदुषां विचारे इयं मनोवैज्ञानिक-सम्प्रत्ययानां कौशलानां च विकासः अपि भवति। संक्षिप्तरूपेणपाठयोजनायाः आवश्यकतामहत्त्वयोः विषये एतानि कारकाणि (Factors) महत्त्वपूणानि वर्तन्ते–

1. कक्षायां शिक्षणात् प्राक् शिक्षणे प्रयोक्ष्यमाणानां सहायकसाधनानां विषये पाठयोजना शिक्षकं पूर्णतया बोधयति।
2. बोधनालक्ष्याणां विषये पाठयोजना सदवगाहनं कल्पयति।
3. पाठ्यांशान् क्रमपद्धतौ बोधनाय सहकरोति।
4. छात्राणां पूर्वज्ञानेन सह नूतनज्ञानं योजयति।
5. बोधनोपकरणानि, पद्धतीः, विधानश्च पाठ्यांशे प्रावेशयितुम् उपकरोति।
6. उपाध्यायः बोधनाविषये एव स्थित्वा क्रमपद्धतौ बोधनाय सहायं करोति।
7. छात्राणां प्रवर्तनाः नियन्त्रयति।
8. छात्राणां वैयक्तिकभेदान् आधारीकृत्य कक्ष्याबोधनकृत्यानि व्यवस्थीकरोति।
9. पाठयोजना शिक्षणक्रियाणाम् अधिगमस्वरूपैः सम्बन्धं स्थापयति।
10. पाठयोजना पाठस्य विभिन्नस्तरेषु क्रियासु च सम्बन्धं स्थापयति।
11. उपाध्यायस्य तथा छात्राणां कल्पनाशक्तिं वर्धयति।
12. बोधने छात्राध्यापकानाम् आत्मविश्वासं द्रढयति।
13. पाठयोजना विभिन्नविषयवस्तूनां मध्ये सम्बनधं स्थापयति। एतेन अध्यापकः प्रतिदिनं पाठ्यमानपाठस्य परस्परसम्बन्धं कल्पयित्वा पाठयति।

卐 卐 卐

# 21

# ज्योतिष-शास्त्र-शिक्षणम्ः

# Teaching of Jyotisha

## ज्योतिष-शास्त्रस्य परिचयः

ज्योतिष-शास्त्रं भारतीय-विद्यायाः महत्त्वपूर्णम् अङ्गमस्ति। 'ज्योतिषां सूर्यादि ग्रहाणां बोधकं शास्त्रम्' वर्तते। 'नभोमण्डले स्थित-ज्योतिः पिण्डसंवद्धाः विद्याः ज्योतिर्विद्याः' इति मन्यते।' उक्तं च-

**यथा शिखा मयूराणां नागानां मणयो यथा।**
**तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनिस्थितम्।**

ज्योतिषं ज्ञान(वेद) शरीरस्य नयनं वर्तते। नेत्राभावे शरीरस्य अपूर्णता व्यर्थता च भवति। इदं ज्योतिष-शास्त्रं कालविज्ञापकं शास्त्रम्। मुहूर्त्तं शोधयित्वा क्रियमाणा-यज्ञादिक्रिया- विशेषाः सत् फलाय कल्पन्ते। अतोऽस्य ज्यौतिष-शास्त्रस्य वेदाङ्गत्वं स्वीकृतम्। यथा-

**वेदाहि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।**
**तस्मादिदं काल विधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।।**
**चतुर्णामपि वेदानां पृथक्-पृथक् ज्योतिष-शास्त्रमासीत्।**

यथा-

(1) ऋग्वेदस्य ज्योतिषशास्त्रम्-आर्च ज्योतिषम्, षट्त्रिंशत्पद्यात्मकम्।

(2) यजुर्वेदस्य ज्योतिषशास्त्रम्-याजुष-ज्योतिषम्, ऊनचत्वारिंशत् पद्यात्मकम्।

(3) सामवेदस्य ज्योतिषशास्त्रम्-नोपलभ्यते।

(4) अथर्ववेदस्य ज्योतिषशास्त्रम्-आथर्वण ज्योतिषम्, द्विषष्ट्युत्तरशत पद्यात्मकम्।

एतेषां त्रयाणामपि ज्योतिषाणां प्रणेता लगधो नामाचार्यः। तत्र याजुषज्योतिषस्य प्रामाणिकं भाष्यद्वयमपि प्राप्यते। एकं सोमाकर विरचितम्, द्वितीयं सुधाकर द्विवेदी कृतम्। एतस्य ज्योतिषशास्त्रस्य वर्त्मत्रयं वर्तते। तदिदं शास्त्रं त्रिस्कन्धमुच्यते। तदुक्तम्-

**सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।**
**वेदस्यनिर्मलं चक्षुर्ज्योतिश्शास्त्रमकल्मषम्।।**

एतत्प्रवर्त्तका अष्टादश महर्षय:, ते च-

**सूर्य: पितामहो व्यासो वशिष्ठोऽत्रि: पराशर:,**
**कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिरा:।**
**लोमश:पौलिशश्चैव च्यवनो यवनो भृगु:,**
**शैनकोऽष्टादशश्चैते ज्योति:शास्त्रप्रर्वत्तका:।।**

आर्यभट्ट, वराहमिहिर, भास्कराचार्य, इत्यादिभि:पुरुषप्रणीतग्रन्थैश्च शास्त्रमिदं समृद्धं वर्त्तते। अत्र प्रश्नशकुनजातकताजिकमुहूर्त्तादि विषयकप्रतिपादका: ग्रन्था: अस्य शास्त्रस्य पोषका: एव।

(1) गणितफलितयो: विज्ञानस्य समन्वय: वर्त्तते।

(2) खगोल-ज्ञानस्य चर्चा वर्त्तते।

भारतीय-ज्योतिषशास्त्रे-

(1) स्कन्धत्रयं-"होरा, सिद्धान्त, संहिता वर्त्तते।"

(2) विराट स्कन्धपञ्च-"होरा, सिद्धान्त, संहिता, प्रश्न, शकुन" रूपं वर्त्तते।

एतेषां स्कन्धानां विश्लेषणेन इदानीं काले मनोविज्ञानं, जीवविज्ञानं, पदार्थविज्ञानं, रसायनविज्ञानं, चिकित्सा-शास्त्रम् इत्यादय: अस्मिन् स्कन्धत्रये अन्तर्भूता: भवन्ति। आदि-कालस्यान्ते ज्योतिषशास्त्रस्य 'गणित, सिद्धान्त, फलित' इति त्रयोभेदा: स्वतन्त्र-रूपेण प्रस्फुटिता: संजाता:। ग्रहाणां गति-स्थिति-अयनांश-पातादि गणितज्योतिषशास्त्रस्य एवंच शुभाशुभ-समयस्य निर्णय-विधायक: यज्ञ-यागादि-कार्यार्थं समयस्य स्थानस्य च निर्धारणं फलित-ज्योतिषशास्त्रस्य च विषयोऽस्ति।

**विराटपंचस्कन्धात्मकस्य विवेचनम्-**

**(क) होरा-(जातकशास्त्रम्)**-अस्य शब्दस्य उत्पत्ति: 'अहोरात्र'शब्द द्वारा भवति। आदौ अकारस्य अन्ते त्रकारस्य लोपे सति 'होरा' इति शब्द: आद्यन्तवर्णलोपाद्-घोराभवत्यहोरात्रदिति वराहमिहिरस्य वचनेन सिद्ध्यति। अस्मिन् शास्त्रे जन्मकुण्डलीयस्थ-द्वादशभावगत-ग्रहाणां स्थिति:, युति दृष्ट्यादीनां विस्तृतविवेचनं दृश्यते। मानवजीवनस्य सुख-दु:ख-इष्ट- अनिष्ट-उन्नति अवनति-भग्योदयानां चर्चा अस्मिन् स्कन्धे भवति।

**(ख) सिद्धान्तशास्त्रम्:**-अस्मिन् स्कन्धे गणितसिद्धान्तयो: प्रतिपादनं भवति। यथा-

(1) व्यक्त-अव्यक्त-गणितस्य प्रतिपादनम्।

(2) विविध-प्रश्नोत्तरविधि:।

(3) ग्रह-नक्षत्राणां स्थितिः।

(4) तुरीय-नालिकादि यन्त्राणां वर्णनम्।

(5) दिग्-देश-काल-ज्ञानस्य उपायाः।

(6) अक्षक्षेत्र-सम्बन्धि-अक्षज्या, लम्बजा, द्युज्या, कुज्या, तदधृति, समशंकु इत्यादीनां साधनम्।

(7) गणितस्य-सिद्धान्तः, तन्त्रः, करणम् इति त्रयो भेदाः सन्ति।

**(ग) संहिताशास्त्रम्**—संहितायाः स्कन्धे भूशोधनं, जलाशयनिर्माणम्, मांगलिक-कार्याणां षोडशसंस्कार मुहूर्तः, उल्कापातः, बृष्टिः, ग्रहाणां उदयास्त फलम्, ग्रहचारस्य फलम्, ग्रहण-फलम्, इत्यादीनां निरूपणं विस्तारपूर्वकं क्रियते। जीवनेन सम्बद्धाः सर्वेऽपि शुभाशुभ-लौकिक-विषयाः अस्यान्तर्गता सन्ति।

**(घ) प्रश्नशास्त्रम्**—इदं तत्काल-फलादेशात्मकं शास्त्रमस्ति। यत्र प्रश्नकर्तृणाम् उच्चारित-अक्षरोपरि-फलस्य प्रतिपादनं क्रियते। अस्मिन् शास्त्रे—

(1) प्रश्नाक्षर-सिद्धान्तः।

(2) प्रश्नलग्न-सिद्धान्तः।

(3) स्वरविज्ञान-सिद्धान्तः। इति त्रयाणां सन्निवेशो भवति। अस्मिन् शास्त्रे-चर्चा, चेष्टा, हाव-भाव इत्यादि माध्यमेन मनोगत-भावानां वैज्ञानिक-दृष्ट्या विश्लेषणं कृत्वा फलादेशः क्रियते।।

**(ङ) शकुनः (निमित्तशास्त्रम्)**

अस्य शास्त्रस्य विषयसीमायां प्रत्येक-कार्यस्य पूर्वं शुभाशुभयोः ज्ञान-प्राप्तिः मुख्यं लक्ष्यं वर्त्तते। तत्र पशुपक्षिमनुष्यादीनां हाव-भाव-चेष्टादिभिः प्राकृतिक- परिस्थितिवशेन च परीक्षणं शुभाशुभफलज्ञानाय भवति।

**(च) रमलशास्त्रम्**—अस्य शास्त्रस्य प्रचार-प्रसारस्तु वैदेशिक-संसर्गेन भारते भवति स्म। संस्कृतभाषायां 'रमलनवरत्नम्' नाम्ना ग्रन्थे पाशानिर्माणविधिः उपलभ्यते। यथा—

**वेदतत्त्वोपरिकृतं रम्लशास्त्रं च सूरभिः।**
**तेषां भेदाःषोडशैव न्यूनाधिक्यं न जायते।।**

अर्थात्-अग्नि, वायु, जल, पृथ्वी इति चत्वारि तत्त्वानि रमलशास्त्रस्य विशिष्टता वर्त्तते। इति चतुष्ट्य तत्त्वाणां षोडषन् भेदाः कथ्यन्ते। अतः रमलस्य पाशे 16 षोडषाकृतिःकृतम्। रमलनवरत्नशास्त्रस्य मङ्गलाचरणे—

**नत्वाश्रीरमलाचार्यान् परमाद्यसुखाभिधैः।**
**उद्धृतं रमलाम्भोधेर्नवरत्नं सुशोभनम्।**

अर्थात् प्राचीन-रमलाचार्यान् प्रणम्य परमसुख नामक:ग्रन्थकर्ता रमलशास्त्रसमुद्रात् सुन्दरं नवरत्नं निष्कासितवान्। उक्तञ्च स्वग्रन्थे-

**यदा मुस्तरी कर्कटे वा कमाने**
**यदाचरमखोरा जमी वा समाने।**
**तदा ज्योतिषी क्या कहै क्या पढ़ेगा?**
**हुआ बालका बादशाही करेगा।।**

अत्र मुस्तरी (वृहस्पति) कर्कटे (कर्क राशि) कमाने (धनु) चशमखोर(शुक्र) बोधव्य:।

कवि रहीम: स्व-कवितायाम्-

**दृष्ट्वा तत्र विचित्रतां तरुलतां मैं था गया बाग में।**
**काचित्तत्र कुरङ्गशावनयना गुल तोड़ती थी खड़ी।।**

卐 卐 卐

# 22

# ज्योतिषशिक्षणस्य विधयः

# Methods of Teaching Jyotisha

## (क) आगमननिगमन विधिः

Inductive and Deductive Method

### (क) आगमनविधिः

प्रथमम् अध्यापकः अनेकानि उदाहरणानि उपस्थापयति। तेषामुदाहरणानां माध्यमेन नियमान् छात्रैः निष्काषयति। अर्थात् अयं विधिः'उदाहरणात् सिद्धान्तं प्रति' 'ज्ञातात् अज्ञातं प्रति' 'विशेषात्सामान्यं प्रति' 'स्थूलात्सूक्ष्मं प्रति' इत्यादीनि शिक्षण सूत्राण्यन्तर्निहितानि वर्त्तते। अस्मिन् विधौ वैज्ञानिक-मनोवैज्ञानिक गुणानां समावेशो विद्यते।अत्र उदाहरणानाम् औचित्ये एव पाठस्य सरलता सफलता च निर्भरं करोति। जोसफ लेण्डन् महोदयः प्रतिपादयति ''यदि छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वाऽस्माभिः प्रस्तूयन्ते, ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिरनुसर्यत इत्यर्थः''। प्रयोग प्रामाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रीयते। इयमेका मनोवैज्ञानिकी पद्धतिः। अनया पद्धत्या मनोवैज्ञानिक रीत्या ज्योतिष अध्यापयितुं शक्यते। लक्ष्यं प्रदर्श्य लक्षण-परिकल्पन्नाम आगमनम्। लोके लक्ष्यमेव प्रथमं गण्यम्। ''असत्येवर्त्मनि स्थित्वा ततः सत्यं समीहते'' इति भर्तृहरीणां कथनं चरितार्थत्वे-लक्ष्यं प्रथमं लक्षणं तदनुयायि इति फलति। छात्राणां पुरतः बहून्युदाहरणानि, तत्त्वानि, वस्तूनि वाऽस्माभिः प्रस्तूयन्ते। ततः परं नियमाश्च निश्चीयन्ते, तर्हि आगमनविधिः अनुसर्यत इत्यर्थः। प्रयोग प्रमाण्यमवलोक्य उदाहरणानां साहाय्येन सामान्यीकृतस्य नियमस्य निर्धारणमेव आगमनविधिरिति नाम्ना व्यवह्रीयते। तत्सम्बन्धिनि तत्त्वानि उदाहरणानि वा निरीक्ष्य, तुलनां वर्गीकरणं च विधाय स्वयमेव नियमानां निर्धारणं छात्राः कुर्युः। Induce इति आंग्लधातोः अंगीकरणम् तत् Induce ment इति व्यवह्रीयते। Induce ment माधयमेन या पद्धतिः प्रचलति सा आगमन पद्धतिः Inductive method, इति व्यवह्रीयते। समानधर्मसहितपदसमूहान् समानवर्गेषु वर्गीकृत्य छात्राणां साहाय्येन तानि श्यामफलके लेखापनीयानि।

## (ख) आगमनविधेःउदाहरणानि

### (1) दिक्शूलविचारस्तत्परिहारश्च-

### (1) उदाहरणम्

| दिनम् | दिशा | परिहारः |
|---|---|---|
| रविवासरे | पश्चिमायाम् | घृतम् |
| सोमवासरे | पूर्वस्याम्( अग्निकोणे) | पयः(दुग्धं/जलम्) |
| मंगलवासरे | उत्तरस्याम् | गुडः |
| बुधवासरे | उत्तरस्याम् (ऐशानकोणे) | तिलः |
| वृहस्पतिवासरे | दक्षिणस्याम् | दधि |
| शुक्रवासरे | पश्चिमायाम् (वायुकोणे) | यवः |
| शनिवासरे | पूर्वस्याम् | माष (उरीद) |

### (1) दिक्शूलविचारस्तत्परिहारश्च-

### (1) सिद्धान्तम्

**शनौ चन्द्रे त्यजेत्पूर्वां दक्षिणस्यां गुरौ बुधे।**
**रवौ-शुक्रे पश्चिमायां बुधे भौमे तथोत्तराम्।।**

शनौ पूर्वे चन्द्रेऽग्निकोणे, गुरौ याम्यां, बुधे नैर्ऋत्यां, सूर्ये प्रतीच्यां, शुक्रेवायुकोणे, उत्तरस्यां मंगले, बुधे ऐशान्यां बुधमन्दयोर्न गन्तव्यम्। दिक् शूलत्वात् गमनं निपिद्धम्। परिहारस्तु- रव्यादिवासरेषु क्रमेण घृतपयोगुडतिलदधियवमाषान्नं भुक्त्वा शूलदोषोपशान्तिं कृत्वा च गच्छेत्।

## (ग) आगमनविधेः सोपानानि

अत्र प्रमुखतया चत्वारि पदानि शिक्षणोपयोगीनि अनुसर्यन्ते। यथा-

**1. उदाहरण प्रस्तावः**—छात्राणां समक्षं समानोदाहरणानि प्रस्तूयात् शिक्षकः। छात्राः सावधानं उदाहरणानि श्रृण्वन्ति, पश्यन्ति, पठन्ति च।

**2. निरीक्षणम्**- प्रस्तुततत्त्वानां तुलनात्मकं निरीक्षणमेव द्वितीयं पदं भवति। प्रस्तुतोदाहरणे छात्राः विश्लिष्य विवेचयन्ति।

**3. नियमनिर्धारणम्**- तत्त्वानां निरीक्षणात्परं नियमपरिकल्पनन्नामेव तृतीयं पदम्। पूर्वोक्तान् शब्दान् विच्छिद्य नियमं परिकल्पयन्ति।

**4. परीक्षणम्**-निर्धारितस्य नियमस्य लक्ष्ये पुनः परीक्षणमेव चतुर्थ सोपानम्।

## (घ) आगमनपद्धत्याः गुणाः

1. छात्राः उदाहाणानि सिद्धान्तानि च स्वयं जानीयुः।
2. सिद्धान्त-निर्माणं परिभाषा-निर्माणं च स्वयं कुर्युः, अतः बहुकालपर्यन्तं विस्मर्तुमवकाशो नास्ति।

3. सूत्राणि परिभाषाश्च स्वयं निर्मिता इति हेतोः कण्ठस्थीकरणस्यावश्यकता नास्ति।
4. उदाहरणान्याधारीकृत्य व्याकरणाध्यापनं प्रचलेत्।
5. अनया व्याकरणाध्ययने छात्राः अभिरूचिं प्रदर्शयेयुः।
6. स्वयं कृते अधिकतया प्राधान्यं भवेत्।
7. सन्दर्भानुसारम् व्याकरणमधीयते।
8. पाठ्यपुस्तकानां साहाय्येन व्याकरणाध्ययनं भवति, अतः अध्ययने छात्राः भीता न भवेयुः।
9. ज्योतिषाध्ययनाय एषा सुलभा पद्धतिः।
10. लक्ष्यं प्रदर्श्य लक्षणं कल्प्यते अतः छात्राः रूचिं प्रदर्शयेयुः।
11. छात्राः अत्यन्तं सक्रियाः भवन्ति।

**( ङ ) आगमनपद्धत्यां विद्यमानाः दोषाः**

1. अध्यापकानां क्लेशः अधिकः भवेत् अस्यां पद्धत्याम्।
2. शास्त्रगतानि उदाहरणानि ज्ञातुमवकाशो नास्त्यस्याम्।
3. ज्योतिष शिक्षण-समयः बह्वः अपेक्षितः भवेदस्याम् पद्धत्याम्।
4. सम्बद्धोदाहरणानामनुस्मरणमपि क्लेशः भवेत् छात्राणाम्।

## ( च ) निगमनविधिः ( पद्धतिः )
## Deductive Method

**अर्थ**-लक्षणमनुलक्ष्यप्रदर्शनन्नाम निगमनविधिरिति। जोसफ लेण्डन् महोदयः स्पष्टयति-"शिक्षणं निगमनविधिद्वारा प्रथमं परिभाषा नियमो वा पाठ्यते। ततः सावधानमर्थ व्याख्याय, प्रयोगान् प्रदर्श्य तत्वानि स्पष्टीक्रियन्ते" इति। "अस्मिन् विधावध्यापकः प्रथमं नियमान् समुपस्थापयति। काचनोदाहरणानि प्रदर्श्य उक्तनियमान् लक्ष्ये समन्वेति"। लक्षणात् लक्ष्यं प्रति गच्छति निगमनविधिः। सिद्धिकथनं निगमनम्। नियमान् प्रस्तूय प्रयोगप्रदर्शनं निगमनं भवति। लक्षणमनुलक्ष्य प्रदर्शनन्नाम निगमनविधिरिति। वस्तुतः आगमन-निगमन- पद्धत्योर्मध्ये विरोधः न भवति। आगमनपद्धत्याः कृते निगमन पद्धतिः पूरका भवितुमर्हति। सूत्रं सम्पूर्णतयावगाहनपर्यन्तं आगमन-पद्धतिराश्रयणीया, तदनन्तरम् निगमन-पद्धतिः आश्रयणीया। निगमन पद्धतेः परम्परागत पद्धतिः: सूत्रपद्धतिः लक्षणपद्धतिरिति नामान्तराणि सन्ति। Deduce इति आंग्ल भाषायाः धातुः अस्य मूलम्। तेन Deductive method प्रचलन्ति। सूत्रमनुसृत्य लक्ष्यानुस्मरणम् इति अस्यार्थः भवति। विधिरयं सामान्याद्विशेषं प्रति, काल्पनिकात्सत्यं प्रति, स्थूलात्सूक्ष्मं प्रति, इत्यादीनि शिक्षण-सूत्रण्याश्रित्य वर्तते। उपरि निर्दिष्टानां समालोचनेनेदं स्पष्टं प्रतीयेत यत् निगमनन्नाम नियमानां, सूत्राणां, लक्षणानां वा प्रस्तावानन्तरं उदाहरणरूपेण प्रयोगप्रदर्शनमेवेति।

**( छ ) निगमनविधेः उदाहरणानि-**

(1) दिक्शूलविचारस्तत्परिहारश्च-

(1) सिद्धान्तम्

शनौ चन्द्रे त्यजेत्पूर्वां दक्षिणस्यां गुरौ बुधे।
रवौ-शुक्रे पश्चिमायां बुधे भौमे तथोत्तराम्।।

(शिशुबोधे)

शनौ पूर्वे चन्द्रेऽग्निकोणे, गुरौ याम्यां, बुधे नैर्ऋत्यां, सूर्ये प्रतीच्यां, शुक्रे वायुकोणे, उत्तरस्यां मंगले, बुधे ऐशान्यां बुधमन्दयोर्न गन्तव्यम्। दिक् शूलत्वात् गमनं निषिद्धम्। परिहारस्तु-रव्यादिवासरेषु क्रमेण घृतपयोगुडतिलदधियवमाषान्नं भुक्त्वा शूलदोषोपशान्तिं कृत्वा च गच्छेत्।

(1) उदाहरणम्–

| दिनम् | दिशा | परिहारः |
|---|---|---|
| रविवासरे | पश्चिमायाम् | घृतम् |
| सोमवासरे | पूर्वस्याम्( अग्निकोणे) | पयः(दुग्धं/जलम्) |
| मंगलवासरे | उत्तरस्याम् | गुडः |
| बुधवासरे | उत्तरस्याम् (ऐशान्कोणे) | तिलः |
| वृहस्पतिवासरे | दक्षिणस्याम् | दधि |
| शुक्रवासरे | पश्चिमायाम् (वायुकोणे) | यवः |
| शनिवासरे | पूर्वस्याम् | माषः (उरीद) |

**(ज) निगमनविधेस्सोपानानि**

अस्य विधेः प्रयोगः क्रमबद्धरूपेण कानिचन् सोपानान्याश्रित्य क्रियते। तत्रक्रमे अधोलिखितपदानि भवितुमर्हन्ति–

**1. नियमः**–छात्राणां पुरतः कस्यचित्नियमस्योपस्थापनं क्रियते। यथा- शिक्षकः इति नियममुपस्थापयति।

**2. स्पष्टीकरणम्**–उक्त नियमस्य सरलैः वाक्यैः स्पष्टतया प्रतिपादनमेव भवति।

**3. प्रयोगप्रदर्शनम्**–उक्त नियमस्य लक्ष्ये समन्वयः अत्र क्रियते। यथा- प्रकृतोदाहरणे शिक्षकः।

**4. पुनः परीक्षणम्**–पृथगुदाहरणं प्रस्तूय नियमस्य परीक्षणं विधीयते। यथा–व्यवहारे एषां शब्दानां योगे नियमः कथं प्रवर्तते इति दर्शयितुं शिक्षकः व्यावहारिक वाक्यानि उपस्थापयति।

**(झ) निगमनविधेःगुणाः**

1. अनया पद्धत्या स्पष्टतया व्याकरणमध्यापितुं शक्यते।
2. छात्राः अनया पद्धत्या ज्योतिषनियमान् ज्ञात्वा प्रयोगः कुर्वन्ति।
3. एषा मनोविज्ञाननियमविरूद्धा तथापि उच्चकोटौ विद्यमानाः बहवः ज्योतिषज्ञाः अनया पद्धत्या ज्योतिषामधीत्य प्रख्याता एव।

4. अनया पद्धत्या ज्योतिषामधीताश्छात्राः भाषागताशुद्धीः न्यूनं कुर्युः। अल्पं लिखतु वदतु वा तेषां लेखने पठने च दोषाः न स्युः।
5. संस्कृत भाषा व्यवहार भाषा नास्ति अतः अस्यां भाषायां विशिष्ट ज्ञानसम्पादनार्थं एषा पद्धतिरावश्यकी इति।
6. अध्यापकस्य कार्यं सरली करोति।
7. छात्राः सक्रियाः भवन्ति, अल्पीयसि काले ज्ञानं प्रापयन्ति।
8. स्मरणशक्तिः वर्धयति, अतः छात्राः नियमान् कण्ठस्थं कुर्वन्ति।

**(ञ) निगमनविधेः दोषाः**

1. पद्धतिरेषा अमनोवैज्ञानिकी।
2. अस्यां पद्धत्यां संज्ञा, परिभाषा, सूत्रणि च अत्यधिकानि भवन्ति, अतः एतेषां सर्वेषां कण्ठस्थीकरणम् वहुक्लेशकरमेव।
3. अनया पद्धत्या छात्राः ज्योतिषम् अध्येतुं अभिरूचिं न प्रदर्शयेयुः।
4. ज्योतिषाध्ययने छात्राः वहून क्लेशानुभवेयुः।
5. नीरसतामुत्पादयति।

**(ट) आगमननिगमनविधिः**

आगमनविधिः निगमनविधि, इति द्वावपि परस्परं विरूद्धमार्गे प्रचलतः। तथाऽपि एतौ परस्परं न्यूनताः पूरयतः। अत एव शिक्षाविद् एतयोरैक्यं वाञ्छन्ति। यतो हि आगमनविधिः नियमं निर्धार्यन्ते परीक्षणात्मकपदे निगमनविधिंवदेव कर्मं करोति। एवं निगमनविधिरपि उदाहरणानि प्रस्तूय समन्वयसोपाने आगमनविधिंवदेव कर्मं करोति। एवं परस्परं पूरकौ वर्तेते। अतः एतयो न्यूनताः तथैव दूरीकृता भवन्ति। यथा एतौ संयोजितौ संश्लिष्टौ वा भवेताम्। एतयोः सार्थकं संयोजनं शिक्षणे विशिष्य ज्योतिषाध्यापने लाभप्रदं भवेत्। वस्तुतः एतयोः पारस्परिकः सम्बन्धः तादृशः वर्तते, यथा आगमनेन विना निगमनं न भवति, निगमनेन विना आगमनं च न भवति। अतः एतौ संयोज्य ''आगमननिगमनविधि''इति नाम्नैव व्यवहरेत् प्रयोजयेच्च। यदि उपर्युक्तरीत्या संयुक्तविधिना शिक्षणं क्रियेत, तर्हि निस्संशयेन साफल्यम् अपि अवाप्येत। एतादृशमेव शिक्षणं व्यावहारिकं सत्यम्, वैज्ञानिकं च भवेत्। अतः अध्यापकाः अनेन संयुक्तविधिना ज्योतिषमध्यापयितुं शक्यन्ते। अनेन छात्राणां बौधिकविकासः, क्रियाशीलतायाः विकासः, स्थायि ज्ञानम् इति लाभाः भवन्ति।

## (ख) विश्लेषण-संश्लेषणविधिः

## Synthetic and Analytic Method

अयं विधिः''पूर्णादंशं प्रति'' **From whole to parts** ''विश्लेषणात् संश्लेषणं प्रति'' From Analysis to Synthesis इत्येषां सूत्राणां अनुकरणं करोति। आदौ विश्लेषणे समग्रस्य वस्तुनः अध्ययनं क्रियते ततः परम् एकैकस्य अवयवस्य। इदं सूत्रं ''पूर्णादंशं प्रति''इत्यस्य

विपरीतं भवति। अत्र प्रथमं विषयस्य विभिन्नाः अंशाः पृथक्-पृथक् पाठ्यन्ते, ततः तेषांमंशानां संश्लेषणेन समग्रंस्वरूपं बोध्यते। वाक्यरचनाः सन्धयः, समासाः, प्रकृतिप्रत्ययज्ञानमित्यादि विषयाणां बोधने अस्यसूत्रस्य उपयोगो निर्विवादः। अध्यापकः कक्षायाः यदा शिक्षणं करोति तदा सः सम्पूर्णस्य पाठस्य, वस्तुनः प्ररम्भति ततश्च तस्य पाठस्यविविधांशानां भागानां विश्लेषणं विवेचनं वा क्रियते। ज्योतिषकथापाठयोः कृते विधिरयम् उपयोगी अस्ति। अस्मिन् पृथक् पृथक् रूपेण उदाहरणानि छात्राणां समक्षे प्रस्तूयन्ते। यथा-ज्योतिषशिक्षणे सिद्धयोगस्य अवबोधनं कारयित्वा पृथक् पृथक् विवेचनं क्रियते।

**(क) विश्लेषण-संश्लेषणविधेः उदाहरणम्-**

**(2) सिद्धयोगस्य उदाहरणम्-**

| वार | शुक्र | शनि | रवि | सोम | मंगल | बुध | गुरु |
|---|---|---|---|---|---|---|---|
| तिथयः | 1 | 4 | 3 | 1 | 3 | 2 | 5 |
| " " | 6 | 9 | 8 | 6 | 8 | 7 | 10 |
| " " | 11 | 14 | 13 | 11 | 13 | 12 | 15 |

**सिद्धान्तम्**-शुक्रे नन्दा बुधे भद्रा शनौरिक्ता कुजे जया।

**गुरौ पूर्णा तिथिर्ज्ञेया सिद्धियोग उदाहृतः।।**
**जया रवौ च नन्दापि सोमे सिद्धिप्रदामताः।।**

अत्र **नन्दापदेन**-प्रतिपत, षष्ठी, एकादशी, **भद्रापदेन**-द्वितीया, सप्तमी, द्वादशी, **जयापदेन**-तृतीया, अष्टमी, त्रयोदशी, **रिक्तापदेन**-चतुर्थी, नवमी, चतुर्दशी, **पूर्णापदेन**-पञ्चमी, दशमी, पञ्चदशी, अमावास्या तिथयो बोध्याः।

**(ख) विश्लेषण-संश्लेषणात्मक विधेःगुणाः**

(1) पद्धतिरियम् मनोवैज्ञानिक-सिद्धान्तानामनुसरणं करोति।
(2) विशेष-असाधारणानां कठिनानां च चर्चायाः ज्ञानं कारयति।
(3) क्लिष्टपदानाम्, अंशानां, विषयाणाञ्च स्पष्टीकरणे सहायको भवति।
(4) छात्राःपठनाय प्रेरिताः भवन्ति।
(5) छात्राणां कृते रुचिकरा।
(6) छात्रान् आनन्दम् आयाति।
(7) शिक्षणं सरलं, सुग्राह्यञ्च भवति।

**(ग) विश्लेषण-संश्लेषणात्मक पद्धतेः दोषाः**

(1) विधिरयम् उच्चस्तराय उपयोगी नास्ति।
(2) पद्धतिरियं केवलं खण्डेषु विभाजितयोग्यविषयानां कृते उपयुक्ता। अतः कक्षायाः अतिरिक्तानां विषयानां कृते पद्धतिरियं न लाभदायकाः।
(3) संस्कृतभाषायाः विभिन्नपक्षाणां ज्ञानं न भवितुं शक्यते।

## (ग) ह्यूरिस्टिक्-विधिः
## Heuristic Method

शिक्षाक्षेत्रे दिनानुदिनं सामान्यो विशिष्टो वा विधिः अन्विष्टः, आविष्कृतो वा भवति। नवपद्धतिरपि वातावरणानुगुणं स्वतन्त्ररूपेण आविष्कृता भवति। यथा- हरबर्टीयपञ्चपदी, माण्टेसरी-बालोद्यान-पद्धतयः, आगमननिगमनविधिः, एवं आगमनसमस्याविध्योः संयोजनेनाविष्कृतोऽयं विधिः ह्यूरिस्टिक्विधिरिति नाम्ना प्रथते। शिक्षाक्षेत्रे अस्य विधेः असाधारणं स्थानं वर्तते।

### (क) ह्यूरिस्टिक् विधेःस्वरूपम्

''**मितं भाषेत, बहु कुर्वीत**'' इति सिद्धान्तं, ''अध्यापकेन छात्राः अत्यल्पमेव पाठ्येरन्, अत्यधिकं अन्वेषणे प्रोत्साह्येरन्'' इति। Herbert Spencer महोदयस्य हरबर्टीय सिद्धान्तं चाधारीकृत्य प्रो० एच. ई. आर्मस्ट्रॉंग [Prof.H.E.Armstrong] महोदयः नवदशशताब्द्यां विज्ञानविषयशिक्षणार्थम् अमुं विधिं पर्यकल्पयत्। प्रथमं यदा विद्यालयेषु विज्ञानविषयः अनिवार्यतया पाठ्यक्रमे संयोजितः, तदा प्रयोगशालाः, उपकरणानि च विना कथं शिक्षयेत् शिक्षकः इति समस्या समुदैत्। आर्मस्ट्रॉंग महोदयं सरलतया उपकरणैः विना विज्ञानविषयशिक्षणार्थममुं विधिं समदर्शत्। ततः आरम्भायं स्वतन्त्रविधित्वेन प्रयुज्यमानो वर्तते। अद्य अस्योपयोगः न केवलं विज्ञानविषये, अपि च ज्योतिष गणित-व्याकरण-प्राकृतिक विज्ञानादिष्वपि विषयेषु वर्तन्ते। ह्यूरिस्टिक् इति पदं ह्यूरिस्को [Heurisco] इति ग्रीक्शब्दात् विकृतं वर्तते। तस्यार्थः— ''**अहमन्विष्यावगच्छामि**'' इति। अत्र विधौ छात्राः स्वयमेव तत्त्वमन्विष्य अवगच्छन्ति। अध्यापकः तदर्थं व्यवस्थापयति। स तु केवलं मार्गदर्शकत्वेन कर्म करोति। न तु सर्वं शिक्षयति। छात्रेभ्यः तत्त्वानामवलोकनार्थं निरीक्षणार्थं चावसरं परिकल्पयति। छात्राः तत्त्वानि स्वयं विविधोपकरणानां साहाय्येनावलोक्य नियमं, मूलभूतं तत्त्वं वा अवगच्छन्ति। छात्रेभ्यः तत्त्वानि न पाठ्यन्ते, किन्तु ते स्वयमेव अन्वेषकाः भूत्वा तत्त्वानि आविष्कुर्वन्ति। आगमनविधेः तत्त्वान्यतिरिच्य अत्र विधौ किमपि नावीन्यं न वर्तते। अत्र छात्राः स्वीयसमस्यायास्समाधानम् अन्येषां साहाय्येन विना स्वयमेव सपरिश्रमं सप्रयासं च प्राप्नुवन्ति। विधिरयं छात्रान् शोधकर्मणि प्रेरयति। छात्राः स्वीयान् आक्षेपान् स्वयमेव सम्पादयन्ति। अन्ते स्वयमेव तत्त्वज्ञानमन्विष्य प्राप्नुवन्ति। छात्राः स्वानुभवैः ज्ञानं प्राप्नुवन्ति। एवञ्च ह्यूरिस्टिक् विधौ छात्राः समस्यां श्रुत्वा स्वयमेवावश्यकोपकरणान्येकीकृत्यान्विष्य परीक्ष्य तत्त्वज्ञानं प्राप्नुवन्तीति स्पष्टं प्रतीतं भवेत्। अत्र प्रक्रियाया एव महत्त्वं वर्तते। यतः इयं खलु प्रक्रिया छात्रेषु विविधकौशलानि संवर्धयति।

### (ख) ह्यूरिस्टिक् विधेः प्रमुखानि उद्देश्यानि

1. परिश्रमः, निरीक्षणं, चिन्तनमित्येषां महत्त्वप्रतिपादनम्।
2. अनुसन्धानतत्त्वानां परिचयः।

3. छात्रेषु वैज्ञानिकासक्तेः प्रवृत्तेश्च संवर्धनम्।
4. स्वाध्यायान्मा प्रमदितव्यमितिज्ञानोत्पादनम्।
5. स्वप्रयासैरधिगततत्त्वानां व्यवस्थापनाय नियमनाय च प्रशिक्षणम्।
6. स्वीयानुभवानां तर्कसङ्गतरीत्या व्यवहारे नयनम्।
7. तत्त्वज्ञानं कथं प्राप्नुयाच्छात्र इति विषये प्रशिक्षणम्। इत्येतानि ह्यूरिस्टिक् विधेः प्रमुखान्युद्देश्यानि भवन्ति।

## (ग) ह्यूरिस्टिक् विधेः आधारभूताः सिद्धान्ताः

आर्मस्टॉग महोदयः स्व ह्यूरिस्टिक्विधिम् केषाञ्चित् सिद्धान्तानामाधारेण समकल्पयत्। सामान्यतया प्रचारे व्यवहारे वा यो विधिः वर्त्तते तत्र सिद्धान्ताः अन्विष्य ज्ञायन्ते। परन्तु अत्र विधिः वास्तविकरूपेण मनोवैज्ञानिकसिद्धान्तानामाधारेण कल्पितो वर्तते। वस्तुतः इयमेव औपचारिकता नवविधीनामन्वेषणात् शिक्षाशास्त्रिणः उद्घोषयति। तथाऽपि Armstrong महोदयः आवश्यकतां अभिमुखीकृत्य, ताभिः प्रेरितस्सन् इमं विधिं प्रदर्शयिष्यते। अस्मिन् निहितास्सिद्धान्ताः केचन वर्तन्ते। यथा–

1. विधिः प्रामुख्येन क्रियाशीलता सिद्धान्तमनुसरति, यतः छात्रः स्वयमत्र सक्रियः भूत्वा शिक्षते।
2. कार्यमुखादधिगमः इति सिद्धान्तमाधारीकृत्य तिष्ठति, छात्राः निरीक्षणं, तत्त्वानाम् संकलनं, नियमनिर्धारणं इति सर्वं कार्यं सम्पाद्याधिगमं प्राप्नुवन्ति।
3. रूचेः सिद्धान्तः।
4. प्रेरणसिद्धान्तः।
5. प्रयत्नसिद्धान्तः।
6. अनौपचारिकसिद्धान्तः।
7. विकासात्मकसिद्धान्तः। इति विविधसिद्धान्तान् पुरस्कृत्य विधिरयं प्रवर्तते।

## (घ) ह्यूरिस्टिक्विधौ शिक्षकस्य स्थानम्

अत्र विधौ छात्राः स्वयमेव सर्वं कृत्वाऽवगच्छन्ति, अतः अध्यापकः अनपेक्षितः इति न वाच्यम्। वस्तुतः अध्यापकस्य महत्यावश्यकता वर्तते। अत्र अध्यापकस्य कीदृशं स्थानं भवेत् विवरणं निम्नांकितं वर्तन्ते। यथा–

1. अध्यापकः विषयज्ञः प्रतिभावान् च स्यात्।
2. सः अल्पमेव बोधयेत्, छात्राः तस्मात् संसूचनं प्राप्य अग्रेसरेयुः।
3. अध्यापकः वैज्ञानिकविषयाणां ज्ञाता, निरीक्षकश्च भवेत्।
4. साध्नानि विषयाश्च कुतो लभेरन्निति मार्गप्रदर्शकः।
5. सः तत्त्वं जानन्नपि यावत् छात्राः स्वयं न अवगच्छन्ति, तावन्न वदेत्। ज्ञाने मौनं कष्टमेव, तथापि पालयेत्। यदि छात्राः सर्वथा न अवगच्छन्ति, तर्हिभीतं सम्बोध्याग्रेसारयेत्।

6. प्रश्नकरणे कुशली स्यात्, यतोऽयं विधिः प्रश्नानामाधारेणैव तत्त्वमवगमयति। यथापेक्षमेव मार्गदर्शनं कुर्यात्।
7. छात्राणां समस्याः प्रतिपदमवगत्य समाधानं कुर्यात्।
8. सूक्ष्मनिरीक्षकः।
9. सामाजिकज्ञानयुक्तः।
10. सुमार्ग दर्शकः।
11. आदर्शवादीयगुणयुक्तः, विषयज्ञः, ज्ञानवान् च भवेत्।

**(ङ) ह्यूरिस्टिक्विधौ निम्नाङ्कित-पञ्चपदानि प्रयुज्यन्ते**

**1. समस्यायाः प्रस्तावः—**अध्यापकः पाठ्यविषयसम्बद्धां कामपि समस्यां कक्षायां प्रस्तूयात्। समस्यां तथा उद्घोषयेत् यथा सर्वे छात्राः सावधाना भवेयुः। छात्रेषु तादृशी भावना उदीयात्, समस्या पाठसम्बद्धा, उपयोगिनी चेति। ज्योतिषशिक्षणे अस्योपयोगितामुदाहरण-माध्यमेन प्रदर्शयिष्यन्ते। यथा छात्राणां समक्षमियं समस्या उदेति–

| | |
|---|---|
| (क) किम् पञ्चाङ्गम्? | (ख) कति वासराः के च ते? |
| (ग) कति तिथयः काश्च ताः? | (घ) कति नक्षत्राणि कानि च तानि? |
| (ङ्) कति योगाः के च ते? | (च) कति करणानि के च ते? |
| (छ) कति राशयः काश्च ताः? | (ज) कति मासाः के च ते? |

इत्यादयः प्रश्नात्मक-समस्या प्रस्तूयात्। छात्राः अन्वेषणे तत्परा भवेयुः। ''अर्जितंज्ञानं चिरं भवति'' इत्यालोके अन्वेषनीयम्।

**2. तत्त्वानां निरीक्षणं, सारणीकरणम्–**अत्र छात्राः समस्यां समाधातुमावश्यक तत्त्वानि, उपकरणानि च स्वयमन्विष्य एकीकृत्य सारणीकरणं कुर्वन्ति। सारणीकरणेन विश्लेषणे सौलभ्यं जायते। ज्योतिषशास्त्रस्य ''पञ्चाङ्गम्, नक्षत्रानि, राशयः'' एकीकृत्य सारणीकरणम्।

**3. परिकल्पना–**अत्र बालकाः स्वसंकलितविषयाणां निरीक्षणपूर्वकं सन्तर्क्य कामपि परिकल्पनामुचितां स्वसमस्यायाः समाधानत्वेन निश्चिन्वन्ति। यथा-पञ्चाङ्गम्, नक्षत्राणि इत्यादीनि सारणी प्रस्तुवन्ति।

**4. परीक्षणम्–**स्वकृतां परिकल्पनां छात्राः विविधैः प्रमाणैः, अध्यापकस्य सहयोगेन परीक्षन्ते। यथा- पञ्चाङ्गम्, नक्षत्राणि, राशयः'' सारणी परीक्षन्ते।

**5. नियमनिर्धारणम्–**परीक्षणानन्तरं छात्रैः कश्चन् नियमः निर्धार्यते। यदि परिकल्पना पूर्णता साध्वी तां नियमत्वेन स्वीकुर्वन्ति छात्राः। परीक्षणात्परं परिकल्पनायां परिवर्तनस्यावश्यकता भवति चेत्, तदनुपरिवर्त्य नियमनिर्धारणं कुर्वन्ति। यथा अत्र परीक्ष्य परिकल्पनां नियमयन्ति छात्राः। एतेन छात्राः ह्यूरिस्टिक् विधौ स्वयं सक्रियाः सन्तः तत्त्वं संकलय्य, परीक्ष्य, नियमं निर्धार्य ज्ञानं प्राप्नुवन्ति। यथा-ज्योतिषशास्त्रस्य ''(क) पञ्चाङ्गम्, (ख) नक्षत्राणि, (ग) राशयः'' नियमः निर्धार्यते।

(क) तिथिर्वारञ्च नक्षत्रं योगः करण एव च,
पञ्चस्वेतेषु शुद्धेषु समयः शुद्ध उच्यते।

(ख) अश्विनी भरणी चैव कृत्तिका रोहिणी मृगः।
अर्द्रा पुनर्वसू पुष्यस्तथाश्लेषा मघा ततः।।
पूर्वाफाल्गुनिका चैव उत्तराफाल्गुनी ततः।
हस्तचित्रा तथा स्वाती विशाखा तदनन्तरम्।।
अनुराधा ततो ज्येष्ठा ततो मूलं निगद्यते।
पूर्वोषाढोत्तराषाढ त्वभिजिच्छ्रवणा ततः।।
धनिष्ठा शतताराख्यं पूर्वाभाद्रपदा ततः।
उत्तराभाद्रपदा चैव रेवत्येतानि भानि च।।

(ग) मेषो

1. वृषोऽथ, 2. मिथुनं, 3. कर्कटः, 4. सिंह, 5. कन्यके, 6. तुलौऽथ, 7. बृश्चिको, 8. धन्वी, 9. मकरः, 10. कुंभ, 11. मीनकौ.

**(च) ह्यूरिस्टिक्विधेः मूल्याङ्कनम्**

विद्यालयेषु विज्ञानविषयं सरलतया विहित रीत्या शिक्षयितुं Armstrong महोदयः विधिममुं आविष्कृत्योपकृतवान्। अद्य तु अस्य विविधविषयेषु प्रयोगो भवति। एतदर्थं सम्पूर्ण शिक्षाजगत् तं प्रति आभारी भवति। गणितं, व्याकरणमिति विषयेष्वस्याधिक्येन प्रयोगः शिक्षाविद्भिः विधीयते।

अयं विधिः न मौलिकः। समस्या-आगमनविधेः संयोजनायं प्राप्यते। विधिः समस्यां पुरस्कृत्य प्रवर्तते। समस्याविधिरपि इदमेव कर्म करोति। एवं लक्ष्यमवलोक्य लक्षणं परिकल्प्यते आगमनविधौ। तथैवात्रापि समस्यां समाधातुं लक्ष्यमवलोक्य लक्षणरूपेण समाधानं परिकल्प्यते। आगमनविध्यपेक्षया नायमतिरिक्तः विधिः इति प्रमाणयति। अर्थात् आगमनविधेः परिवर्तितं रूपमेव ह्यूरिस्टिक् विधिरिति। तत्र आंशिक भेदो वर्तते-आगमनविधौ समस्यामनुत्पाद्योदाहरणानि प्रस्तूयन्ते। अत्र समस्यामुत्पाद्य लक्ष्ये तत्त्वानां निरीक्षणमिति एकं पदमतिरिक्तं वर्तते। विधिरयं समस्याविधेः प्रतिरूपकः वर्तते। यथा समस्याविधौ समस्यायाः समाधानान्वेषणार्थं यतते छात्राः, तथैवात्रापि विधौ। Smith and Harrison स्पष्टयतः—'अस्मिन् विधौ छात्राः स्वीयसमस्यायास्समाधानमितरेषां साहाय्येन विना स्वयमेव सपरिश्रमं सप्रयासं च प्राप्नुवन्ति'' इति। अर्थात् ह्यूरिस्टिक् विधिः समस्यां पुरस्कृत्यैव प्रवर्तते, समस्याविधिवत्। Bossing महोदयः समस्याविधेः पदानि इत्थं वर्गीकरोति। 1. समस्यायाः स्वीकृतिः। 2. समस्यायाः स्पष्टीकरणम्। 3. तत्त्वानां सङ्ग्रहः। 4. तत्त्वानां सङ्घटनम्। 5. तत्त्वानां विश्लेषणम्। 6. निष्कर्षः /प्रयोगः।

"Hamby" महोदयेन शिक्षाचार्येण ह्यूरिस्टिक् विधेः इत्थं पदानि प्रतिपाद्यन्ते–

1. समस्यायाः कथनम्।
2. तत्त्वानां निरीक्षणं सारणीकरणम्।
3. परिकल्पना।
4. परीक्षणम्।
5. निष्कर्ष/नियमनिर्धारणम्।

यदि अस्माभिः तटस्थबुद्ध्या तुलना क्रियते तर्हि अनयोर्मध्ये भेद एव नानुभूयेत्। अतः शिक्षाचार्याणां विचार एव प्रामाण्यम्। Prof.S.K.Kocchar निरूपयति–''अध्यापकः समस्यां समुपस्थाप्य विरमेत्। ततः प्रक्रियायाः केवलं निरीक्षणं कुर्यात्'' इति। येन च सुस्पष्टं प्रतीयेत समस्याविधिमतिरिच्य न कश्चन नूतनोऽयमाविष्कार इति। Bhatia and Bhatia निरूप्यतः—''ह्यूरिस्टिक् विधिः समस्यायाः समाधानमागमनेन निगमनेन च करोति'' इति। एवं विचार्यमाणे स्पष्टं प्रतिभायाद् ह्यूरिस्टिक् विधिः आगमनसमस्याविध्योः संयुक्ताकारक एवेति।

**निष्कर्षः**

अस्माभिरिदमेवोच्यतेनायंसमस्याविधिवत्, आगमनवत्, बालोद्यान पद्धतिः वत् च स्वतन्त्रः इति। विधेस्तावत् काचन् पृथगात्मा नूनमस्त्येव। नवविधिः कश्चनाविष्कृतो भवति चेत्, तत्रावश्यमेव कानिचन् प्रचलिततत्त्वानि दृश्येरन्। अतः द्वयोः विधयोः संयोजनेन प्रचलितस्य विधेः परिवर्धनेन वा नवविधिराविष्कृतो भवतु, तत्र मौलिकतायाः विवेचनापेक्षया प्रक्रियायाः एव महत्त्वं प्रदेयमस्माभिः। अत्र विधौ प्रक्रिया महत्त्वपूर्णा परिलक्ष्यते। सा च छात्रेषु सर्वाङ्गीन विकासं कारयति। प्रो० आर्मस्टॉग महोदयस्य विधिरयं संश्लिष्टस्यास्य विधेः ज्योतिषशिक्षणे महत्त्वं निर्विवादमेव।

**(छ) ह्यूरिस्टिकविधेः गुणाः**

1. वैज्ञानिकभावनामुत्पाद्य, अन्वेषणे प्रयोगे चासक्तिं वर्धयति।
2. छात्रेषु अध्यापकेषु च परिश्रमं प्रयासं चोत्तेजयति।
3. आत्मविश्वासं, आत्मनिर्भरतां च प्रोत्साहयति।
4. अर्जितं ज्ञानं चिरं तिष्ठति, यतः छात्रः स्वयमन्विष्य तत्त्वमवगच्छति।
5. छात्रः सक्रियोः भवति।
6. छात्राः स्वयमेव सर्वं कुर्वन्ति, अध्यापकः मार्गमेव दर्शयति।
7. छात्राध्यापकयोः सम्बन्धः दृढीयान् भवति।
8. छात्राणां मानसिकक्षमता-विकासं प्राप्नोति।
9. मनोवैज्ञानिकोऽयं विधिः।
10. पूर्वानुभवानां स्थानान्तरीकरणे सक्षमाः भवन्ति छात्राः।
11. अत्र बहवो गुणाः प्रशंसनीया वर्तन्ते, यैः ज्योतिषशिक्षणं हितकरं भवति।

**( ज ) ह्यूरिस्टिकविधेः न्यूनताः**

1. कक्षाऽध्यापने सर्वदा अस्योपयोगः न सम्भवति।
2. महान् समयोऽपेक्षितो भवति।
3. प्रक्रियेयं बालानां क्षमतामातिच्य वर्तते।
4. अन्वेषणशीलता, तत्त्वसंकलनं, निरीक्षणं, सारणीकरणम् इति प्रौढरप्यतिकष्टेन साध्यते।
5. सामान्यशिक्षकैः : व्यवस्थापितुं न शक्यते।
6. रूच्युत्पादनं, समस्यायाः चयनं, निरीक्षणं, सर्वं श्रमेण साध्यं भवति।

**( झ ) उपसंहार**

विधेः गुणदोषाणां विवेचनेन गुणानामेवाधिक्यमेवावलोक्यते। किन्तु परीक्षाकेन्द्रितेऽस्मिन् वातावरणे विधे प्रयोगः यथावत् न सम्भवति। अपि च विशिष्टोपकरणानां शिक्षकाणां च आवश्यकता महती वर्तते। तथाऽपि विधेः लाभान् विचिन्त्य बालानां, शिक्षकाणां, उपकरणानां, वातावरणस्य च स्थितिमवलोक्य तदनुगुणं यथाशक्तिः विधिः अयं प्रयोगे आनेतव्यम्। ज्योतिषं गणितं, व्याकरणं, विज्ञानादिषु विषयेषु अवश्यमेवायं प्रयोज्यः। विशिष्टमाध्यमिकविद्यालयेषु, संस्कृतविश्वविद्यालयेषु ज्योतिषं यद्यनेन विधिनाऽध्यापयेत् तर्हि शिक्षणं सार्थकं हितकरं च भवेत्।

## ( घ ) प्रायोजनाविधिः ( योजनाविधिः )
## (Project Method)

प्रयोजनविधिः बहुकालाद् व्यवहारे वर्तते। प्रयोजनविधिः योजना विधिरिति शब्दावनर्थान्तरे प्रयुज्यते। अस्माकं वेदेषु, उपनिषत्सु, इतिहासेषु, पुराणेषु च प्रयोजनविधेस्संसूचनाः प्राप्यन्ते। अस्माभिः न बलादारोप्यते, एतद्दृष्ट्या वा विचार्यते। किन्तु प्रयोजनविधेः अस्तित्त्वे प्रमाणानि लक्ष्यमवलोक्योद्धरेन्। इयं योजनाऽध्ययनं अध्यापनं वा विविध विषयेष्ववलोक्यते-यथा-

1. पशुपालनं, 2. ब्रह्मज्ञानार्जनं, 3. अस्त्रशस्त्रादि प्रापणमिति।

**1. पशुपालनम्**-शतपथब्राह्मणे प्रमाणं लभते-सत्यकामो जबालः गुरोराश्रमस्थानां चतुश्शतं गवां संख्यां सहस्रं कारयिष्यामीति योजनां परिकल्प्य तामनु प्रायतत इति।

**2. ब्रह्मज्ञानार्जनम्**-यदृच्छया पित्रा क्रोधेन प्रोक्तस्सन् नचिकेताः ब्रह्मजिज्ञासु भूत्वा बलवतीं योजनां विचिन्त्य यमराजमाश्रित्य ब्रह्मज्ञानं प्राप्नोतीति कठोपनिषदि योजनाविधेः प्रारूपमिव दृश्यते।

**3. अस्त्रशस्त्रादि-प्रापणम्**-महाभारतेऽपि श्रद्धालुः भक्तः एकलव्यः गुरोराशिषा महत्त्याऽनुकम्पया च धनुर्विद्यायां नैपुण्यप्राप्तये स्वयमेव वातावरणानुकूलं सुविचिन्त्य "अभ्यासनियमं, एकाग्रतानियमं, स्वतन्त्रतानियमं" इति मनोवैज्ञानिकनियमानामाधारेण काञ्चन् सुयोजनां परिकल्प्य प्रायतत। तत्र साफल्यम् अपि अवाप इति योजनाविधेः संसूचनमिव प्रमाणं लभते।

एवम् अर्जुनोऽपि पाशुपत्यास्त्रप्राप्तये भगवतः कृष्णस्य मार्गदर्शनं प्राप्य, प्रथमं कः उपासितव्यः? कुत्र कथं च तपः आचरणीयः? किं किमस्त्रं प्राप्तव्यम्? इति प्रश्नान् विचिन्त्य इन्द्रं सन्तोष्य ईशं च तोषयित्वा "दिव्यास्त्रप्रापणम्" इत्याख्यायां योजनायां विजयं प्राप्नोदिति च श्रूयते। एवं विचारमाणे योजनाविधितुल्यं तदाकारकं प्रारूपं वा प्रचारे पुराऽऽसीदिति वक्तुमस्ति किञ्चिन्निदानमिति।

**एवं च प्रयोजनविधेः मूलम्**—रूसोमहोदयस्य कृतौ Emile-book 3 .नामके ग्रन्थे, Froebel महोदयस्य "मानवशिक्षा" इति ग्रन्थे, Cobnett महोदयस्य "युवकेभ्यः सन्देशः" इति ग्रन्थे च अवलोक्यते। वस्तुतः विधिरयं शिक्षावाचस्पतेः John Dewey महोदयस्य सिद्धान्तानां परिणाम एव। स च व्यावहारिक-साधनात्मक- आवश्यकतात्मक-प्रयोगात्मक-दृष्टिकोणेषु प्रयोजनवादं प्रत्यपादयत्। तस्यैव परिणामोऽयं विधिः। John Dewey.तस्य शिष्यः W.H.Kilpatrik चास्य प्रवर्तकौ मन्येते। शिक्षाक्षेत्रे बाहुल्येनायम् उपयुज्यते। अस्य शिक्षेतिहासे महत्त्वपूर्णं स्थानं वर्तते।

**(क) अर्थः/परिभाषा**

विद्यालयेषु जीवनेन सम्बद्धानां पाठ्यविषयाणां शिक्षणार्थं कामपि योजनां परिकल्प्य क्रमबद्धकार्यान्वयप्रक्रियया अधिगमस्योत्तेजनमेव प्रयोजनविधिरित्यभिधीयते शिक्षाविद्भिः।

1. व्यावहारिक-समस्यानां सामूहिकप्रयासैः बुद्धिशक्त्या, नैतिकप्रशिक्षणेन च समाधानान्वेषणमेव प्रयोजना भवति-(Robert K.RusK)

2. सामाजिकवातावरणे संलग्नतापूर्वकं क्रियमाणाः सोद्देश्यप्रक्रिया एव योजना भवन्ति। [Kilpatrik]

3. प्राकृतिकवातावरणे समस्यात्मकप्रक्रियायाः समाधानान्वेषणमेव योजना। [Stevenson]

4. योजना नाम आङ्गिकप्रक्रिया भवति। यत्र छात्राः उद्देश्ययुक्तां योजनां स्वयं परिकल्पयन्ति। [S.C.Parker]

5. नायम् आगमन-निगमनविधिवत् कश्चन् सामान्यो विधिः। अयं उद्देश्यपूर्णता, क्रियाशीलतेतिसिद्धान्तद्वितीयम् आधारीकृत्य प्रवर्तते। अत्र छात्रः स्वयमेव सर्वं सम्पाद्य साधयति। अयं व्यापकः महत्त्वपूर्णश्च विधिः। [James L.Marsell]

6. स्वतन्त्रवातावरणे क्रियमाणस्य स्वाभाविकस्य जीवनोपयोगिनः कार्यस्य एका प्रक्रिया भवति योजना। किमपि कार्यं पूर्णतया साधयितुमत्र प्रयासो विधीयते। शारीरिक-मानसिक-सामाजिक संलग्नताऽत्रापेक्षिता भवति। [Yoakam and Simpson]

7. योजना जीवनस्याभिन्नमङ्गं वर्तते। योजनाविधेः "क्रिययाऽधिगमः" इति विवरणापेक्षया "जीवनेनाधिगमः" इति विवरणमेवोचितं भवेत्। [Prof.Ballard]

8. या स्वैच्छिकप्रक्रिया निर्माणात्मकप्रयासैः चिन्तनैः वा वांछितपरिणामं प्रापयति, सैव योजना। [Thomas and Long]

उपरोक्तानामभिप्रायाणामालोचनेन योजना नाम जीवस्यैका प्रक्रिया इति फलति। जीवनप्रक्रियाया: कश्चनांश एव विद्यालयेषु प्रयोजनविधिरिति नाम्ना प्रयुज्यते।

**योजनायां चत्वारो विषया: प्रामुख्यं भजन्ते**

1. स्वाभाविकप्रवाह:,

2. उद्देश्यपूर्णता,

3. रुचि:,

4. क्रियाशीलता, प्रतियोजने एते विषया: निहिता: भवन्ति। यत: योजनाविधौ छात्रा: स्वतन्त्रा: सन्त: कर्मणि रमन्ते। यदि तत्रोद्देश्यं, स्वाभाविकता, रूचिर्वा न भवेत्, कथं तेषां कार्ये प्रवेशो जायेत्? अत: स्वाभाविकप्रयासोऽपेक्षित:। प्रचीना: शिक्षाचार्या:—''जीवनस्यैकं साधनं भवति शिक्षा'' इत्यचिन्तयन्। परन्त्वाधुनिका: शिक्षाचार्या:''जीवनस्याङ्गं भवति शिक्षा'' इत्यभिप्रयन्ति। अत एव योजना नाम जीवनप्रक्रिया इत्यूरीकुर्वन्ति। योजनाविधौ अनुभवस्यापि महत्त्वं वर्तते। यत: स्वानुभवजन्यं ज्ञानमेव वास्तविकं ज्ञानं प्रापयितुं शक्नुयात्।

**(ख) प्रयोजनविधे: सिद्धान्ता:**

1. स्वभाविकतासिद्धान्त:,
2. मनोवैज्ञानिकसिद्धान्त:,
3. क्रियाशीलसिद्धान्त:,
4. नियोजनसिद्धान्त:,
5. उद्देश्यसिद्धान्त:,
6. रूचे: सिद्धान्त:,
7. वास्तविकतासिद्धान्त:,
8. सामाजिकतासिद्धान्त:,
9. स्वतन्त्रतासिद्धान्त:,
10. उपयोगसिद्धान्त:, एतानि आधारीकृत्यानि सिद्धान्तानि प्रयोजनविधे: परिकल्पितानि वर्तन्ते।

**(ग) प्रयोजन विधे: प्रयोगक्रम:**

प्रयोगक्रमे पञ्चपदानि वर्तन्ते। एतानि पञ्चपदानि क्रमश: विवेचितव्यानि–

**1. परिस्थित्युत्पादनम्**–अध्यापक: छात्रेषु न किमपि कार्यमारोपयेत्। छात्रा: स्वेच्छया परिस्थित्यानुकूलं वातावरणं परिकल्प्य आकर्षयन्ति। अत: अध्यापक: सावधानं विविधपरिस्थितीं अवलोक्य ताश्च छात्रै: सह विचारयेत्। छात्राणां रूच्यनुगुणं किं ते चिकीर्षन्तीति जानीयात्। तदनुकूलं वातावरणं परिकल्प्य आकर्षयेत्। छात्रा: स्वयं परिस्थतीं दृष्ट्वा तत्रत्यसमस्यां विज्ञाय आसक्तिं रूचिं च यथा प्रदर्शयेयु:, तथा तान् प्रोत्साहयेत्। एतदर्थं अध्यापक: सावधानेनपरिस्थितिमुत्पादयेत्। वार्तालापेन, चित्रप्रदर्शनेन, नवग्रन्थस्यपरिचय-माध्यमेन, मनोरञ्जनकार्यक्रमैश्च विविधरूपेण यथोचितं परिस्थितिमुत्पादयितुं शक्नुयात्।

ज्योतिषशिक्षणे अस्य सुमहान् उपयोगो वर्तते। उदाहरणद्वारा प्रयोजनं प्रमाणयामः। यथा-अध्यापकः कक्षायां छात्रैः सह सरलसंस्कृतेन वार्तालापं करोति। स्वभाषणावसरे ज्ञात्वैव- **(क) रवौ रसाब्धि? (ख) हिमगौ हयाब्धि? (ग) बुधे बाण शरागौ? (घ) गुरोःरसाष्टं ज्ञेयं? (ङ) भृगुणे तृतीयम्? (च) द्वयं महीजे? शनौरसाद्यन्तम्?** इत्यादीनां क्रमबद्ध-मावश्यकतानुगुणं वार्तालापं करोति। छात्राः अपि सोत्साहं सम्भाषणे भागं गृह्णन्ति। सावधानं परस्परं अभिप्रयान् श्रृण्वन्ति। कश्चन् छात्रः—प्रश्नमुत्थापयति। एवं वातावरणं प्रश्नात्मकं परिणयते। छात्राः उपरि चर्चायां प्रवर्तन्ते। अध्यापकं पृच्छन्ति किमत्र साधु? इति। एवं समस्यात्मिका काचन् परिस्थितिरूत्पादिता भवति।

**2. योजनायाः चयनं, उद्देश्यनिर्धारणं च**—संवर्धितकक्षा-वातावरणे काचन् समस्याऽपि उदिता भवति। छात्राः तां समाधानमुपायं चिन्तयन्ति। परस्परं विचारयन्ति। अध्यापकः मध्ये-मध्ये प्रोत्साहयन् निरीक्षते। छात्रैः प्रस्तुतान्, अर्थात् योजनाः गुणदोष पूर्वकं विवेचयति। सर्वोत्तम-मान्ययोजनायाः चयने साहाय्यमाचरति। किं तस्या योजनायाः उद्देश्यमित्यपि निर्धारयति। प्रस्तुतोदाहरणे छात्राणां पुरतः इयं समस्या उदैति-''अर्द्धप्रहर बोधनं कथं केन प्रकारेण च भवति'' इति। तां समाधातुमुपायान् प्रस्तुवन्ति। कश्चन्-मम पिता संस्कृतज्ञः तं आलोच्य लिखित्वा आनयामि। अन्यः— ''सिद्धान्तानां समालोचनेन स्पष्टं भविष्यति'' इति। अपरः— पुस्तकान्यवलोक्य समाधातुं शक्नुमः। केचित् ''प्रौढव्यवहारान् प्रसिद्ध ज्योतिषी प्रयोगान् दृष्ट्वा समादध्महे'' इति। एकः ''शिक्षकं पृच्छामः'' सरलतया स्पष्टं भविष्यति' इति चोपायान् प्रस्तुवन्ति। शिक्षकः सर्वं निरीक्ष्य मार्गदर्शनं करोति। गुणदोषविवेचनपूर्वकं छात्रेषु अर्द्धप्रहर बोधनं ऐकमत्यमापादयति। अन्ते सर्वे छात्राः ''पाठ्यपुस्तकानां सान्दर्भिक- ग्रन्थानां च परामर्शेन प्रयोगवैशिष्ट्यज्ञानम्'' इति निर्धारितां योजनामङ्गीकुर्वन्ति। तां कार्ये अन्वेतुं यतन्ते।

**3. कार्यक्रमनिर्धारणम्**—छात्राः सम्भूय योजनाया कार्यान्वयः कथं भवेदिति विचारयन्ति। तत्र अध्यापकः साहाय्यं करोति। क्रमबद्धकार्यं क्रमस्यावश्यकतां च सूचयेत्। प्रथम वाचा कार्यक्रमः कथं भवेदिति विचार्य तान् प्रस्तावान् स्वपुस्तिकायां लिखेयुः। यदि कार्यक्रम-निर्धारणे सर्वथा अशक्ताः भवेयुः छात्राः, तदा अध्यापकः स्वीयान् द्वित्रान् कार्यक्रमान् तत्रान्यतमं स्वीकर्त्तुं प्रोत्साहयेत्। कदाऽपि स्वीकृतयोजना न स्थगेत्। प्रकृतोदाहरणे छात्राः बहुधाऽऽलोच्य कांश्चन् कार्यक्रमान् प्रस्तुवन्ति-

1. अर्द्धप्रहर बोधकं वाक्यानां संकलनम्।

2. श्लोकस्थानां पृथक् संकलनम्। तेषामन्वयक्रमेण व्यवस्थापनम्। अनपेक्षित-शव्दानामपसारः।

3. लक्षणाण्यवलोक्य नियमपरिकल्पनम्।

4. नियमानां परीक्षणं, निर्धारणं च।

5. नियमानां सारणीकरणम्। एकैकस्यापि नियमस्य पुरतः तत्सम्बद्धोदाहरणमपि स्यात्।

6. स्वपरिकल्पितानां नियमानां पाठ्यपुस्तकेषु प्रदत्तमर्थानुवादात्मक-नियमै:वा परीक्षणम्।

7. एकैकमपि नियमं प्रयुज्य स्वतन्त्ररूपेण अर्द्धप्रहरस्य समयनिर्धारणं रचनम्। इति योजनां समाधातुं विविधकार्यान्वयप्रक्रिया: आलोच्य पुस्तिकासु लेखबद्धं कुर्वन्ति।

**4. कार्यान्वय:**—परिकल्पितानां कार्यक्रमाणामाधारेण छात्रा: व्यक्तिगतरूपेण वर्गेषु विभज्य वा योजनाकार्ये प्रयोजयेयु:। यदि वर्गेषु विभज्य यतेरन् तर्हि अध्यापक: "क: वर्ग: किं कुर्यात्? कथं विभज्य कर्तुं शक्यते? इति च मार्गदर्शनं कुर्यात् छात्रा: यथा स्वयमेव वर्गेषु विभज्य कर्मं कुर्यु: तथा तै: प्रोत्साहनीया:। अत्र पदे छात्रा: सक्रिया: भवेयु:। यत: तेषु बहुकार्यमापतति। यथा-पठनं, लेखनं, परस्परविचार:, मातृभाषाया: साहाय्येन अनूद्यावगमनं, चिन्तनं इति साक्षात्कार्येषु, तदतिरिच्य पाठनावसरे पठनकौशलं, गद्यपद्यानां शैलीज्ञानं, वाक्यप्रयोगस्य वैशिष्ट्यं, रसानुभूति:, परस्परविचाराणां गौरवप्रदानं सहिष्णुता, व्यवहारज्ञानमिति प्रासङ्गिकेषु प्रमुखविषयेष्वपि प्रदत्तवधाना: भवेयु:। इत्थं सपरिश्रमं सरूचिं कार्यक्षेत्रे योजनां प्रयोजयितुं छात्रा: प्रोत्साहनीया:। प्रदत्तोदाहरणे छात्रा: पूर्वोक्तरीत्या योजनां कार्ये प्रयुज्य तत्त्वानां सारणीमेकां निर्मान्ति।

**5. मूल्याङ्कनम्**—संकलिततत्त्वानि छात्रा: स्वयं परीक्षेरन्। तत्र को दोष:? कानि प्रामाणिकानि? इति इतोऽप्युचितं कथं भवेत्? कानि तत्त्वानि प्रामाणिकानि? इति विमृश्यावगच्छेयु:। अत्र अध्यापक: छात्रेभ्य: मूल्यांकनप्रक्रियामेव सूचयेत्, न हि स्वयं मूल्यांकने प्रवर्तेत। परस्परं वर्गाणां कार्याणि स्वातन्त्र्येण यथोचितं छात्राणां सौविध्येन मापयेयु:। अन्ते स्वस्वयोजनापुस्तिकायां सम्पूर्णयोजना: कार्यक्रमविवरणं लेखबद्धं कुर्यु:। प्रस्तुत ज्योतिषविषये छात्रा: सारणीकृतानां युक्तानि वाक्यानि निरीक्ष्य, परीक्ष्य, विचारविमर्शयन्ति। दोषान् परिवर्त्य लिखन्ति। अन्ते स्वपुस्तिकायां योजनां परिष्कारेण लेखबद्धं कुर्वन्ति। यथा-

**(1) अर्द्धप्रहरस्य उदाहणम्**

**दिने-**

**रवौवर्ज्यांश्चतुष्पञ्च सोमेसप्तद्वयं तथा, कुजेषष्ठद्वयञ्चैव बुधेवाणतृतीयकम्।**
**गुरौसप्ताष्टकं ज्ञेयं त्रिचत्वारि च भार्गवे शनावाद्यन्त षष्ठं च वर्ज्यार्धप्रहराबुधै:**

**रात्रौ-**

**रवौरसाब्धि हिमगौहयाब्धि, द्वयं महीजे बिधुजेशरागौ।**
**गुरौशराष्टौ भृगुजे तृतीयं शनौरसाद्यन्तमितिक्षपायाम्।।**

रवौ-रविदिने, रस:—षट्, अब्धि(समुद्र) चतुर्, हिमगौ-सोमदिने, ह्य-घोड़ा-सप्त, अब्धि-4, महीजे-मंगलवारे-द्वयं-2, विधुजे-बुध-शर-पञ्च, अग:—पर्वत:—सप्त गुरौ-शर-5/8, शुक्रवासरे-तृतीय, शनौ-रस-6 आदि-1 अन्त-8, एवं क्षपायाम्-रात्रौ, अर्धप्रहरं, त्याज्यम् इति।

**अर्द्धप्रहरबोधकचक्रम्-**

| दिन | रवि | सोम | मंगल | बुध | वृहस्पति | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| दिने | 4/5 | 2/7 | 2/6 | 3/5 | 7/8 | 3/4 | 1/6/8 |
| रात्रौ | 4/6 | 4/7 | 0/2 | 5/7 | 5/8 | 0/3 | 1/6/8 |

इत्थं प्रयोजनविधौ पञ्चसोपानानि महत्त्वपूर्णानि सन्ति। अयं विधिः पूर्णतया बालकेन्द्रितं वर्तते। अत्र छात्राणां परस्परसहयोग-सहानुभूतिषु, क्रियानिष्ठप्रौढतासु, उद्देश्यपूर्णेषु कार्येषु, प्राप्तानुभवानां स्थानान्तरीकरण-कौशलेषु, सीमितसाधनानां सहयोगेन उत्तमलाभप्राप्तिकौशलेषु च दृश्येत। एवमयं योजना विधिः शिक्षणप्रक्रियायां प्रमुखं स्थानं भजते।

**( घ ) प्रयोजन विधेः योजनायाःप्रकाराः**—चतस्रोयोजना:प्रमुखाः—

1. रचनात्मक, 2. रसात्मक, 3. समस्यात्मक, 4. अभ्यासात्मकाश्च। यथा-

**1. रचनात्मकयोजना**–अत्र रचनात्मक-कार्याणां योजनाबद्धः कार्यान्वयः भवति। छात्राः स्वबुद्धिमुपयुज्य आदर्शवस्तूनि, विषयान् वा विचिन्त्य मौलिकतां प्रदर्शयेत्। यथा-चित्रनिर्माणं, भवननिर्माणं, पुत्तलिकादीनां निर्माणं, पत्रलेखनं, व्याकरण- नियमान् उपयुज्य निबन्धलेखनम् इति।

**2. रसात्मकयोजना**–अत्र रसानुभूत्यै, आनन्दप्राप्तये च योजनाद्वारा यत्नः क्रियते। अनुभूतिप्रधानेयं योजना। यथा-कथाश्रवणं, संगीतश्रवणं, चित्रदर्शनम्, नाटकादीनां दर्शनं, व्यवहारनिरीक्षणं इति।

**3. समस्यात्मकयोजना**–इयं समस्याविधिवदेव प्रवर्तते। अत्र कांचन समस्यां पुरस्कृत्य समाधानान्वेषणाय योजना परिकल्पिता भवति। यथा-जले निमग्नो दण्डांशः कथं भग्न इव दृश्यते? लौहपुरूषाः कथं कर्मं कुर्वन्ति? शीतोष्णपरिस्थितीनां प्रभावः विविधकालेषु सामाजिकं वातावरणम् इति विज्ञानं, भूगोलशास्त्रं, इतिहासः इत्यादिषु विषयेषु योजना भवितुमर्हन्ति। विशिष्टव्याकरणशिक्षणे इयं बहूपकरोति। लिङ्गज्ञानं, कारकज्ञानं, समासज्ञानं, सन्धिज्ञानं, इति सर्वत्रास्याः उपयोगः परिलक्ष्यते।

**4. अभ्यासात्मकयोजना**–विशेषकौशलप्राप्तये इयमुपकरोति। यथा- योजनं, वियोजनं, विभाजनं, गुणनमिति गणितविषयेषु, चित्रणं, तरणं, क्रीडनमिति विषयेषु च उपकरोति। व्याकरणशिक्षणे तावदनुपमं स्थानं भजते। यथा-उच्चारणशिक्षणं, शब्दरूपाणां धातुरूपाणां कण्ठस्थीकरणं, कर्तृवाच्यप्रयोगः कर्मवाच्यप्रयोगः भाषणं इति बहुत्र ज्ञात्वाऽज्ञात्वा वा अस्यैव विधेः प्रयोगः क्रियते।

एताः चतस्रोऽपि योजनाः व्यक्तिगतरूपेण, सामूहिकरूपेण च भवितुमर्हन्ति। व्यक्तिगतयोजनायां छात्रः स्वातन्त्र्येण एकाकी भूत्वा कर्म सम्पादयति। सामूहिकयोजनायां परस्परं विचार्य सम्भूय कर्म साधयन्ति।

### (ङ) प्रयोजनविधे: गुणा:

1. अभ्यासस्य महत्त्वं बोधयति।
2. विस्तृतज्ञानं प्रापयति।
3. सामाजिकव्यवस्थापने प्रशिक्षणं ददाति।
4. विद्यालयस्य विविधविषयाणां मध्ये सम्पर्कं स्थापयति।
5. परिश्रमस्य महत्त्वं बोधयति।
6. छात्रं क्रियाशीलं कारयति।
7. मनोवैज्ञानिकतत्त्वाधारेण प्रवर्तते।
8. छात्रान् तत्त्वानि स्वयमन्वेष्टुं प्रेरयति।
9. छात्रेषु आत्मसन्तुष्टिं, आत्मविश्वासं, आत्मनिर्भरतां च वर्धयति।
10. छात्रेषु नेतृत्वगुणान् विकासयति।
11. प्रजातन्त्रभावनामभिवर्धयति।
12. तर्क-चिन्तन-विश्लेषण-विचारात्मकशक्ति: वर्धयति।
13. परस्परव्यवहार:, सहिष्णुता, नैतिकता इति गुणेषु वाच्छनीयं परिवर्तनमानयति।
14. छात्रा: तटस्था: तत्त्वज्ञाश्च भवन्ति।
15. छात्रशिक्षकयोर्मध्ये घनिष्ठसम्पर्कं स्थापयति।

### (च) प्रयोजनविधे: दोषा:

1. सर्वदा प्रयोगार्हो न वर्तते, समयसापेक्षत्वात्।
2. सर्वै: अध्यापकै: प्रयोक्तुं न शक्यते, विशेष-कौशलानामावश्यकत्वात्।
3. सर्वेभ्य: बालेभ्य: उपकाराय न भवेत्।
4. औपचारिकपाठ्यक्रमस्य समापने बाधामुत्पादयति।
5. माध्यमिकस्तरे लाभप्रदो न वर्तते।

### (छ) उपसंहार

प्रयोजनविधे: गुणदोषाणां विवेचनेन विधे: स्वरूपं स्पष्टं भवति। केचन् विधिं स्तुवन्ति, अपरे च निन्दन्ति। व्याकरणशिक्षणे सुमहान् उपयोग: वर्तते। सर्वदानेन अध्यापनं न सम्भवति चेदपि, कदाचित्कत्वेनापि अस्य प्रयोग: लाभप्रद एव। यत: छात्र: स्वयमन्विष्य व्याकरणतत्त्वानि अवगच्छति। एतेन तत्त्वं मनसि सुस्थापितं भवति। परन्तु अस्य साफल्यं शिक्षकान् उपजीव्य वर्तते। अत: अध्यापका: स्वकर्तव्यं विचिन्त्य यथोचितं, यथासम्भवं, यथाविधि: चास्य प्रयोगं कुर्यु:।

卐 卐 卐

# 23

# कुण्डलीनिर्माणम्

# Preparation of Horoscope

जन्मकुण्डली मानवानां पूर्वजन्मस्य संचित-कर्मणः मूर्तिः विद्यते। कुण्डली पूर्वजन्मनः कर्म-ज्ञानाय ताली(कुंजी) वर्त्तते। यथा विशालवटवृक्षस्य समावेशः तस्य बीजे भवति, तथैव मानवानां पूर्व-जन्म-जन्मान्तराणां कृतकर्मणां कुण्डलीमध्ये ग्रहभावादि अंकनं भवति। आस्तिकाः स्वीकुर्वन्ति, नास्तिकाः अस्वीकुर्वन्ति। ज्योतिषस्य प्रधान-उपयोगः अदृष्ट-ज्ञानं वर्त्तते। भाव-राशि-ग्रहाणां स्थितिः दृष्ट्वा फलस्य वर्णनं ग्रहाणां स्वरूपं ज्ञात्वा तस्य सम्बन्धे फलमवगन्तव्यम्।

नारदेन कथितम्-

**अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।**
**प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्रसाक्षिणौ।।**

यया विद्यया गगनस्थ-ग्रहर्क्षादीनां गति परिणाम विप्रकृष्टतादीनां निश्चयं कृत्वा पृथिव्याः प्राणिनामागताऽवस्थायाः शुभाशुभफलानां निर्णयः क्रियते तज्ज्यौतिषमिति। ते प्रति विभागाः भावेतिनाम्ना प्रसिद्धास्ते यथा-

(1) 'तनुधनसहजसुहृत्सुतरिपुजाया मृत्युधर्मकर्मायव्ययेति' द्वादशभावा भवन्ति।

(2) तत्रेष्टकाले सूर्यस्यायनांशे 'तत्काले सायनार्कस्यभुक्तभोग्यांशसंगुणात्' इत्यादीनां प्रथमलग्नसाधनं विधाय ततो नतकालज्ञानपूर्वकं लङ्कोदय-माध्यमेन प्रथमवत् दशमलग्नानयनं कृत्वा 'सषडभे लग्नखे जायातुर्यौ लग्नोनतुर्यतः'इत्यनेन ससन्धयः द्वादशभावो अवगन्तव्याः, तत्रादौ किन्नामेष्टकालः।

(3) 'सूर्योदयाद्यात कालं सावनेष्टं प्रकीर्तितम्' अर्थात्सूर्योदयकालात् जन्मकाला-वधिमिष्टकालमुक्तमाचार्येण-

### (क) तत्रेष्टकालानयनम्–

**(क) सूर्योदयात् दिवा घण्टा**–12 मिनट–59 यावत् जन्मकाले सत्येवविधं इष्टकालानयनं कार्यम्–संस्कृत(देशान्तरवेलान्तर–संस्कार–कृत्) जन्मसमयः—सूर्योदय: r 2= सावनेष्टकाल:। अर्थाद्देशान्तर–वेलान्तर–संस्कारेण संस्कृत: जन्मकाल: संस्कृत–जन्मकाल: निगद्यते। ततो संस्कृत जन्मकालात् सूर्योदयं विशोध्य सार्धद्विभिंसंगुण्येष्टकालो भवति।

**(ख) दिवा घं० 1वादनत: रात्रौ घं० 2 मि 59 यावज जन्मकाले सत्येवमिष्ट-कालसाधनं कार्यम्–**

(1) 12घं०+सं०जन्मकाल:—सूर्योदय: 2=इष्टकाल:।

**(ग) 1 वादन रात्रित:सूर्योदयकालमध्ये जन्मनि सत्येवमिष्टं साध्यम्-**

(1) 24घं0–सूर्योदय +सं०जन्मकाल 2=सावनेष्टकाल:।

(2) विशेष:—(क) सूर्योदये इष्टकाल: शून्यसमम्, (ख) मध्याह्ने दिनार्द्धसममिष्टकाल:, (ग) सूर्यास्ते दिनमानसममिष्टम्, (घ) निशीथे मिश्रमानतुल्यमिष्टम्,

### (ख) भयातभभोगानयनम्-

"नक्षत्रारम्भत: स्वेष्टकालं यावत् गतं भवेत्। घट्यादिकं भयातं स्यात्भस्य भोगो भभोगक:।।" इति स्पष्टमेव।

(1) 60घटी–गतर्क्षम्+इष्टकाल:=भयातम्।

(2) इष्टदिने इष्टकालात्पूर्वमेव गतर्क्षे प्राप्ते सति इष्टकाल:—गतर्क्षम् =भयातम्।

(3) 60घ०–गतर्क्षम् +निजर्क्षम् =भभोग:।

**यतोहि–**

**गतर्क्षनाड़ीखरसेषु शुद्धा सूर्योदयादिष्टघटीषु युक्ता।**
**भयातसंज्ञा भवतीह तस्य निजर्क्षनाड़ीसहिता भभोग:।।**

(क) क्षयावसरे पूर्वापरनक्षत्रमानवगत्य पूर्वविधिना भयातभभोगयो: साधनं कार्यम्।

(ख) वर्त्तमान–नक्षत्रस्यवृद्धत्वे सति वर्त्तमान–नक्षत्रस्याखिलमानामानयनं विधाय पूर्ववत् भयात भभोगानयनं कार्यम्।

**यथोक्तञ्च–**

**गतर्क्षघटिकाखाङ्गशुद्धास्वेष्टघटीयुता ।**
**भयातं स्याद् भभोगस्तु निजर्क्षघटिका युता।।**
**चेद्यातर्क्षघटीस्वेष्टात्पूर्वमेव समाप्यते।**
**तदेष्टकालात्सा शोध्याऽवशिष्टं भगतं भवेत्।।**
**गतर्क्षं क्षयसंज्ञं चेत्कार्येतर्क्षघटी तदा।**
**तत्पूर्वर्क्षघटीयुक्ता शेषं पूर्ववदाचरेत्।।**

एवं भद्वौंभयातादि विज्ञेयं स्वधिया बुद्धैः।
एवं भयात भभोगयोःसाधनं विज्ञेयम्।।

## (ग) ''महादशानयनम्''

कृत्तिकातः जन्मर्क्षं यावद् गणयेत्, नवभिः विभजेत् एकादिशेषे सति क्रमेण सूर्य-चन्द्र-कुज-राहु-गुरु-शनि-बुध-केतु-शुक्रानां दशा ज्ञेया। एतेषां ग्रहाणां दशाऽब्दाः क्रमेण षड्-दश-सप्त-अष्टादश-षोडश-एकोनविंशति-सप्तदश-सप्तविंशतिमिताः ज्ञेया। यथोक्तञ्च केनचिदाचार्येण-

गणयेत्कृत्तिकाभाच्च यावद्वै जन्मभावधिः।
नवभिस्तुहरेद्भागं शेषं ग्रहदशा भवेत्।।

आचङ्कराजीशबुकेशु पूर्वाः
क्रमाद् भवेयुः स्वदशाधिनाथः।।
''रसा(6) आशा(10) शैला(7) वसुविधुमिता(18) भूपतिमिता (16)।
(19) नवेलाशैलेला(17) नगपरिमिता(7) विंशतिमिता(20)।।

अपिच जन्मपत्रदीपके-

स्युः कृत्तिकानवकत्रिकभेरवीन्दु भौमागुजीवशनिविच्छिखिभार्गवाणाम्।।
षट्दिङ्नगेभविधु-भूप-नवेन्दु-शैल-भूधरानखमिताः क्रमतो दशाब्दाः।।

## (घ) ''अथ भुक्तभोग्यानयनम्''

भयातंदशाब्दैर्गुणयेद् भभोगैर्भजेल्लब्धिवर्षम् विज्ञेयम्।
शेषं द्वादशभिर्गुणयेत् भभोगैर्भजेल्लब्धिःमासम्।
ततः शेषंखाग्निभिर्गुणयेत् भभोगैर्भजेल्लब्धिःदिनम्।
ततः शेषं षष्ट्या गुणियेद् भभोगैर्भजेल्लब्धिः दण्डः।
पुनःशेषं षष्ट्या गुणितं भभोगैर्भक्तं जाता लब्धिःपलानि।
एवम् भुक्तवर्षमासदिनदण्डपलानिजातानि।
दशावर्षेषुशुद्धाःभुक्ताब्दादयः भोग्याब्दाः बोध्याः।।
भयातमानेनहतादशाब्दाः भभोगमानेन हृताःफलं स्यात्।
समादिकं भुक्तमनेन हीनं-दशामितिर्भोग्यमितिः स्फुटा स्यात्।।
ततः प्रभृत्येव दशा फलानि प्रकल्पनीयानि बुधैर्ग्रहाणाम्।
शेषादर्क गुणामासाःशेषात्त्रिंशद्गुणादिवा।
शेषात्षष्टि गुणानाड्यःशेषात्षष्टिगुणापलाः।।

''स्पष्ट ग्रहानयनम्''

(1) तत्र गतिः—दिनद्वयग्रहान्तरं गतिश्चेत्यनुसारेण पञ्चाङ्गस्थ दैनिक स्पष्ट ग्रहाणां दिनद्वयस्यान्तरेणगतिर्भवति।

(2) ततोचालनंसाधयेत् तत्र चालनं द्विविधं धनमृणञ्च। इष्टकालात् पंक्त्याधिक्ये (दिनमान+रात्र्यर्ध) सति तयोरन्तरमृणम्, इष्याधिक्ये तयोरन्तरं धनम् ज्ञेयम्। यथा हि-

(3) ''पङ्क्त्याधिक्ये यातसंज्ञमैष्यमिष्याधिक्ये भवेत्।'' अपिच-

(4) स्वेष्टकालो यदाऽग्रेस्यात्पङ्क्तीश्चशोधयेद्धनम्।
पङ्क्तीश्चैव यदाऽग्रेस्यादिष्टं च शोधयेदृणम्।।

अपिच-

(5) ग्रहणाख्यं चालनं ज्ञेयमग्रपङ्क्तीष्टकालयोः।
अन्तरं तु धनाख्यंस्यात्पृष्ठपङ्क्तीष्टकालयोः।।

## (ङ) अथग्रहसाधनम्

ऋणधनचालनात् ग्रहस्य गतिं संगुण्य खरसै (60) र्भक्तंयल्लब्धं तत् ग्रहस्य फलम्। तं स्फुटग्रहेषु शोध्यं योज्यन्तदा मार्गि-ग्रहाणामिष्टकालाद्राराश्यादि जायते। वक्रीग्रहराहुकेतुषु व्यत्ययेन अर्थादृणचालने योज्यं धनचालने च शोध्यन्तदा स्पष्ट ग्रहः जायते। यथाहि-

**यातैष्यकालेन दिनादिकेन निघ्नी गतिः खाङ्गहृताप्त भागाः।**
**शोध्याश्च योज्याःस्फुट खेचरेषु पाते तथावक्रखगेप्रतीपम्।।**
**अनेनविधिना चन्द्रं विहाय सूर्यादि ग्रहाणां साधनं कर्त्तव्यम्।**

## (च) अथचन्द्रसाधनम्

**जन्मपत्र दीपके एवं भणितम्**-भयातं भभोगाद्घृतं (भभोगात्+हृतम्) ततो गतर्क्षैर्युक्तं खवेदैः संगुण्यत्रिभिर्भक्तं तदा अंशादि स्पष्ट चन्द्रः जायते। ततो अंशस्थाने त्रिंशद्भि- र्विभक्तिंजातां लब्धिः राशिः शेषमंशमतो राश्यादिस्पष्ट चन्द्रः। ततां खाभ्रेमनागाशिबनोभोगभक्ते सति चन्द्रस्य गतिर्विज्ञेया।

**ताजिकनीलकण्ठ्याम्**

**भयातं भभोगाद्घृतं तद्गतर्क्षैर्युतं खाब्धिनिध्नं विभक्तं क्रमेण।**
**फलं भागपूर्वः शशीःतद् गतिःखाभ्रखाभ्रेभनागाश्विनोभोगभक्ताः।।**

**चन्द्रसाधनस्यान्यारीतिरपि उद्घाट्यते**-भयातं षष्ठ्यागुणितं भभोगेन विहृतं लब्धौ खरसैर्गुणितं गतर्क्षं योजयेत्ततो द्विनिघ्नीकृत्वा नवभिर्हरेत्तदा अंशादि स्पष्ट चन्द्रः निष्पद्यते। गतिस्तु पूर्वोक्तं रीत्या एव आनयेत्। उक्तं च-

**खषडघ्नंभयातं भभोगोद्धृतं तत्खतर्कघ्नधिष्ण्येषु युक्तं द्विनिघ्नम्।**
**नवाप्तं शशीभाग पूर्वस्तुभुक्तिः खखा भ्राष्टवेदाः भभोगेनभक्ताः।**
**अनेन विधिना सूर्यादयो सर्वेग्रहाः साधनीयाः।**

## (छ) ''अथ लग्नानयनम्''

तत्र लगतीति लग्नम् इति व्युत्पत्त्या इष्ट काले प्राक् क्षितिजे क्रान्तिवृत्तस्य यः प्रदेशः

लग्नस्तदेव लगनम्। तत्र ध्रुवस्थानाज्जिनांशेन चतुर्विशंत्यंशेन व्यासार्धेन यद्वृत्तं तत्कदम्ब वृत्तं। कदम्ब-वृत्ते कदम्ब-तारा:भ्रमन्ति। ततः कदम्बान्नवत्यंशेन व्यासार्द्धे यद्वृत्तं तत्क्रान्ति वृत्तम्।

अयनांशेन शाकम् सूर्यः सायनार्कः। सायनार्कस्यभुक्तभोग्यांशं स्वदेशीय राश्युदयमानैर्गुणितं अभ्राग्निभिः (30) आप्तं लब्धं भुक्तभोग्यकालौबोध्यौ। तत्र कदा भुक्तरीत्या कदा च भोग्यरीत्या लग्नानयनं कार्यमेतत्सम्बन्धे एवमुक्तम्-

**लग्नं सूर्योदयादिष्ट-दण्डैर्भोग्य-प्रकारतः।**
**षष्टि शुद्धेष्ट-दण्डैस्तु साध्यं भुक्तप्रकारतः।।**

भुक्तद्वारालग्नानयने सति षष्टि दण्डे इष्टं त्यजेत्तस्य पलैः भुक्तकालन्त्यजेत्ततो व्युत्क्रमेण राश्युदयमानान्यपि त्यजेत्। यन्नशुद्धं तदशुद्ध संज्ञकं बोध्यम्। शेषं त्रिंशद्भिः संगुण्य अशुद्धराशेर्मानेनाप्ते यल्लब्धमंशादिकं जायते तदशुद्धराशौ शोधयेत्। अयनांशमपिविशोधयेत्तदा भुक्तरीत्या प्रथमलग्नं जायते।

भोग्यरीत्या भोग्यांशमिष्ट-पलैर्विशोध्यमग्रिमराश्युदयमानानित्यजेयुस्ततो यद्राशिमानं न शुद्धं तदशुद्धसंज्ञकं भवति। ततः ऐषं मिंशद्भिः संगुण्या-शुद्धेनाप्तं यल्लब्धं तच्छुद्ध राशौ योज्यमयनांशेनवियुक्तन्तदा भोग्यरीत्या प्रथम लग्नम् जायते। प्रथमलग्ने षड्राशिर्युक्ते सति सप्तमलग्नं जायते। सुगमरीत्या बोधनाय एवमुपस्थाप्यते-

तात्कालिकार्क+अयनांशः=सायनार्कः। सायनार्कस्यभुक्तांश। भोग्यांशस्वोराश्युदयमानम् 30=लब्धिः—भुक्त भोग्यकालः। भुक्तप्रकारे-(60घ-इष्टकालः) =फलम्। पलात्मकफलम्-भुक्तकालः=फलम्। फलम्-गतराश्युदयमानम् = शेष। एवमग्रेऽपि यथोक्तवत् कार्यम्।

## (ज) ''नतसाधनम्''

रात्रेः अवशिष्ट घट्यादिकम् (60-इष्टकालः) दिनार्धेन युतं पूर्वनतम्, रात्रेः गतघट्यादिकं दिनार्धेन युतं पश्चिमनतं बोध्यम्। पूर्वाह्णे जन्मनि सति दिनगतघट्यादिकं दिनार्धात् विशोधनेन पूर्वनतम् अपराह्णे (दिन) जन्म सति दिनशेषघट्यादिकम् (दिनमान-इष्टकालः) दिनार्धात् विशोधनेन पश्चिमनतम् बोध्यम्। त्रिंशच्च्युते पूर्वनते पूर्वोन्नतम्, त्रिंशच्च्युते पश्चिमनते पश्चिमोन्नतम् भवति। सुगमसाधनार्थं एवं कथ्यते-

रात्र्यर्धात्पश्चाज्जन्मसति (60 घटी-इष्टकालः = रात्रिशेषघटी), रात्रिशेषघटी+दिनार्धम् = पूर्वनतम्। रात्र्यर्धात्पूर्वजन्मनि सति-रात्रिगतघटी+ दिनार्धम् =पश्चिमनतम्।

पूर्वाह्णेजन्मनिसति-दिनार्ध-दिनगतघटी = पूर्वनतम्,

अपराह्णे जन्मसति- दिनार्ध-दिनशेषघटी = पश्चिमनतम्।

30 घटी-पूर्वनतम् = पूर्वोन्नतम्।

30 घटी-पश्चिमनतम् =पश्चिमोन्नतम्।

30घटी इष्टकालः =दिनशेषघटी।

पूर्वोन्नतघटीषड्राशियुक्त सूर्यत: लङ्कोदयमानै: लग्नसाधनवत् दशम लग्न साधनं कुर्यात् अर्थात् पूर्वोन्नतकालं इष्टकालमवगम्य सायनसूर्येषड्राशिर्युक्ते सति प्रथमवद्दशमलग्नं साध्यम्। दशमे षड्राशियुक्ते चतुर्थलग्नं जायते। अनेन प्रथम-चतुर्थसप्तम-दशमलग्नानि जायन्ते।

### (झ) ''भावानयनम्''

सप्तमलग्नोनदशमलग्नस्य तृतीयांश: स्थानद्वये स्थाप्य: एकत्रैकेन गुणितोऽन्यत्र द्वाभ्यां संगुणित: कार्य:। पृथक् पृथक् लग्नेयोज्यस्तदा क्रमेण द्वितीय तृतीयभावौ भवत:। द्वाभ्यां विहीन: तृतीयांश: एकत्रैकेनान्यत्र च द्वाभ्यां संगुण्य पृथक् पृथक् चतुर्थभावे योज्यस्तदा क्रमेण पञ्चषष्ठत्भावौभवतर्थात् एकेन गुणितंतृतीयांशं चतुर्धभावे युक्ते सति पञ्चमभाव: द्वाभ्यां संगुणितृतीयांशं चतुर्थभावे संयोजिते सति षष्ठभाव: जायते। अनेन षडभावानयनं जातम्।

षड्राशिसहिता: प्रथमादिषष्ठभावा: क्रमेण सन्तमादि द्वादशभावा: जायन्ते अर्थात् द्वितीयभावे षड्राशि समन्विते सति अष्टमभाव: तृतीये षड्राशियोजनेन नवमभाव: पञ्चमभावे षड्राशियुक्ते सति एकादशभाव:, षष्ठभावे षड्राशि सहिते सति द्वादशभावा: जायन्ते। सन्धि- र्द्वियोर्गोर्धित: अर्थात् द्वयोरासन्नवर्ति-भावयोर्योगोर्धित: सन्धिर्भवति। प्रथमद्वितीय भावयोर्योगे द्वाभ्यां विभक्ते सति प्रथमभावस्य सन्धि: द्वितीयतृतीयभावयोर्योगे द्वाभ्यां विभाजिते द्वितीयभावस्यसन्धिरेवम् तृतीयादिभावानां सन्ध्यानयनं कर्त्तव्यम्। सन्धिषु अवस्थिता: ग्रहा: शून्यं फलं भावेष्ववस्थिता: ग्रहा: पूर्णं फलं प्रयच्छन्ति।

### (ञ) सुगमार्थमेवं बोध्यम्-

दशमभाव:—सप्तमभाव: = शेष:, शेष÷3=फलम्।

(फलम् × 1) +प्रथमलग्नम् =द्वितीयभाव:।

(फलम् × 2) +प्रथमलग्नम्=तृतीयभाव:।

(2) राशि-फलम्= शेषफलम्।

(शेषफलम् × 1) +चतुर्थभाव:(लग्नम्) =पञ्चमभाव:।

(शेषफलम् × 2) +चतुर्थभाव:(लग्नम्) =षष्ठभाव:।

द्वितीयभाव+6राशि:=अष्टमभाव:।

तृतीयभाव:+6राशि=नवमभाव:।

पञ्चमभाव+6राशि =एकादशभाव:।

षष्ठभाव:+6राशि= द्वादशभाव:।

प्रथमभाव:+द्वितीयभाव:÷2=प्रथमभावस्यसन्धि:।

द्वितीयभाव+तृतीयभाव:÷2= द्वितीयभावस्यसन्धि:।

तृतीयभाव:+चतुर्थभाव:÷2= तृतीयभावस्यसन्धि:।

चतुर्थभाव:+पञ्चमभाव:÷2= चतुर्थभावस्यसन्धि:।

पञ्चमभाव:+षष्ठभाव:÷2= पञ्चमभावस्यसन्धि:।

षष्ठभाव:+सप्तमभाव: =÷2 षष्ठभावस्यसन्धि:।

प्रथमभावस्यसन्धि: +6राशि:= सप्तमभावस्यसन्धि:।

द्वितीयभावस्यसन्धि:+6राशि:= अष्टमभावस्यसन्धि:।

तृतीयभावस्यसन्धि:+6राशि:= नवमभावस्यसन्धि:।

चतुर्थभावस्यसन्धि:+6राशि:= दशमभावस्यसन्धि:।

पञ्चमभावस्यसन्धि:+6राशि:= एकादशभावस्यसन्धि:।

षष्ठभावस्यसन्धि:+6राशि:= द्वादशभावस्यसन्धि:।

अनेनविधिना जातकस्यजन्मकालात् इष्टकाल–भायात–भभोग–ग्रहदशा–स्पष्टग्रह–प्रथमलग्न–ननोन्नत–दशमलग्न–ससन्धि: द्वादशभावानयन प्रकारा: सम्यक्तया विवेचित:।

अत: परं द्वादशकोष्ठात्मकं जन्माङ्ग चक्रं निर्माय यथास्थानं कोष्ठे लग्नं संस्थाप्य ये ग्रहा: यस्मिन् राशौ अवस्थिता: भवेयु: तान् तत्र स्थापयेत्। एवं जन्मकुण्डली निर्माणं जायते। ततो ग्रहाणां दृष्टि–स्थान–बल–कालबल–दिग्बल–मित्रसम–शत्रु–उच्चनीचादि विभिन्न स्थितीनां विमर्शं विधाय शुभाशुभफलानां विचार: करणीय:।

卐 卐 卐

# 24

# चित्राणां प्रतिकृतीनामन्येषां च श्रव्य-दृश्योपकरणानामुपयोगः

# Use of Audio-Visual Aids Such as Charts, Models etc.

## (क) स्वरूपम्

संस्कृतशिक्षणे संचारसाधनानां योगदानम् अन्यधिकं वर्त्तते।अद्य अधिकाधिक सूचनाः कस्यापि राष्ट्रस्य विकासस्य मेरुदण्डं सञ्जाताः। उपग्रहाः आकाशे विचरणं कुर्वन्नः सूचनानाम् आदानप्रदानयोः सहायकाः भवन्ति। एतादृशस्थितौ संस्कृत शिक्षणपरम्परासु परिवर्तनं परिवर्द्धनस्यापेक्षितं वर्त्तते। अत्र नवीनतमदृश्यश्रव्यसाधनानाम् अधिकाधिकोपयोगं कर्त्तव्यं येन शिक्षणं रुचिकरम्, आकर्षकं, सुग्राह्यञ्च भवेत्। प्रो० जे. जे. देबर महोदयः कथयति यत्-ज्ञानस्य 40%संकल्पनाः चाक्षुषेन्द्रियद्वारा, 25% श्रवणकौशलद्वारा, 18% स्पर्शानुभवद्वारा प्राप्तिः भवति। प्रो० पी. जे. रुलोन् महाशयेन प्रमाणितं यत् दृश्यं-श्रव्योपकरणानां माध्यमेन 38% स्मरणशक्तेः वृद्धिः भवति।

## (ख) 'यूनिसेफ' इत्यस्याध्ययनाधारेण-

| वयं कथं जानीमः | | वयं कथं स्मरामः | |
|---|---|---|---|
| आस्वाद्य | 1% | पठित्वा | 10% |
| स्पृष्ट्वा | 2% | श्रुत्वा | 20% |
| घ्रात्वा | 3% | दृष्ट्वा | 30% |
| श्रुत्वा | 11% | दृष्ट्वा श्रुत्वा च | 50% |
| दृष्ट्वा | 83% | कथयित्वा | 30% |

उपर्युक्तसारिणी द्वारा स्पष्टं भवति यद् अधिगमप्रक्रियायां दृश्यश्रव्योपकरणानां विशेषभूमिकास्ति।

ज्ञानेन्द्रियानुभवे नैव कस्यापि वस्तुनः अथवा कस्या अपि क्रियायाः मानसिक चित्रस्य निर्माणं भवति। अतः ज्ञानस्य प्रत्यक्षीकरणाय मूर्त्तता सम्पादनाय च एतादृशानां शैक्षिकोपकरणानाम् आवश्यकता महत्ता च स्वयमेवसिद्धा, येषां माध्यमेन वस्तुनः क्रियायाः भावस्य विचारस्य च बिम्बग्रहणं सम्भवेत्। दृश्यश्रव्यसाधनानि शिक्षणस्य एका एतादृशी सहायिका सामग्री ये सौलभ्यात् सूक्ष्मतां प्रति गच्छतां छात्राणां ज्ञानं पोषयितुं बलं प्राप्यते। दृश्यसाधनानां प्रयोगः शिक्षणं रुचिकरं कर्त्तुं प्राचीनकालादेव क्रियमाणोऽस्ति। ज्योतिषशास्त्रशिक्षणे छात्रेभ्यः वेदीनिर्माण-नवग्रहनिर्माण-अक्षरानुसारराशि-ज्ञानम् यन्त्रनिर्माणादि प्रक्रिया-बोधनाय तालपत्रेषु विलिखितानां रेखाचित्राणां प्रयोगः विहितः। सम्प्रति राष्ट्रियाध्यापक परिषद्-अपि एतस्योपरिबलं दत्तं, यत् शिक्षक प्रशिक्षणमहाविद्यालयेषु दृश्यश्रव्यसाधनानां प्राचुर्येण संग्रहो भवेत् तथा प्रशिक्षणार्थिभ्यः प्रशिक्षणकाले एषाम् उपकरणानां प्रयोगस्य समुचितप्रशिक्षणं दातव्यं येन ते शिक्षकाः भूत्वा एषामुपकरणानां प्रयोगं कृत्वा स्वशिक्षणं रुचिकरं कर्त्तुं शक्नुयुः।

## (ग) दृश्यश्रव्योपकरणानां वर्गीकरणम्-

**(क) परम्परागतसहायकोपकरणानि**-पाठ्यपुस्तकानि, श्यामपट्टः, सजीव पदार्थः। **(ख) शैक्षिकप्रविधिक्या उपागमानामाधारेण**-(1) सूक्ष्म(मृदु) उपागम (Software Approach) समाचारपत्राणि, पत्रिकाः, शैक्षिकक्रीडा, आकर्षकपत्राणि/फ्लेशपत्रकम् (2) स्थूल-उपागमः—(Hard ware Approach) दूरदर्शनम्, ध्वनिग्राहकयन्त्रम्, सङ्गणकः (Computer) इत्यादीनां साधनानां प्रयोगःकरणीयः।

**(ग) क्रियात्मक अन्यानि च सहायकोपकरणानि**- शैक्षिकभ्रमणम्, विद्यालयप्रदर्शिनी, अभिनयः, पत्रपत्रिकाः आदि।

**(घ) इन्द्रियाणां प्रयोगस्याधारेण**-(1) दृश्यसाधनानि-2 (2) श्रव्यसाधनानि (3) दृश्यश्रव्यसाधनानि सामान्यसाधनानि यान्त्रिकसाधनानि

| | | | |
|---|---|---|---|
| श्यामपट्टः | चित्रविस्तारकयन्त्रम् | आकाशवाणी | दूरदर्शनम् |
| चित्राणि | Epidiascope | ग्राहक(ग्रामोफोन) यन्त्रम् | श्रव्यदृश्याभिलेख |
| मानचित्राणि | प्रेक्षपणयन्त्राणि | ध्वन्यभिलेखः | अभिनयः |
| रेखाचित्राणि | उन्नतशीर्षप्रक्षेपिका | सीतावाद्यम् | चलचित्रम् |
| पत्रकम्(Chart) | प्रोजेक्टर | Linguaphone | सङ्गणकः |
| प्रतिकृतिः | आकृतिविस्तारकयन्त्रम् | भाषापञ्जिका | भाषाप्रयोगशाला |
| भित्तिपत्रिका | स्टिरियोस्कोप | दूरस्थशिक्षणम् | अन्तर्जालप्रणाली |
| पत्रपत्रिकाः | | दूरस्थसम्मेलनम् | E-Mail |
| पाठ्यपुस्तकम् | | | www |
| संग्रहालयः | | | |

## (घ) दृश्यश्रव्योपकरणानां प्राधान्यता-

(1) कक्षाशिक्षणे श्रव्यदृश्योपकरणानि छात्रेषु पठनाशक्तिं वर्धयन्ति।

(2) कक्षापरिवेशं चैतन्यवन्तं, उत्साह-भरितं च भवति।

(3) पाठे छात्राणाम् अवधान-सोपाने श्रव्यदृश्योपकरणानि नितरां सहकुर्वन्ति।

(4) छात्रा: सर्वदा सक्रिया: तिष्ठन्ति।

(5) अधीतो विषय: बहुकालं मनसि तिष्ठति।

**(विस्तृतविवेचनं दृश्यश्रव्योपकरणानां विषये 123-128 पृष्ठे पश्यन्तु)**

## (ङ) ज्योतिषशास्त्रशिक्षणे दृश्यश्रव्योपकरणानां प्रयोगक्रम

**(1) राशिविवेचनम्-**

मेषो(1) वृषोऽथ(2) मिथुनं(3) कर्कट:(4) सिंह(5) कन्यके(6)

तुलोऽथ(7) वृश्चिको(8) धन्वी(9) मकर:(10) कुंभ(11) मीनकौ(12)

**अक्षरानुसारराशिज्ञानमेवं च काल-पुरुषस्य अङ्गानि-**

शीर्ष(1) मुख(2) बाहू(3) हृदयोदराणि(4.5) कटि(6) वस्ति(7) गुह्य(8) संज्ञानि।

उरु(9) जानु(10) जङ्घे(11) चरणाविति(12) राशयोऽजाद्या:।।

**कालनरस्यावयवान् पुरूषाणां चिन्तयेत्प्रसवकाले।**
**सदसद् ग्रह-संयोगात्पुष्टा: सोपद्रवास्ते च।।**

(लघुजातके राशिशीलाध्याये प्रथमे)

| | | |
|---|---|---|
| 1 मेष | चु चे चो ल लि लु ले लो अ | (शिर:) |
| 2 वृष | ई उ ए ओ व वि वु वे वो | (मुखम्) |
| 3 मिथुन | का कि कु घ ङ छ के को ह | (स्तनमध्ये) |
| 4 कर्क | हि हु हे हो ड डि डु डे डो | (हृदय:) |
| 5 सिंह | म मि मु मे मो ट टि टु टे | (उदरम्) |
| 6 कन्या | टो प पि पु ष ण ठ पे पो | (कटि:) |
| 7 तुला | र रि रु रे रो त ति तु ते | (तुन्दं /पेड़ू) |
| 8 वृश्चिक | तो न नि नु ने नो य यि यु | (लिङ्गम्) |
| 9 धनु | ये यो भ भि भु ध फ ढ भे | (जङ्घा) |
| 10 मकर | भो ज जि खि खु खे खो ग गि | (गुल्फ:/घुटना) |
| 11 कुम्भ | गु गे गो स सि सु से सो द | (छावा) |
| 12 मीन | दि दु थ झ ञ दे दो च चि | (चरण:/पैर) |

( 2 ) पञ्चाङ्गफलम्-

तिथिर्वारञ्च नक्षत्रं योगः करण एव च।
पञ्चस्वेतेषु शुद्धेषु समयःशुद्ध उच्यते।।
तिथेश्च श्रियमाप्नोति वारादायुष्यवर्द्धनम्।
नक्षत्रात् पापहानिः स्यात् योगाद् रोगनिवारणम्।
करणात् कार्यसिद्धश्च पञ्चाङ्गफलमुच्यते।।

( 3 ) समयशूलचक्रम्

| पूर्व | प्रातःकाल |
|---|---|
| पश्चिम | सायंकाल |
| उत्तर | अर्धरात्रि |
| दक्षिण | मध्याह्नकाल |

उषःकालो विनापूर्वां गोधुलिः पश्चिमां विना।
विनोत्तरां निशीथः सन् याने याम्यां विनाऽभिजित्।

( 6 ) नक्षत्रायुः

जन्मनक्षत्रस्य भुक्तघटिकान् चतुर्भिः गुणयित्वा त्रिभिः विभाजिते सति यः लब्धः स्यात् तम् शतेन घटितसंख्या नक्षत्रायुः भवति। यथा-(भक्त घटी×4÷3-100)

**भुक्तनक्षत्रम्-12/10**

12 (10×4=48) 40÷3=

$$=\frac{146}{9}=16\frac{2}{9}\times 12=\frac{8}{3}=2\frac{2}{3}\times 30=20$$

**16220—100=16220 नक्षत्रस्पष्टायुः 83210**

**(7) वारक्रमः—**

मन्दादधःक्रमेण स्युश्चतुर्था दिवसाधिपाः।
वर्षाधिपतयस्तद्वत् तृतीयाश्च प्रकीर्तिताः।।
ऊर्ध्वक्रमेण शशिनो मासानामधिपा स्मृताः।
होरेशाःसूर्यतनयाद् अधोऽधः क्रमशस्तथा।।

**( 8 ) कक्षायां ग्रहाणां क्रमः—**

| | |
|---|---|
| शनिकक्ष | गुरुकक्ष |
| मंगलकक्ष | सूर्यकक्ष |
| शुक्रकक्ष | बुधकक्ष |
| चन्द्रकक्ष | |

卐 卐 卐

# 25

# दर्शनशास्त्रशिक्षणम्

# Teaching of Philosophy

## दर्शनशास्त्रम्
## Philosophy

**(क) दर्शनशब्दस्यार्थः परिभाषा च**

दर्शन-शब्दोऽयं संस्कृतस्य प्रेक्षणार्थकाद् दृश् धातोः(दृशिर् प्रेक्षणे) ल्युट् प्रत्यये अनादेशे च कृते दर्शनम् इति सिद्धम्। 'दृश्यते अनेन इति दर्शनम्' उपनिषत्सु सत्यस्य दर्शनाय दृश् धातोः प्रयोगोऽभवत्। अर्थात् ज्ञानचक्षुषा यद् आत्मेत्यादि अलौकिकं वस्तु गृह्यते तद् दर्शनम्। अलोकिकं आत्मादितत्त्वं (आत्मा, स्वर्ग, मुक्ति, प्रभृत्ति वस्तु) येन तद् दर्शनम्।

(क) येन साधनेन इदं विश्वम्, इदं वस्तुजातम्, ब्रह्म, जीवात्मा, प्रकृतिश्च, यथातथ्येन दृश्यते निरीक्ष्यते परीक्ष्यते समीक्ष्यते विविच्यते च यत्र तद् दर्शनम्।"

(ख) समग्रमपि आध्यात्मिकम् आधिभौतिकं च विवेचनं दर्शन-शब्दान्तर्गतं भवति।

(ग) दर्शनम् इत्यस्य आङ्गलपदं भवति Philosophy इति। इदं च Philosophy इति पदं यूनानी (Greek) Philos, Sophia इति पदद्वयेन निष्पन्नम्। यस्य च अर्थः— Philos=Love, Sophia= Wisdom भवति। एवञ्च सारांश रूपेण वदामः चेत् 'Love of Wisdom' 'विद्यानुरागः' इति दर्शनस्य अर्थः भवति।

(घ) केचन दार्शनिकाः वदन्ति यत्-Philosophy इति पदं लैटिन(Latin) भाषातः Phil+sophy इति पदद्वयं स्वीकृत्य आगतम् अस्ति। यस्यार्थः—Phil= Principle तत्त्वम्, Sophy=Science शास्त्रम् इति भवति। एवञ्च Philosophy इत्यस्य अर्थः 'तत्त्वशास्त्रम्/तत्त्वविज्ञानम् Principles of Science इति।

(ङ) 1. किं ब्रह्म? 2. तस्य किं स्वरूपम्? 3. कः ईश्वरः? 4. के तस्य प्राप्तेरुपायाः? 5. अस्मिन् जगति किं शाश्वतं तत्त्वम्? 6. इयं सृष्टिः कुतः आविर्वभूव? 7. जीवात्मनः किं

स्वरूपम्? 8. कः पुनर्जायते? 9. किं लिङ्गशरीरम्?10. जीवनस्य कुत उद्भूतिः? 11. किं तस्य लक्ष्यम्? 12. कथं मोक्षावाप्तिः? 13. आत्मा चेतनोऽचेतनो वा? 14. कः सृष्टेः कर्ता? 15. किं जीवनस्य कर्त्तव्यम्? 16. कश्च जीवनस्य साधिष्ठः पन्थाः? इत्यादयोऽनुयोगाः सूक्ष्मातिसूक्ष्मेण यत्र विविच्यन्ते तद् दर्शनम्।

(च) ऋषयः स्वाऽलौकिक चक्षुभिरवलोकितानां तत्त्वानां यान् उपदेशग्रन्थान् निर्मीमिरे, तेषामेव नाम दर्शनम्।

(छ) दर्शनं सामाजिक चेतनायाः रूपमस्ति। अत्र व्यक्तित्वस्य बोधस्य च, साधारण-विधीनां विषये, चिन्तनानां व्यक्तीनां च सम्बन्धे संकल्पाः सन्ति। इदं दर्शनम् एक प्रकारकं विज्ञानमस्ति, परमिदं विशिष्टप्रकारकं विज्ञानं वर्त्तते। यः प्रकृतेः समाजस्य च, विचारणीयविधीनाञ्च अध्ययनं करोति एतदर्थम् अस्य मुख्यानि समाजिक प्रकरणानि, विशिष्टैः विज्ञानैः सह तुलनां कृत्वा सम्यक् प्रकारेण विचारणीयानि सन्ति।

(ज) दर्शनशास्त्रस्य अध्ययनेन जगतः ईश्वरस्य, जीवस्य, मायायाः प्रकृतेश्च ज्ञानं भवति। एतदतिरिक्तं सत्यासत्ययोः शरीरस्य, इन्द्रियसमूहस्यापि अनेन ज्ञानं भवति। एवं च पदार्थेषु संसारस्य मूर्ताऽमूर्त दृष्टाऽदृष्यदयः सर्वेऽन्तर्भवन्ति। इदं जगत् पदार्था वा जीवानां कृते दुःखानां कारणम् अस्ति। एभ्यो दुःखेभ्यो मोक्षो मुक्त्या सर्वदुःख-निवारणेन वा सम्भवः। कार्यकारणयोः तत्त्वज्ञानं दर्शनेनैव भवितुं शक्यते।

(झ) मनुष्यः स्वभावतो मननशीलः प्राणी विद्यते, मत्या कर्माणि सीक्यतीति तन्निरुक्तिरपि पूर्वोक्तानुकूला, सा हि कोऽहं कस्मादहमित्यादि समस्याः सततं भावयित्वा "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति दर्शनवीजमुदभावितवती। दर्शनस्योदयो वेदकालाद् एव अजायत। दर्शनं द्विविधं आस्तिकं नास्तिकं चेति।(1) तत्र अस्ति दिष्टम्, अस्ति वेदप्रामाण्यम्, अस्ति ईश्वरो वा, इति मतिर्यस्य सः आस्तिकः।(2) नास्ति दिष्टम्, नास्ति वेदप्रामाण्यम्, नास्ति ईश्वरो वा, इति मतिर्यस्य सः नास्तिकः। आस्तिक विचारकानि वैदिकानि दर्शनाानि, नास्तिक विचारकानि अवैदिकानि दर्शनानि इति व्यवह्रियते।

**( ख ) दर्शनशास्त्रस्य प्रकाराः**

**( 1 ) वैदिक ( आस्तिक ) दर्शनानि षट्**-(क) न्यायदर्शनम्, (ख) वैशेषिक दर्शनम्, (ग) सांख्य-दर्शनम्, (घ) योग-दर्शनम्, (ङ) पूर्वमीमांसा-दर्शनम्, (च) उत्तर मीमांसा-दर्शनम्।

**( 2 ) अवैदिक( नास्तिक ) दर्शनानि त्रीणि**- (छ) चार्वाकदर्शनम्, (ज) बौद्ध दर्शनम्, (झ) जैन दर्शनम्, (नास्तिको वेद निन्दकः, ते मन्यन्ते-"त्रयोवेदस्य कर्तारो भण्ड-धूर्त-निशाचराः) (ञ) पाश्चात्यदर्शनम्।

**( ग ) न्यायदर्शनम्**

न्यायशास्त्रं अतिप्राचीनम्, अस्य प्रवर्त्तकः सूत्रकार गौतमः 500 ई०पू० समयेऽजायत।

गौतम प्रवर्तितं न्यायशास्त्रं पदार्थ-मीमांसाशास्त्रम्। षोडशपदार्थश्चाभ्युपगता:प्रमाणप्रमेयाद्या:। वात्स्यायनस्योदयकालो ब्राह्मणधर्म-बौधधर्मयो: सङ्घर्षस्य समय: आसीत्। वाचस्पतिमिश्र: न्यायवार्तिकतात्पर्ये तदीयमपि मतं विस्तारेण गर्हयामास। उदयनोऽपि 'न्यायवार्तिकतात्पर्य-परिशुद्धि' नामकेन व्याख्याग्रन्थेन वाचस्पतेर्ग्रन्थं परिष्कृतवान्। तत्र-प्रमाणप्रमेय संशयप्रयोजनदृष्यान्तसिद्धान्तावयवतर्क-निर्णयवाद जल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रह-स्थानानां तत्त्व-ज्ञानान्नि:श्रेयसाधिगम इति तत्सिद्धान्त:। वैशेषिकस्य समानतन्त्रत्वात् परमाणुकारणतावादोऽस्य विशिष्यध्यानमाकर्षति दार्शनिकानाम्। सुखदु:खात्मकमनोवृत्त्योर्नाशे जाते मन: साम्यावस्थां प्रतिपद्यते। तदा आत्यन्तिकदु:खनिवतिर्भवति, सैवमुक्ति:। ईश्वरोऽनुमानगम्य:। जीवन्मुक्तिरपरनि: श्रेयसशब्देन विदेहमुक्तिश्च परनि:श्रेयस शब्देन प्रतिपाद्यते।

## (घ) वैशेषिकदर्शनम्

एतत्प्रणेता कणाद: कश्यपवंशोत्पन्नतया काश्यप शब्देनोक्त:। विशेषपदार्थस्वीकार-मूलकमेवास्य दर्शनस्य वैशेषिकमिति नामकरणम्। वैशेषिके त्रयो हेत्वाभासा: स्वीकृता:। दश अध्यायै: 370 सूत्रैश्च निबद्धमिदं दर्शनम्।

(1) प्रथमाऽध्याये समवेताशेषपदार्थ कथनम्।
(2) द्वितीये-द्रव्यम्,
(3) तृतीये-आत्मान्त: करणनिरूपणम्,
(4) चतुर्थे-शरीरभेद-निरूपणम्,
(5) पञ्चमे-कर्मनिरूपणम्,
(6) षष्ठे-श्रौतधर्मनिर्वचनम्,
(7) सप्तमे-गुणसम्वायौ,
(8) ज्ञानोत्पत्ति-तन्निदाने।

नवमे-प्रागभावादिनिरूपणम्, दशमे-आत्मगुणनिरूपणञ्च। इदं दर्शनं सर्वशास्त्रोपकारकम्। अत्र दर्शने सर्वप्राचीनो ग्रन्थ: सूत्रं रावण प्रणीतम्, यन्नोपलभ्यते। तदनन्तरं भारद्वाजवृत्ति:, प्रशस्तपादभाष्यम्, शंकरमिश्र-स्योपस्कार:। जगनारायणभट्टस्य कणाद सूत्रवृत्ति:, चन्द्रकान्तभट्टस्य-वैशेषिक भाष्यञ्च। आदिमं सूत्रं-"धर्मविशेषप्रसूतात् द्रव्यगुणकर्म सामान्य विशेषसमवायानां पदार्थानां साधर्म्य वैधर्म्याभ्यां तत्त्वज्ञानान्नि:श्रेयसाधिगम:।" अस्मिन् दर्शने परमात्मा तु ईश्वरापरनामा जीवात्मनो भिन्न एव। तत्त्वज्ञानेन मिथ्यावासनायां निवर्त्तितायां रागाभावात् प्रवृत्त्यभावे कर्माभावात् सुखदु:खापगम:, स एव च मोक्ष इति शास्त्रस्यास्य तत्त्वम्।

## (ङ) सांख्य-दर्शनम्

सांख्यदर्शनस्याद्य आचार्य: कपिल:, सिद्धान्तस्तु प्रकृति:पुरूषश्चेति द्वे मूलतत्त्वे, अनयोरेव सम्बन्धाज्जगदुत्पद्यते। प्रकृतिर्जडा, पुरूषश्चेतन:, पुरूषसम्बन्धात्प्रकृतौ क्रिया। सत्कार्यवादोऽत्र

समर्थितः। अत्र मते पञ्चविंशतिस्तत्त्वानि–1. मूलप्रकृति, 2. महान्, 3. अहङ्कार, 4. रूप, 5. रस, 6. शब्द, 7. स्पर्श, 8. गन्ध इति पञ्चतन्मात्राणि तथा च पञ्चकर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, एकं मनः, 8+11=19, पञ्चमहाभूतानि–क्षिति, जल, पावक, गगन, समीर, 19+5=24, 25.पुरूषश्च वर्त्तते।

### (च) योगदर्शनम्

अस्य प्रवर्त्तकः महर्षि पतञ्जलिः, योगदर्शनम् प्राचीन–दर्शनम्, नानासिद्धीनां जनकमित्यत्रापि च नास्ति विवादः। इदं योगदर्शनं पादचतुष्ट्यात्मकम्। यथा–

(1) प्रथमेपादे–योगस्वरूपस्यविस्तृतं निरूपणम्।

(2) द्वितीयपादे–क्रियायोगः तत्साधनानि यमादीनि च।

(3) तृतीयेपादे–अन्तरङ्गं साधनजातं ध्यानधारणासमाधिरूपं संयमपदव्यपदेश्यम्।

(4) चतुर्थे च पादे–जन्मौषधि मन्त्रतपः समाधिजसिद्धिपञ्चकं, तत्सम्बद्धं कैवल्यरूपं परमप्रयोजनं च निरूपितम्। षड्विंशतिस्तत्त्वानि–साख्यस्य–25+ईश्वरः= 26। स चायमीश्वरः—''क्लेषकर्मविपाकाशयैरपरामृष्टः पुरूषविशेषः।''

### (छ) पूर्वमीमांसा-दर्शनम्

मीमांसायाश्चर्चा वेदस्य संहितायामुपनिषदि ब्राह्मणग्रन्थेषु च प्राप्यते। कुमारिलःश्लोकवार्तिके–''धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्''इति। वारदायणेन–कर्मफलदातेश्वरो मन्यते। जैमिनिना–कर्मण एव फलदातृत्वं प्रदर्शितम्। अतएव मीमांसका निरीश्वरवादिनो घुष्यन्ते। जैमिनिना 700 ई0पूर्व समये मीमांसा सूत्राणि प्रणीतानि। कुमारिलात् परतोजातः मण्डनमिश्रो विधिविवेक भावना विवेक विभ्रमविवेकादीन् ग्रन्थान् जग्रन्थ। विधिविवेकस्य टीका वाचस्पति मिश्रेण न्यायकणिका नाम्ना कृता। प्रभाकरेण 'बृहती' नामकेन भाष्यव्याख्याग्रन्थेन स्वसिद्धान्तः प्रचारितः। गङ्गेशोपाध्यायेन न्यायतत्त्वचिन्तामणौ मुरारिमतमुल्लिखितमतोऽयं द्वादशशतके ततः पूर्वं वा जातो मन्तुं शक्यते। 'मुरारेस्तृतीयः पन्था' इति मिथिलायां प्रसिद्ध्यति, तेन मन्येऽयं मैथिल आसीत्।

### (ज) उत्तरमीमांसा-दर्शनम्-(वेदान्तदर्शनम्)

वेदान्तो वेदस्य अन्तिमोभागः अवसानभागः इति विग्रहेण उपनिषद् उच्यते। उपनिषद एव प्राचीनैर्वेदान्तशब्देनोक्ताः। वेदान्तसारे–वेदान्तोनाम उपनिषत्प्रमाणमित्युक्तम्। उपनिषदोऽनेकाः, तासु विरोधोऽपि प्रतिभासते। तस्यैव विरोधस्यदूरीकरणाय व्यासेनब्रह्मसूत्राणिरचितानि। एतानि सूत्राणि पाणिनेरपि प्राचीनानि। इमे सर्वेऽपि वेदान्ता निम्नलिखितविषयेषु मतैक्यं धारयन्ति–

1. अनादिरनुवर्त्तमानोऽयं संसारोऽपास्य एव।
2. ज्ञानापेक्षया कर्मणो गौणत्वम्।
3. ब्रह्मादीन्द्रियातीतवस्तुनिरूपणे वेदाः प्रधानतया प्रमाणानि।

4. उपनिषदो गीता ब्रह्मसूत्राणि चेति प्रस्थानत्रयी मतसाधनायावलम्बनम्।
5. ब्रह्मव्यापकं नित्यञ्चेतनञ्च।
6. ब्रह्मैव जगज्जन्मस्थितिप्रलयकारणं नान्यदचेतनं प्रकृत्यादि।

तदेदं सङ्क्षिप्य वर्णितो वेदान्त समुदायः। भारतीयं दर्शनं वेदान्तपर्यवसायि, यतोऽत्र सर्वत्र दर्शनेषु क्रमविकास इव प्रतीयते। प्रथमं कणादस्यारम्भवादः तदनन्तरं गौतमस्य परमाणुवादः, तत्परोऽपि सांख्यस्य परिणामवादः, सर्वान्ते वैदिको विवर्त्तवादः। सोऽयं विकासो वेदान्तपर्यवसायितां बोधयति दर्शनानाम्।

### (झ) चार्वाकदर्शनम्

चारू वाक् इति निर्वचनं चार्वाक शब्दस्य, वृहस्पति प्रणीतमिदं दर्शनम्। प्रत्यक्षमेव केवलं प्रमाणम्, इन्दियार्थ सन्निकर्षोत्पन्नं ज्ञानं हि तत्। शरीरमेव जीवः, सृष्टिः स्वभावत एप जायते। न तत्रेश्वरापेक्षा। ईश्वरो नास्त्येव। पतञ्जलि समये अस्मिन् दर्शने ग्रन्था:प्राप्यन्ते स्म, सम्प्रति नोपलभ्यन्ते। सम्प्रति तु दर्शनग्रन्थेषु यत्र तत्र उद्धरणमात्रं पूर्वपक्षरूपेण दृश्यते। यथा–

**यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिवेत्।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः।।**
**त्रयोवेदस्य कर्तारो भाण्डधूर्तनिशाचराः।**

प्रकृतिवादः (Naturalism) यस्य अर्थः Nature= प्रकृतेः, Iism= वादः भवति। अस्यवादस्य प्रवर्त्तकाः रूसो(Rousseau) वर्त्तते। भारतीयमतानुसारं नायं अतिरिक्तः कश्चन् वादः अपि तु चार्वाकदर्शनान्तर्भूतः जडवादः एव। जडतत्त्वस्य अधीनं मनः भवति। प्रकृतेः महत्त्वं यः वादः ददाति सः प्रकृतिवादः। अद्यतने दिने अस्य शाखात्रयं विद्यते। यथा–

1. भौतिक–जगतः प्रकृतिवादः (Naturalism of physical world)
2. यान्त्रिक– प्रकृतिवाद (Mechanical Naturalism)
3. जैविक प्रकृतिवादः—(Biological Naturalism)

### (ञ) बौद्धदर्शनम्

बौद्धदर्शनं जैनदर्शनादुत्तरकाले प्रचरितमभवत्। बौद्धदर्शनस्य भाग द्वयं–

(1) धार्मिको–भागः, धार्मिकभागे–आध्यात्मिक तत्त्ववर्णनम् आचारनिरूपणं च प्रपञ्चितम्,

(2) दार्शनिक–भागः, दार्शनिकभागे तु तार्किकदृष्ट्या बौद्धसिद्धान्तस्य सूक्ष्मं विवेचनं प्रस्तुतम्। बौद्धानां मते जीवो जगच्चेत्युभयमपि अनित्यं प्रतिक्षणपरिणामशालि च। बौद्धदर्शनस्य प्रस्थानं चतुर्धाविभज्यते–

(क) वैभाषिकाः—''बाह्यार्थप्रत्यक्षमङ्गी कुर्वन्ति। (ख) सौत्रान्तिका–बाह्यर्थमनुमेयमाहु। (ग) योगचारा–विज्ञानवादिनः। (घ) माध्यमिकाः शून्यवादिनः।

**(क) बौद्धदर्शने त्रीणि रत्नानि**–"शीलं, समाधिः, प्रज्ञा चेति।"

**(ख) बौद्धदर्शने पञ्च बोधिवृक्षम्**–"क्षमा-रूपिणी-जटा, धैर्यरूपि-दृढ़मूल, चरित्र-रूपि-पुष्पम्, बुद्धिरूपिणीशाखा, धर्मरूपिफलम्।

**(ग) बौद्धदर्शने पञ्च अविद्या**–आलस्य, जन्म-मृत्यु, काम, क्रोध, विशादाः।

**(घ) बौद्धदर्शने अष्टाङ्गमार्गाः**—सम्यक्दृष्टिः—संकल्प-वाणी-कर्म-आजीविका-उद्योग-स्मृति-समाधिरिति।

**(ङ) बौद्धदर्शने पञ्चशीलत्वम्**-

(1) जीव हिंसा न करणीया,

(2) चौरकार्यात् विरक्तिः,

(3) व्यभिचारात् विरक्तिः।

(4) असत्यभाषणात् विरक्तिः,

(5) मद्यपानतः विरक्तिश्चेति।

**(ट) जैन दर्शनम्**

बौद्धदर्शनात् पूर्वतनम्। महावीरेण रागादिरिपवोजिता इत्यसौ जिन् शब्देनोक्तस्तदीयतया दर्शनमिदं जैनदर्शननाम्नाप्यभिहितम्। तीर्थङ्करेष्वाद्यः ऋषभदेवनामाऽऽसीत्, महावीरश्चान्तिमः। दिगम्बर-श्वेताम्बराख्य सम्प्रदाय द्वयस्येदमेव बीजम्।

**(क) जैनदर्शने नव तत्त्वानि**-जीवः, अजीवः, आस्रवः, बन्धः, संवरः, निर्ज्जर, मोक्ष, पुण्यम् पापश्चेति।

**(ख) जैनदर्शने त्रीणि रत्नानि**-सम्यक् दर्शनम्, सम्यक् ज्ञानम्, सम्यक्चारित्रम्,

**(ग) जैनदर्शने सदाचारस्य पञ्चनियमाः**—अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, अपरिग्रहश्चेति,

**(ठ) पाश्चात्यदर्शनम्**

इदं दर्शनं सर्वेष्वपि क्षेत्रेपु-Philosophy of biology, Education, History, Law, Religion, Science आदिषुव्याप्तमस्ति। असंख्यानां दर्शनं निर्वचनं यद्यपि वर्तते, तथापि स्थालीपुलाकन्यायेन कानिचन अत्र प्रदर्शितानि। डॉ० रामशकल पाण्डेयमहोदयानुसारं दर्शनस्य तिस्रः मुख्यशाखाः भवन्ति। ताः–

**दर्शनम् (Philosophy)**

| (क) तत्त्वज्ञानम् Metaphysics | (ख) ज्ञानशास्त्रम् Epistemology | (ग) मूल्यमीमांसा Axiology |
|---|---|---|
| 1. आत्मसम्बन्धितत्त्वज्ञानम् (Metaphysics of the soul) | | 1. नीतिशास्त्रम्(Ethics) |

contd......

| 2. ईश्वरसम्बन्धितत्त्वज्ञानम् (Theology) | | 2. सौन्दर्यशास्त्रम् (Aesthetics) |
|---|---|---|
| 3. सृष्टिशास्त्रम् (Osmology) | | 3. तर्कशास्त्रम् (Logic) |
| 4. विश्वविज्ञानम्/सृष्टि-विज्ञानम् (Cosmology) | | |
| 5. सत्ताशास्त्रम् (Ontology) | | |

**( ड ) दर्शनशास्त्रस्य प्रयोजनानि**

**1. आत्मसम्बन्धितत्त्वज्ञानम्** (Metaphysics of the soul)—अत्र आत्मविषये जीवविषये च विचार: भवति। पुनश्च किं नाम आत्मा? किं नाम जीव:? आत्म-शरीरयो: सम्बन्ध: कीदृश:? संकल्प:स्वतन्त्र: परतन्त्रो वा? इत्यादि विषये चर्चा भवति।

**2. ईश्वरसम्बन्धितत्त्वज्ञानम्** (Theology)—अत्र मुख्यरूपेण ईश्वरविषये विचार: क्रियते। ईश्वर अस्ति न वा?यदि अस्ति तर्हि अस्तित्वे किं प्रमाणम्? ईश्वर: एक: उत अनेक:? ईश्वरस्वरूपम् कीदृशम्?इत्यादि विषये चर्चा क्रियते।

**3. सृष्टिशास्त्रम्** (Osmology)—अस्मिन् शास्त्रे सृष्टे:—उत्पत्तिसम्बन्धिनां प्रश्नानां विंचारो भवति, यथा सृष्टे:उत्पत्ति: अभवत् वा इयम् अनादि: अस्ति? सृष्टिनिर्माणस्यप्रक्रियाया: विवेचनमपि सृष्टिशास्त्रे एव भवति।

**4. विश्वविज्ञानम्/सृष्टि-विज्ञानम्** (Cosmology) (Origin, Development and Nature of Cosmos)—अस्मिन् शास्त्रे सृष्टे: संरचना तथा तस्य विकासस्य विषये विचार: भवति, यथा किं ब्रह्माण्ड: एक:? किं ब्रह्माण्ड: अनेक: भवितुं शक्नोति? ब्रह्माण्डस्य संरचना भौतिकतत्त्वानां योगेन जाता अथवा ब्रह्माण्डस्य संरचना आध्यात्मिकतत्त्वानां योगेन जाता इत्यादि।

**5. सत्ताशास्त्रम्** (Ontology)—सत्ताशास्त्रे ब्रह्माण्डस्य नश्वरतत्त्वानि कानि? ब्रह्माण्डस्य अक्षरतत्त्वं किं? ब्रह्माण्डस्य सादित्वं सान्ततत्त्वं च किमस्ति? ब्रह्माण्डे स्थितानां तत्त्वानां पारस्परिक: सम्बन्ध: कीदृश: वर्त्तते इत्यादि विषये विचार: भवति।

**6. ज्ञानशास्त्रम्** (Epistemology)—अस्मिन् शास्त्रे ज्ञानस्य स्वरूपं ज्ञानस्य विवेचनं च मुख्यरुपेण क्रियते। तथाच ज्ञानसम्बन्धिनां प्रश्नानां विचारो भवति, यथा-किं मनुष्यस्य बुद्धि: वास्तविकं ज्ञानं प्राप्तुं शक्नोति? मनुष्य: कियत्पर्यन्तं परमसत्ताया: ज्ञानं प्राप्स्यति। ज्ञानप्राप्ते: साधनं किं? सत्यं किम्? असत्यं किम्? किं नाम प्रमा? भ्रमज्ञानं किम् इत्यादि।

**(7 ) नीतिशास्त्रम्** (Ethics)—नीतिशास्त्रे मनुष्यस्य आचरणं विविच्यते। अत्र मानव:

किं कुर्यात् किं न कुर्यात् इत्यादीनां विश्लेषणं क्रियते। इदं शास्त्रम् उचितम्, अनुचितं, शुभम् इत्यादीन् मानदण्डान् च विवेचयति।

**(8) सौन्दर्यशास्त्रम्** (Aesthetics)—अस्मिन् शास्त्रे सुन्दरं किम्? असुन्दरं किं? सौन्दर्यस्य मानदण्डः कः? इत्यादि विषये च विचारः प्रचलति।

**(9) तर्कशास्त्रम्** (Logic)—अस्मिन् शास्त्रे चिन्तनप्रक्रियायाः प्राधान्यं भवति। आगमननिगमनतर्कविधीनां च विश्लेषणं क्रियते। तर्कशास्त्रस्य वैज्ञानिकं रूपं कीदृशं भवति इति विषये प्रतिपादनं भवति। तथा च तर्कवादानां स्वरूपं तत् परिकल्पना, व्याख्या, परिभाषा इत्यादि विचाराणां मौलिकनियमानां विश्लेषणमेव अस्य शास्त्रस्य कार्यम् भवति।

卐 卐 卐

# 26

# दर्शनशिक्षणविधयः

# Methods of Teaching Darshana

## (क) विकासविधिः

## Developmental

इन्द्रियजनितज्ञानं यथार्थवादस्य आदर्शवादस्य च तृतीयं स्वरूपं विकासविधिः वर्तते। अयंविधिः निगमनविधेः स्थानोपरि आगमनविधिम् उपस्थापयति। आगमनविधिः प्रत्यक्षीकृतानाम् उदाहरणानां माध्यमेन छात्रैः सिद्धान्तं लक्षणं च निरूप्यते। पाश्चात्य देशेपु अस्य विधेः प्रचारः प्रसारः व्यापकरूपेण भवति। प्रमुखसमर्थकेपु-मल्कास्टार, बेकल, राटिरव, Great Didactic इत्यादयः वर्तन्ते। ग्रेट डाइडेक्टिक महोदयः स्वपुस्तके Great Didactic लिखति- The ultimate end of man is eternal happines with God.मानवजीवनस्य चरमं लक्ष्यं ईश्वरेण सह अनन्तस्य आनन्दस्य प्राप्तिः वर्तते। सः वास्तुतः विश्वज्ञानस्य सिद्धान्तोपरि विश्वासं करोति। भारतवर्षे अस्य विधेः प्रचलनं तु वैदिकशिक्षायां चार्वाक दर्शने च प्रचुरतया अवलोक्यते। सप्तदश शताव्दीये विज्ञानस्य प्रभावः प्रत्येकक्षेत्रेपु दृष्टिगोचरोऽभवत्। बेकनस्य मानवतावादि, समाजिकतावादि, यथार्थवादि सिद्धन्तानां समस्त तत्त्वानि गृहीत्वा विज्ञानशिक्षायां प्रयोगं कृत्वा सत्यज्ञानस्य उद्भवःप्रकृतिः मन्यते। वैज्ञानिक-कारणात् अन्वेषणमाधृत्य सिद्धान्ताःस्थाप्यन्ते। सत्यस्य अन्वेषणं तु सामान्यसिद्धान्त- माध्यमेन इन्द्रियजन्य- विशेपदशायां प्रवर्तितः। येषु तथ्यानाधृत्य सिद्धान्तस्य निर्माणं भवति। ज्ञानस्य द्वारं ज्ञानेन्द्रियं वर्तते। अतः अध्यापने ज्ञानेन्द्रियाणां सहायता आवश्यकी भवेत्। इन्द्रिय द्वारा शिक्षणे 'सरलात् काठिन्यं प्रति' शिक्षणसूत्रस्य उपयोगिता भवति। बेकर महोदयः सामान्य- परिणामसम्बन्धिनः— उदाहरणात् सिद्धान्तं प्रति अस्य सूत्रस्य स्थापना भवति। स्वानुभवेन तथ्य ज्ञानार्थम् अयंविधिः माध्यमरूपे स्वीकृतः। अस्यविधेः/उपयोगः सामाजिक-दोष निवारणाय करणीयः। एतदर्थम् अयं विधिः सामाजिकोत्थाने अत्यन्तसहायको भवति।

**( क ) विकासविधेः प्रबोधने पञ्चावयवा**

**( प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः )**

**( 1 ) प्रतिज्ञा** (Proposition) 'साध्यनिर्देशः प्रतिज्ञा" साध्यवत्तया पक्षवचनं प्रतिज्ञा' साधककर्तुंयोग्यः धर्मविशिष्टधर्मी इति बोधकवाक्य विशेषः प्रतिज्ञा। यथा-पर्वतोवह्निमानिति, अयं पर्वतः अग्निवान् अस्ति। धर्मः—धूमः, धर्मी-अग्निः।

**( 2 ) हेतुः** (Cause) "धूमवत्त्वादिति हेतो" 'उदाहरण साधर्म्यात् साध्यसाधनं हेतुः' पञ्चमम्यन्तं लिङ्गं प्रतिपादकं वचनं हेतुः'। अर्थात् साधनीय-पदार्थस्य साधनतत्त्व-बोधक-वाक्यविशेषः हेतुः इति कथ्यते। यथा-धूमः।

**( 3 ) उदाहरणम्** (Example) "यो यो धूमवान् स स वह्निमान् यथा महानसम् इति उदाहरणम्" साध्यसाधर्म्यात् तद्धर्मभाविदृष्यान्तमुदाहरणम्।' 'व्याप्ति प्रतिपादकं वचनं उदाहरणम्। सध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यात् कारणात् तद्धर्मभावो दृष्ट्रान्तः एव उदाहरणं भवति। यथा-ये जनाःमहानस-गृहादिस्थाने वारं वारं पश्यन्ति यत् यत्र यत्र धूमःतत्र तत्र वह्निः इति परिप्रेक्ष्यें धूमो वह्नि व्याप्यः 'एवं च वह्निव्याप्यधूमवान् पर्वतः इति स्वार्थानुमानम्।

**( 4 ) तुलना** (Comporison) **( उपनय )** "तथा चायमित्युपनयः" "व्याप्ति विशिष्ट लिङ्गप्रतिपादकं वचनं उपनयः" उदाहरणापेक्षः तथेत्युपसंहारो न तथेति वा साध्यस्य उपनयः। धर्मः—आधेयः, धर्मी आधारः।

**( 5 ) निगमनम्** (conclusion) तस्मात्तथेतिनिगमनम्, हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्। हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम्। हेतु वाक्यस्य कथनपूर्वक प्रतिज्ञावाक्यस्य पुनः कथनमेव निगमनम्।

पर्वतः वह्निमान् अस्ति, किंच धूमवान् अस्ति, यः धूमवान् भवति स वह्निमान् भवति। यथा-महानसम्, अयं पर्वतोऽपि महानसवत् धूमवानोस्ति। अतः पर्वतोऽपि वह्निमानोस्ति। एवं प्रकारेण पंचावयव वाक्यात्मक न्यायस्य प्रयोगं कृत्वा अध्यापकः छात्रान् प्रति पर्वतो वह्निमान् अस्ति इति निर्णयावबोधनं कारयति।

**( ख ) तत्वज्ञानस्य पञ्चपदानि**

महान् दार्शनिक वाचस्पतिमिश्र द्वारा प्रतिपादितानि पञ्चपदानि–

(क) अध्ययनम्-शब्द-श्रवणं, वाक्य-श्रवणं, स्वाध्यायादि।

(ख) शब्दः—शब्दस्यार्थग्रहणम्, विवेचनं विश्लेषणञ्च।

(ग) ऊह-तर्कः, व्याख्यानं, समान्यसिद्धान्तानां विवेचनम्।

(घ) सुहृतप्राप्तिः—गुरोः अनुमोदनम्।

(ङ) दानः—प्रयोगः व्यवहारो वा।

**( ग ) स्मृतचन्द्रिकायां तत्वज्ञानस्य सप्तपदानि-**

(1) शुश्रुषा-गुरोःशुश्रुषा-विधानम्।

(2) श्रवणम्-शब्दार्थ ज्ञानेन सह विषयवस्तु ज्ञानम्।

(3) धारणम्-गृहीत ज्ञानस्य धारणम्।

(4) ग्रहणम्-ग्राहक क्षमतायाः विकासः।

(5) ऊहापोह-तर्क-वितर्क, विवेचनात्मक प्रवृत्तिः।

(6) अर्थज्ञानम्-भवार्थ ज्ञानम्।

(7) तत्त्वज्ञानम्-विस्तृत-तत्त्वज्ञानस्य अवबोधनम्।

**( घ ) मधवाचार्य द्वारा प्रतिपादित पञ्चपदानि-**

(1) विषय-विषयस्य ज्ञानं प्रतिपादनम्।

(2) संशयः—संदिग्धपदस्य व्याख्यानम्।

(3) पूर्वपक्षः—प्रश्नात्मक-प्रथमपक्षस्य स्थापनम्।

(4) उत्तरपक्ष-निष्कर्षतया-समाधानम् उत्तरपक्षः।

(5) संगति-सत्संगेन गुणाःदोषाः, गुणाःग्राह्याः दोषाश्च त्याज्याः।

**( ङ ) मैत्रेयस्य अष्टपदानि-**

(1) सिद्धान्तः,

(2) हेतुः,

(3) उदाहरणम्,

(4) साधर्म्यम्,

(5) वैधर्म्यम्,

(6) प्रत्यक्षः,

(7) अनुमानम्,

(8) आगमः।

**( च ) यूनानी-दार्शनिक-सुकरातस्य पञ्चपदानि-**

**( 1 ) गुरुशिष्यस्य समानता**-विकासविधेः व्यवहारकाले गुरुशिष्ययोर्मध्ये समानताभाव प्रदर्शनेन व्याख्याने सौविध्यं भवति।

**( 2 ) उत्सुकतायाः जागृति**-अध्यापनसमये छात्राणां सक्रियसहयोगप्राप्त्यर्थं विषयवस्तु-ज्ञानाय तेषामुत्सुकतायाः जागरणमावश्यकं भवति।

**( 3 ) विचारशक्तिद्वारा ज्ञानप्राप्तिः**—भावग्रहणभावाभिव्यक्तिः विवेचनप्रक्रियायाः स्तम्भः वर्तते। ज्ञानार्जनस्य महत्त्वपूर्णं साधनं विचारशक्तिः भवति।

**( 4 ) आगमपद्धतेः प्रयोगः**—'उदाहरणात् सिद्धान्तं प्रति'' 'लक्ष्यात् लक्षणं प्रति' गच्छति आगमनविधिः। अध्यापकःप्रश्नोत्तरमाध्यमेन उदाहरणान्वेषण-तालिकां प्रस्तूत्य, लक्षणं सिद्धान्तं वा अनुसरेत्।

**( 5 ) व्यक्तिगतध्यानस्य प्रमुखता**-मन्दबुद्धीणां छात्राणां कृते अवबोधनार्थं व्यक्तिगतध्यानस्य महत् प्रामुख्यं वर्तते।

**( छ ) हरबार्टीयपञ्चपदी**

सुप्रसिद्धदार्शनिकमनोवैज्ञानिकहरबार्टमहोदयस्य सिद्धान्तानामाधारेण तेषां शिष्यैः अयं शास्त्रीयशिक्षणविधिः प्रस्तुतः। अन्यविषयवत् दर्शनशास्त्रशिक्षणे अपि अस्य प्रयोगः शिक्षाशास्त्रिभिः कृतः। अस्मिन् विधौ पञ्चसोपानानि भवन्ति। तेषां परिचयः एवं दर्शनशास्त्रे तेषां प्रयोगः अत्र प्रस्तूयते।

**( 1 ) प्रस्तावना ( उन्मुखीकरणम् )**—इयं छात्राणां पूर्वज्ञानेन सम्बद्धा भवति। पूर्वार्जितज्ञानस्याधारेण कतिपयप्रश्नाः चित्र-पत्रकम्-श्लोक-कथादीन् प्रस्तुत्य पृच्छ्यन्ते। प्राप्तोत्तराणामाधारेण पठनाय छात्राः मानसिकरूपेण सज्जीक्रियन्ते। पाठस्य सूचना शिक्षकेन कक्षायाम् उद्घोष्यते। उदाहरणाय-(1) कति पदार्थाः कानि च तेषां नामानि? द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः इति सप्त पदार्थाः। (2) कति द्रव्याणि कानि च तानि?. . . . समस्यात्मकप्रश्नः?

**( 2 ) विषयोपस्थापनम् ( प्रदर्शनम् )**—अनेन सोपानेन सह नवीनपाठस्य द्रव्यविवेचनस्य शिक्षणं प्रारभ्यते। छात्राः द्रव्याणाम् अन्वेषणे तत्पराः भवेयुः। पृथिवी-अप्-तेजो-वायु-आकाश-काल-दिक्-आत्मा-मन इति नव द्रव्याणि इत्यादीनां व्याख्यानं, विविधविधिभिः विवेचनं, काठिन्यनिवारणम्, पाठप्रवर्धनम् इत्यादयः समागच्छन्ति।

**( 3 ) तुलना ( अमूर्त्तीकरणम् )**—पृथिवी-अप-तेज-वायु-आकाश-काल-दिक्-आत्मा-मन इति नव द्रव्याणि इत्यादि स्थलेषु छात्रैः येषु येषु काठिन्यम् अनुभूयते तासां निवारणाय समभावानां विषयभावानामुदाहरणैः, दृश्यश्रव्योपकरणैः सारकथनेन च प्रयोगः क्रियते।

**( 4 ) सामान्यीकरणम्**—सोपानेऽस्मिन् छात्राः पाठस्य निष्कर्षं प्रति गच्छन्ति, यथा दर्शनपाठे उदाहरणेभ्यः नियमान् प्रति, पृथिवी-अप-तेज-वायु-आकाश-काल- दिक्-आत्मा-मन इति नव द्रव्याणि इत्यादि नियमानां, सिद्धान्तानां, श्रोतः—साधनानाञ्च सामान्यीकरणं क्रियते।

**( 5 ) प्रयोगः**—पाठस्याध्ययनात्परं नवार्जितज्ञानस्य प्रयोगाय, अध्यापनस्य सफलतायाः परीक्षणाय अध्यापकः अभ्यासकार्यं कारयति विद्यार्थिनां याः शङ्काः सन्ति ताः अपाकरोति। तेभ्यः किञ्चित् मौखिकं लेखनकार्यं व ददाति। अस्य मुख्योद्देश्यं छात्रैः सम्पादितज्ञानस्य परिपोषणमस्ति।

**( ज ) विकासविधे:उद्देश्यानि-**

(1) संस्कृतशब्दानां शुद्धं स्पष्टं च उच्चारणशिक्षणम्।
(2) पाठगतभावानाम्, विचाराणां च ग्रहणशक्तिकल्पनम्।
(3) संस्कृते विविधनैतिककथाभि: छात्राणां चरित्रनिर्माणम्।
(4) भावाभिव्यक्तीकरणाय अवसरप्रदानम्।
(5) दीर्घवाक्यानि पठित्वा तेषाम् अर्थावगमने सामर्थ्यसम्पादनम्।
(6) विवेचनात्मकशक्ते:, समीक्षात्मकशक्तेश्च वर्धनम्।
(7) शब्दार्थयो: सौन्दर्यानुभूतिज्ञापनम्।
(8) व्यावहारिकज्ञानस्य विकास:।
(9) श्रवणे-पठने-लेखने-भाषणे च पर्याप्तावसर उपलभ्यते।

**( झ ) विकासविधे:गुणा:**

(1) अयं विधि: मनोवैज्ञानिकसिद्धान्तेष्वाधारितोऽस्ति।
(2) अनेन छात्राणां ज्ञानं स्थायि भवति।
(3) शिक्षकाणां कृते शिक्षणे परिष्काराय मार्गदर्शनं भवति।
(4) शिक्षणं शिक्षणसिद्धान्तानां सूत्राणाञ्च अनुकरणं करोति।
(5) शिक्षणस्य बोधगम्यतायै बलं दीयते।
(6) सर्वेषां लक्षिताधिगमविशेषणानाञ्च प्रामुख्यं प्रदीयते।
(7) छात्रा:निरन्तरं परीक्षिता: भवेयु:।

**( ञ ) विकासविधे:दोषा:**

(1) सततमूल्याङ्कनेन छात्रा: व्यग्रा: भयाक्रान्ताश्च भवन्ति।
(2) संस्कृतशिक्षणस्य सर्वासां विधानां कृते लाभप्रदो नास्ति।
(3) मूल्याङ्कनोन्मुखिशिक्षणेन शिक्षणे कृत्रिमतताया: समावेशो भवति।

उपर्युक्तवर्णनेन इदं स्पष्टं भवति यत् प्रत्येकस्मिन् विधौ गुण-दोषा: भवन्ति। कोऽपि विधि: पूर्ण: नास्ति, अत: कक्षाया: स्तरं, विधां, प्रकरणञ्च मनसि निधाय समस्तविधीनां समवायरूपम् अनुसरणीयम्। शिक्षकप्रशिक्षणमहाविद्यालयेषु प्रशिक्षणार्थिनां कृते प्रशिक्षका: ईदृशान् प्रयत्नान् कुर्वन्ति यै: शिक्षणं रुचिकरं सरलञ्च भवेत्। विशेषत: वर्तमानकाले संस्कृतशिक्षणं नवीनतमोपागममाश्रित्य करणीयम्।

## ( ख ) इतिहासविधि:
### Historical Method

छात्रेभ्य: भाषाया: विकास: वर्णनप्रणालीमनुसृत्य बोध्यते। तस्या महत्त्वं, पुराकाले समाजस्य दर्शनविषयक-धारणा कीदृशी आसीत् इति सर्वम् इतिहासरूपेण पाठ्यते। येन छात्रा: सम्प्रेरिता: दर्शनतत्त्वं सोत्साहं शिक्षेरन्।

**(क) दर्शनविषये ऐतिहासिक-प्रश्नाः**

1. किं ब्रह्म?
2. तस्य किं स्वरूपम्?
3. कः ईश्वरः?
4. के तस्य प्राप्तेरुपायाः?
5. अस्मिन् जगति किं शाश्वतं तत्त्वम्?
6. इयं सृष्टिः कुतः आविर्बभूव?
7. जीवात्मनः किं स्वरूपम्?
8. कः पुनर्जायते?
9. किं लिङ्गशरीरम्?
10. जीवनस्य कुत उद्भूतिः?
11. किं तस्य लक्ष्यम्?
12. कथं मोक्षावाप्तिः?
13. आत्मा चेतनोऽचेतनो वा?
14. कः सृष्टेः कर्ता?
15. किं जीवनस्य कर्त्तव्यम्?
16. कश्च जीवनस्य साधिष्ठः पन्थाः?

इत्यादयोऽनुयोगाः सूक्ष्मातिसूक्ष्मेण यत्र विविच्यन्ते।

**(ख) दर्शनविषये कथाकथन-दृष्टान्त-प्रणाल्या-**

(क) भोजं हन्तुं हन्त्रीभिः साकं मुंजः वने गुप्तस्थाने प्रेषयामास, स्वबध षडयन्त्रं विज्ञाय मुजं प्रति भोजेन स्वरक्तेन लिखित-श्लोकम्-

**मान्धाता च महीपतिः कृतयुगालंकारभूतो गतः,**
**सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः।**
**अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते!**
**नैकेनापि समं गता वसुमती नूनं त्वया यास्यति।।**

(ख) महर्षिगौतमस्य अभिशापः-

**सिंहानां महती निद्रा सर्पाणां च महद् भयम्।**
**ब्राह्मणामनेकत्वं तस्माज्जीवन्ति जन्तवः।।**

(ग) दार्शनिक-मण्डनमिश्रस्य परिचयः-

**स्वतः प्रमाणं परतः प्रमाणं, शुकाङ्गना यत्र गिरो गिरन्ति।**
**शिष्योपशिष्यैरूपगीयमानम्, अवेहि तन्मण्डनमिश्रधाम।।**

(घ) द्वा सुपर्णा सयुजा सखाया, समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्यन् अन्यो अभिचाकशीति।।

(ङ) यस्य षष्ठी चतुर्थी च विहस्य च विहाय च।
यस्याहं च द्वितीया स्यात् द्वितीयास्यामहं कथम्।।

(च) या व्यक्तिः 'विहस्य' (क्रियापदं) संज्ञायाः षष्ठीविभक्तिरूपं, 'विहाय' (क्रियापदं) संज्ञायाः चतुर्थीविभक्तेः रूपं तथा अहमिति सर्वनामशब्दस्य द्वितीया विभक्तेः रूपं कथयति, तस्याः व्यक्तेः अहं द्वितीया (भार्या) कथं भवितुम् अर्हामि।

दर्शनतत्त्वबोधिकाः कथाः श्रावयेत् अध्यापकः। अत्र कथामाध्यमेन तत्त्वानि बुध्यन्ते इति छात्राः रुचिं प्रदर्शयेयुः। तत्त्वं च अवगच्छेयुः। दर्शनशास्त्रस्य ऐतिहासिक विचार- विन्दुः यथा-वैदिक-अवैदिक दर्शनानां विवेचनं अनेन विधिना अध्यापयितुं शक्नोति।

## (ग) समस्याविधिः
## Problem (Solving) Method

समस्याविधिः न नवाविष्कृतः। प्राचीनभारते बहुत्रास्य प्रयोगः दृश्यते।

### (क) समस्याविधेःअर्थः

(क) समुपस्थापितसमस्यायाः, अभिमुखीकृतसमस्यायाः वा स्वबुद्धिशक्तिमुपयुज्य, इतरसाधनानां सहयोगेन, प्रौढनिदेशनेन, स्वातन्त्र्येण च समाधानान्वेषणायावसरप्रदात्र्याः कस्याश्चित् सामान्ययुक्तेः प्रणाल्या वा संबर्धिताकृतिरेव समस्याविधिरिति नाम्ना प्रथते।

(ख) कस्यापि काठिन्यस्य कस्याश्चित् जटिलतायाः वा सन्तोषजनक समाधानान्वेषणार्थं क्रियमाणःयोजनाबद्धः कार्यक्रम एव समस्या-समाधानविधिः। आलोचनात्मकं चिन्तनमेव समस्यासमाधानं भवति।

(ग) महत्त्वपूर्णशैक्षिकं काठिन्यं समाधातुं छात्राःशिक्षकाश्च प्रयतमानास्सन्तःयस्यां शैक्षिकप्रणाल्यां सम्भूय प्रयतन्ते, सैव प्रक्रिया समस्या-समाधानविधिरिति।

समस्या-समाधानमिति काचन शैक्षिकप्रक्रिया भवति। व्याख्यान प्रणाल्यां काचन युक्तिरासीत् समस्येति। परम्परागतपद्धतौ व्याख्यानसोपानेषु इदमप्येकं पद्यमासीत्। यथा-

पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना।
आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्।।

व्याख्यानपदेषु आक्षेपः एकं पदं वर्तते। अयमाक्षेप एव समस्या भवति। व्याख्यानं क्रमबद्धं भवति। पदच्छेदः, पदार्थः, विग्रहः, अन्वयश्च, क्रमशः कार्यते। एवमस्यप्रयोगः सर्वत्र शास्त्रेष्ववलोक्यते। पूर्वपक्षं प्रतिपाद्य समाधानं ददाति। यथा-

विषयो संशयश्चैव पूर्वपक्षस्तथोत्तरः।
सङ्गतिश्चैव पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्।।

विषयावबोधनाय विषयः, संशयः, पूर्वपक्षः, उत्तरपक्षः, समन्वयः इति पञ्च विषयाः आवश्यकाः। अतः व्याख्यानं नाम कस्यापि विषयस्य, शब्दस्य वा अर्थस्पष्टीकरणाय, तत्सम्बद्धभावानां सरलरूपेण अवगमनाय च एकः उत्तमः उपायः।

यथा दर्शनशिक्षणे-दर्शनेन-श्रवणेन-घ्राणेन-स्पर्शेन च किं किं ज्ञानं प्राप्यते?

''इन्द्रियार्थ सन्निकर्ष जन्यं ज्ञानं प्रत्यक्षम्'' एतेन प्रत्यक्षज्ञानं प्राप्यन्ते छात्राः।

1. किं ब्रह्म?
2. तस्य किं स्वरूपम्?
3. कः ईश्वरः?
4. के तस्य प्राप्तेरुपायाः?
5. अस्मिन् जगति किं शाश्वतं तत्त्वम्?
6. इयं सृष्टिः कुतः आविर्वभूव?
7. जीवात्मनः किं स्वरूपम्?
8. कः पुनर्जायते?

एते समस्यात्मकप्रश्नाः शिक्षकैः उपस्थाप्यन्ते, समस्याः उत्पाद्य च प्रामाण्यप्रदर्शनपूर्वकं समाधीयन्ते। समस्यासमाधानन्नाम न सामान्य- शैक्षिकयुक्तिः, किन्तु सामान्यीकृतः स्वतन्त्रश्च शैक्षिकविधिः भवति। स च अधिगमोपयोगी वर्तते। यथोऽधिगमः समस्याः प्रत्यक्षीकृत्य समाधाय च समेधते। अर्थात् 'समस्याः समुत्पाद्य ताः समाधातुमवसरपरिकल्पनमेव अधिगमप्रशिक्षणस्य सर्वोत्तमोपायः। विद्यालयीयं प्रशिक्षणं सामाजिकीं समस्यामपि प्रभावयेदित्यन्येतत्। समस्याविधिः क्रमबद्धमेकं प्रशिक्षणसाधनं भवति। S.K.Kocchar निरूपयति-'समस्याविधिः सार्थकः, विकासात्मकः, क्रमबद्धः, सामान्यीकृतः, आविष्कारकश्च वर्तते।'

उपर्युक्तविवेचनेन इदमवसीयते यत् विद्यालयेषु तर्क-विचार- चिन्तनाशक्तीनामुत्तेजनार्थं विभिन्नसमाधान-परिस्थितिषु सामञ्जस्यस्थापनार्थं, मस्तिष्कस्य क्रमिकप्रशिक्षणार्थं, क्रियाशीलतायास्सम्प्रेरणार्थं च छात्राणां पुरतः काल्पनिकीं समस्यां प्रस्तूय नियमितरूपेण समाधानान्वेषण प्रक्रियैव समस्याविधिः। अर्थात् विचारात्मकचिन्तनेन समस्या समाधीयते, सैव प्रक्रिया समस्याविधिःभवति। Bossing महोदयः विचारात्मकचिन्तनस्य आधारभूतानि तत्त्वानि इत्थं स्पष्टयति-

(1) जटिलसमस्यायाः अवगमनम्।
(2) समस्यायाः स्वरूपज्ञानम्।
(3) यथावत् मनसि समस्याया निधानेन, मध्ये उत्साहभङ्गो न जायते।
(4) समर्थां कांचन सार्थकपरिकल्पनां विधातुं सामर्थ्यम्।
(5) विहितपरिकल्पनायाः परीक्षणं मूल्याङ्कनं च।

(6) परिकल्पनामङ्गीकतुं सहजमनोवृत्तिः।

(7) युक्तस्य तत्त्वस्य पुनः परीक्षणम्।

एतानि तत्त्वानि समस्यायाः समाधानान्वेषणकाले व्यक्तेः विचारात्मकं चिन्तनं संवर्धयन्ति।

**(ख) समस्याविधेःसोपानानि**

(1) समस्या, (2) समाधानान्वेषणप्रक्रिया, (3) परिकल्पना, (4) समाधानम्।

**(1) समस्योत्पत्ति**–छात्राः स्वभावेन सक्रिया भवन्ति। विद्यालयीयं वातावरणमपि छात्रान् किमपि कर्त्तु, चिन्तयितुं सम्प्रेरयति। पठितेषु पाठितेषु वा स्वतः विषयेषु चर्चा जायते। का संख्या?, किं परिमाणम्?कः शब्दः? कः अनुभवः? **आस्तिक-नास्तिकयोर्मध्ये को भेदः?**

**(2) समस्यायाः सीमाङ्कनम्**–अत्र पदे छात्राः शिक्षकस्य मार्गदर्शनेन कार्ये प्रवर्तन्ते। प्रस्तुतोदाहरणे आस्तिक-नास्तिकयोः सीमांकनमपि कारयेत् शिक्षकः।

**(3) समाधानान्वेषणप्रक्रिया**–अत्र पदे समस्यां समाधातुमुपायाः चित्यन्ते। यथावसरं अध्यापकः मध्ये साहाय्माचरेत्।अस्यां प्रक्रियायां सोपान-त्रयं वर्त्तते। यथा–

(क) **तत्त्वानां सङ्ग्रहः**—समस्यां समाधातुमावश्यकानि तत्त्वानि विचिन्त्य सङ्गृह्णन्ति छात्राः। कुत कथं तत्त्वानि सङ्गृह्णीयुः इति शिक्षकःसंसूचयेत्। निर्दिष्टसमस्यायाम् वैदिक-अवैदिक-दर्शनानि पृथक् पृथक् नामानि च सन्गृह्णन्ति।

(ख) **तत्त्वानां सङ्घटनम्**-सङ्गृहीतानि तत्त्वानि सङ्घटन्ते। यथा अत्रोदाहरणे-अस्तिक्यभावात्मक-तत्त्वानि, नास्तिक्य भावात्मक-तत्त्वानि च संकलितानि भवन्ति।

(ग) **तत्त्वानां विश्लेषणम्**-परस्पर-वार्तालापेन सङ्घटिततत्त्वानि विश्लिष्य विचारयन्ति छात्राः। प्रस्तुतोदाहरणे-'वेद समर्थकः आस्तिकः, वेद निन्दकः नास्तिकः' लक्षणस्य अन्वेषणम्, विश्लेषणम् छात्राः कुर्वन्ति।

**(4) परिकल्पना**–समाधानान्वेषणप्रक्रिया। अधिगततत्त्वानामाधारेण कामपि परिकल्पनां समाधानत्वेनोपस्थापयितुं छात्राः प्रेरिताः भवन्ति। यथा-वैदिक-अवैदिक-दर्शनविषयाणां सारिणीकरणम्।

**(ग) परिकल्पनायाःपरीक्षणं निष्कर्षश्च**

परिकल्पनात्मकं समाधानं छात्राः स्वयं शिक्षकस्य सहयोगेन परीक्ष्य कमपि निष्कर्षं प्रत्याययन्ति। प्रकृतोदाहरणे शिक्षकःवैदिक(आस्तिक) दर्शनानिषट्-(क) न्यायदर्शनम्, (ख) वैशेषिक-दर्शनम्, (ग) सांख्य-दर्शनम्, (घ) योग-दर्शनम्, (ङ) पूर्वमीमांसा-दर्शनम्, (च) उत्तर मीमांसा-दर्शनम्। (1) तत्र अस्ति दृष्टम्, अस्ति वेदः प्रामाण्यम्, अस्ति ईश्वरो वा, इति मतिर्यस्य सः आस्तिकः। आस्तिक विचारकानि वैदिकानि दर्शनानि, अवैदिक (नास्तिक) दर्शनानि त्रीणि-(क) चार्वाकदर्शनम्, (ख) बौद्ध दर्शनम्, (ग) जैन दर्शनम्, (नास्तिको वेद निन्दकः, ते मन्यन्ते-''त्रयोवेदस्य कर्तारो भाण्ड-धूर्त-निशाचराः) (2) नास्ति

दृष्टम्, नास्ति वेदंप्रामाण्यम्, नास्ति ईश्वरो वा, इति मतिर्यस्य सः नास्तिकः। नास्तिक विचारकानि अवैदिकानि च दर्शनानि इति व्यवह्रियन्ते।

अत्र विधौ समस्यानां चयने महदवधानमावश्यकम्। समस्याः छात्रान् समाधानान्वेषणे प्रेरयेयुः, रुचेः सिद्धान्तमाधारीकृत्य च प्रयतमानाः भवेयुः। अतः समस्यानां चयने निम्नविषयेषु ध्यानमावश्यकम्। समस्याः—

(1) छात्राणामावश्यकताः रुचीश्चाधारिताः स्युः महत्त्वपूर्णाः सामयिकाश्च स्युः।

(2) उत्तमरूपेणाधिगमं प्रभावयेयुः।

(3) छात्रपक्षतः छात्रोपयोगिन्य एव चयिताः भवेयुः।

(4) मानसिकप्रशिक्षणायावकाशं कल्पयेयुः।

(5) छात्राणां क्षमतां, मानसिकस्तरं चाधारीकृत्य स्युः। सीमिताः सुनिश्चिताश्च भवेयुः।

(6) जटिलाः विद्यालयकार्यस्यावरोधिकाश्च न स्युः।

(7) अधिकांशछात्राणामभिप्रायमनुसृत्य चयिताः भवेयुः।

### (घ) समस्याविधेः प्रमुखोपगमः
(Important Approaches in Prblem Method)

समस्याविधौ विविधोपगमाः समाधानान्वेषणे उपकुर्वन्ति। तत्र प्रमुखाः—

(1) आगमनोपगमः(Inductive approach)

(2) निगमनोपगमः (Deductive approach)

(3) विश्लेषणोपगमः(Analysis approach)

(4) संश्लेषणोपगमः (Seynthesis approach)

आगमनोपगमे प्रयोगद्वारा समस्यायाः समाधानं तदनु निष्कर्षश्च क्रियते। निगमनोपगमे समाधानत्वेन पूर्वमेव कोऽपिनिष्कर्षः प्रस्तूयते। तस्य परीक्षणं विधाय पुनर्निर्णयः इति क्रमोऽनुसर्यते विश्लेषणोपगमे समस्यां खण्डशःविच्छिद्य, समाधानमन्विष्यते संश्लेषणोपगमे समस्याः एकीकृत्य समाधानाय प्रयत्यते। अतः शिक्षकःछात्राणां रुचिं, परिस्थितिं, क्षमतां, साधनानि च विचिन्त्य उचितोपगमस्य प्रयोगं विदधीत।

### (ङ) समस्याविधौ शिक्षकस्य स्थानम्

अस्मिन् विधौ शिक्षकस्य महत्त्वपूर्णं स्थानं वर्तते। "अध्यापकः कक्षायां स्वतन्त्रं वातावरणं कल्पयेत्। तदेवोचितरूपेण समस्यां समाधातुमुपकुर्यात्। वातावरणं अनौपचारिकमपि स्यात्। परस्परं छात्राः अध्यापकाश्च व्यक्तित्वमवगत्य कार्यं साधयेयुः" इति समस्यात्मकं वातावरणमुत्पाद्य समस्यामुपस्थापयितुमङ्गीकर्तुं विवृणोतुं शिक्षकः उपकुर्यात्। आदितः आरम्भान्तं शिक्षकः सक्रियः भूत्वा समस्यां समाधातुं सहयोगं कुर्यात्।

**( च ) समस्याविधेः गुणा**

(1) विचारात्मकं चिन्तनमभिवर्धयति।

(2) छात्राः स्वस्वजीवने समाहव परिस्थितीः अभिमुखीकर्तुं समर्था भवन्ति।

(3) अयं विधिः तर्कपरः, विकासात्मकः वर्तते छात्राश्च सक्रियाः भवन्ति।

(4) बौद्धिकविकासं कारयति।

(5) व्यक्तित्वं विकासयति।

(6) छात्रेषु सहानुभूतिः, सहिष्णुता इति गुणान् संवर्धयति।

(7) मौलिकं चिन्तनमभिवर्धयति।

(8) गुरुशिष्ययोर्मध्ये घनिष्ठसम्पर्कं संस्थापयति।

(9) अयं विधिः सार्थकः, क्रमवद्धः, आविष्कारश्च वर्तते।

**( छ ) समस्याविधेःन्यूनता**

(1) अस्य विधेः प्रयोगः कक्षाध्यापने सर्वदा न सम्भवति।

(2) सर्वत्रास्योपयोगः न सम्भवति। गणितं, दर्शनं, विज्ञानं, व्याकरणम् इति सीमितेषु विषयेषु तत्रापि सीमितेषु प्रकरणेष्वेव अस्य प्रयोगः युक्तिसङ्गतः भवेत्।

(3) अयं विधिःप्रौढानां कृते महते लाभाय स्यात्, न तु विद्यालयबालकानां कृते।

**उपसंहारः**

गुणदोषाः प्रतितन्त्रं भवन्त्येव। तथाऽपि न्यूनताः अवगत्य ताः दूरीकर्तुमुपायान् विचिन्त्य सावधानं विधिः प्रयोक्तव्यः। यद्यपि सर्वदा अस्योपयोगः न सम्भवति, मासे पक्षे वा एकवारमस्य प्रयोगः विधेयः। पुनरन्वेषणं Re-discovery छात्राणां हिताय भवति। अतः अध्यापकोऽपि सामञ्जस्येन अमुंविधिं यथोचितं प्रयोजयेत्।

## ( घ ) निदर्शनविधिः
## Illustrative Method

निदर्शन-शब्दस्यार्थः भवति-"अर्थप्रकाशनं भावस्पष्टीकरणम् च" दर्शनशिक्षणे निदर्शनस्य (दृष्यान्तस्य) 'यस्मिन्नर्थे बुद्धि साम्यं स दृष्यान्तः' इत्युच्यते। पूर्वोत्तरपक्षयोः बुद्धिसाम्यमेव दृष्यान्तः इति अङ्गीक्रियते। तात्पर्यमस्ति-उदाहरणं, उपमा, चित्रं, छायाचित्रं, पत्रकम् इत्यादीनां प्रयोगैः ज्ञानं स्पष्टीकरणमेव। संस्कृतशिक्षणं रोचकं-सुग्राह्यम्-आकर्षकञ्च करोतीति निदर्शनविधिः प्रयोक्तव्यः। आभिः क्रियाभिः बालकस्य सर्वाङ्गीन-विकासो भवति। बालकान् आत्माभिव्यक्तेः आत्मानं, अन्यान् वा अभिज्ञातुं स्वकीया-रुचेः विकसितीकरणस्य, स्वकीय-कार्याणां नियन्त्रितकरणस्य च अवसरः प्राप्तो भवति।

**( 1 ) Joseph landom**–Illustrations have not only an Illumining power but a fixing power also.

(2) निदर्शनं–'पूर्वज्ञातं वा इन्द्रियजन्यज्ञानं वर्तते। यस्य प्रयोगः मस्तिष्कजन्य-ज्ञानाय सत्प्रयासः, सहयोगश्च पदानामर्थः क्रियते। यस्य ज्ञानस्य सम्बन्धे छात्रः न जानाति।

**निदर्शनस्य प्रकारः—**(क) मौखिकः, (ख) प्रदर्शनात्मकश्च, **(क) मौखिक (Verbal) निदर्शनम्**– मौखिक निदर्शने एतानि वस्तूनि आगच्छन्ति, ये मस्तिष्कं शब्द-द्वारा व्यक्ते सति सम्बन्धित विचारेण प्रभावितः क्रियते। छात्राणां मानसिकक्षमतायाः विकासो भवति।

Verbal Illustrations influence the mind through the medium of related ideas expressed in works.

मौखिक-शाब्दिक-चित्राणां प्रस्तुतीकरणाय कलाशिक्षणे प्रायः एषः अवसरः आयाति, यदा शिक्षकद्वारा किमपि गूढ़कथने, विचारे, भावस्पष्टीकरणे च क्लिष्टता अनुभूयते, एतद् अवसरे मौखिकमुदाहरणं, उपमा, तुलना इत्यादीनां प्रयोगं कृत्वा ते स्पष्टीक्रियन्ते। इन्द्रियाणामाकर्षणं शिक्षणस्याधारभूतं वर्तते। प्रो० जे. जे. वैबर लिखति यत्-अस्माकं 40%चत्वारिंशत् प्रतिशतं विचारधारा दृश्यानुभूतिः वर्तते। सैद्धान्तिक चिन्तनस्याधारभूतं वर्तते निदर्शनम्। यूनिसेफ इत्यस्याध्ययनेन 83% दृश्यानुभूतिः वर्द्धते। ज्ञानेन्द्रियानुभवेनैव कस्यापि वस्तुनः अथवा कस्याः अपि क्रियायाः मानसिक-चित्रस्य निर्माणं भवति।

**मौखिकनिदर्शनस्य रूपम्** (Forms of Verbal Illustrations)

**(1) उदाहरणम्**-(Example) निदर्शनस्य सर्वसाधारणरूपम् उदाहरणं वर्तते।

यथा-द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, अभाव इति सप्त पदार्थाः।

**(2) शब्दचित्रम्**-(Word pictures) शब्दचित्रमाध्यमेन व्याख्यानं करणीयम्।

यथा-'इन्द्रियार्थ सन्निकर्षजन्यज्ञानं प्रत्यक्षम्', अक्षरज्ञानाय चित्राणां प्राथमिकस्तरादेव महतीभूमिका वर्तते। छात्राणां शब्दकोशस्य वर्धने एवं कठिन- शब्दानामर्थस्पष्टीकरणेऽपि चित्राणि सहायकानि भवन्ति।

**(3) उपमा**-(Simile) साम्यं वाच्यमवैधर्म्यवाक्यैक्ये उपमा द्वयो भावस्पष्टीकरणाय उपमायाः प्रयोगः कर्त्तव्यः। "भिन्नत्वे सति साधर्म्यमुपमानोपमेययोः, सत्यमारोपितं वा स्यादुपमा सा प्रकीर्त्तिता।" यथा-

> **उपमातत्रसादृश्य लक्ष्मीरुल्लसति द्वयोः,**
> **हंसीवकृष्ण! ते कीर्त्तिः स्वर्गङ्गामवगाहते।**
> **वागर्थाविव संपृक्तौ वागर्थः प्रतिपत्तये।**
> **जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।**

उपमा कालिदासस्य-महाकविः वागर्थाविव सम्भूयमानौ, जगतः मातापितरौ पार्वतीपरमेश्वरौ भाषाभावज्ञानाय नमामि इति भाषाभावयोः अविनाभावं प्राकटयत्।

**(4) तुलना**-(Comparison) तुलनायाः प्रयोगः सर्वेषां विषयाणां शिक्षणे प्रयोक्तव्यः। यथा-चार्वाकदर्शनेन सह प्रकृतिवादिदर्शनस्य तुलना।

**(5) असमानता** (Contrast) किमपि तथ्यं, विचारं च स्पष्टयितुम् असमानतायाः प्रयोगः करणीयः। यथा-सूर्य-पृथिव्योश्च आकारे अन्तरज्ञानाय क्रमशः कन्दुकः चणकःप्रयोक्तव्यः।

**( ख ) प्रदर्शनात्मकं निदर्शनम्** ( Visual illustrations )

प्रदर्शनात्मक-निदर्शने "मानव-मस्तिकं ज्ञानेन्द्रियद्वारा प्रत्यक्षरूपेण प्रभावितं क्रियते, तानि वस्तुनि आगच्छन्ति। ( Visual illustrations act directly though the senses.) अनेन शिक्षणेन ज्ञानस्यप्रत्यक्षीकरणाय मूर्त्तता सम्पादनाय च एतादृशानां शैक्षिकोपकरणानाम् आवश्यकता महत्ता च स्वयमेवसिद्धा, येषां माध्यमेन वस्तुनः क्रियायाः भावस्य विचारस्य च विम्बग्रहणं सम्भवेत्।

**(1) वस्तुप्रदर्शनम्**—वास्तविक-वस्तूनि दर्शयित्वा कस्यचन कथनस्य, तथ्यस्य, भावस्य वा स्पष्टीकरणम्। यस्याधीने प्राकृतिक-भौतिक-स्थूलप्रदार्थाः आगच्छन्ति। येन निदर्शनेन छात्राणां निरीक्षण-अवलोकनशक्तीनाञ्च विकासो भवति। शिक्षणे तेषां रुचिः जिज्ञासा च जागृता भवति। यथा-पदार्थादि प्रदर्शनम्।

**( 2 ) प्रतिकृति** (mdels)—प्रतिकृति-प्रदर्शनेन यथार्थताया वास्तविकता वा भावना जागृता भवति। पाठेन सह वास्तविक-सम्बन्धात्मक प्रतिकृतिः भवेत। यथा-लक्षणानां प्रदर्शनम्। ('एकत्वादि व्यवहारहेतु:संख्या')

**( 3 ) चित्रं-पोस्टरञ्च** (Pictures and Posters)—चित्र-पोस्टर-माध्यमेन अमूर्तवस्तुनः तस्य सङ्कल्पना मूर्तिमती भवति। छात्राणां शब्दकोशस्य वर्धने एवं कठिनशब्दानामर्थ-स्पष्टीकरणेऽपि चित्राणि सहायकानि भवन्ति। चित्राणि भावानां तथ्यानां मुख्यविषयस्य स्पष्टीकरणे सहायकानि भवन्ति। अनेन छात्रेषु निरीक्षणस्य विश्लेषणस्य च प्रवृत्तिः जागृता भवति।

**( 4 ) सूचकचित्रम्** (Diagrams)—शिक्षणे चित्रस्य स्थाने सूचकचित्रस्य प्रदर्शनं लाभप्रदं वर्तते। तान् दृष्ट्वा छात्राः वस्तूनां कल्पनां कुर्वन्ति। सूचकचित्रं सरलं स्पष्टं च भवेत्। (The simpler a diagram is the more direct its appeal.)

**( 5 ) वर्णचित्रम्** (Charts)—वर्णचित्रस्य प्रयोगः तत्सम्बन्धि-विषयाणां शिक्षणे महत्त्वपूर्णं स्थानं वर्तते। दर्शनशिक्षणे परिचये ग्रन्थपरिचये अनेन बोधनोपकरणमाध्यमेन पाठनं क्रियते चेत् अत्यन्तरुचिपूर्णं भवति।

**( 6 ) मानचित्रम्** (Mape)—पाठ्यविषयेण सह तत्सम्बन्धित विषयाः एव प्रदर्शयेयुः। भौगोलिक-स्थलानां ज्ञानाय अस्य प्रयोगः करणीयः।

**( 7 ) रेखाचित्रम्** (Sketches)—शिक्षण-समये भावं तथ्यं वा स्पष्टयितुं रेखाचित्रस्य प्रयोगः श्यामपट्टे भवेत्।

**( 8 ) रेखापत्रम्** (Graph)—शिक्षकाः स्वयं वा छात्राणां सहयोगेन रेखापत्रस्य माध्यमेन ज्ञानं प्रदर्शयेयुः।

वास्तविकोदाहरणैः प्रतिमानैः चित्रैः, मानचित्रैः, रेखाचित्रैः, प्रायोगिकप्रदर्शनैः विविधैः दृश्योपकरणैः च प्रकृतोऽयं दृष्टान्तः उपस्थापयितुं शक्यते। अशाब्दिकदृष्टान्ताः प्रदर्शनात्मक-दृष्टान्ताः वा ज्ञानेन्द्रियमाध्यमेन मानवमस्तिष्कं प्रत्यक्षतया प्रभावयन्ति।

**(ग) निदर्शनस्योद्देश्यानि (Aims of illustrations)**

कठिनातिकठिनविषय:विचारः वा सारल्येन निदर्शन-माध्यमेनबोधयितुं शक्यते। तान् दृष्टान्तान् प्रभावात्मकविधिना कक्षायां प्रस्तोतुं शक्नुयात्।

(1) पाठं सरलीकृत्य छात्रमानसपटले उपस्थापनम्।
(2) ज्ञानस्य सुलभीकरणं विस्तृतीकरणञ्च।
(3) ज्ञान-ध्यानयोः स्थायीकरणम्।
(4) पाठेरुचिमुत्पाद्य उत्तरोत्तरजिज्ञासायाः अभिवर्धनम्।
(5) कल्पनाशक्ति-तर्कशक्तीनां च विकासः।
(6) निरीक्षणशक्तीनां विकासः।
(7) अवधानं केन्द्रीकृत्य सारल्येन ज्ञान विस्तारः।

**(घ) निदर्शनस्य प्रभावशाली प्रयोग**

(1) कक्षाप्रवेशात् पूर्वमेव निदर्शनानां सज्जीकरणं विधेयम्।
(2) सरलाः रोचकाः व्यावहारिकाश्च दृष्टान्ताः दातव्याः।
(3) विषयनिदर्शनयोः समन्वयः कार्यः।
(4) विषयसम्बद्धाः सार्थकनिदर्शनाः प्रदर्शनीया।
(5) विषयानुगुणं मौखिकस्य प्रदर्शनात्मकस्य च निदर्शनस्य उपस्थापनं कर्त्तव्यम्।

एतेषां निदर्शनानां चयनम्, उपयोगः, उपस्थापनं च अत्यन्तं निष्ठया, श्रमेण च कर्तव्यम्। अभ्यसने आसक्तिः श्रद्धा च वर्धेते। श्रद्धावान् लभते ज्ञानम् इति गीतावचनानुसारं श्रद्धया विषयज्ञानं वर्धते। Rousseau महोदयस्य कथनम्-

"Never substitute the sign for the things itself save when it is impossible to show the thing absorbs the attention of the child, and makes him forget the thing, it represents."

**(ङ) उपसंहारः**

उपर्युक्तविवरेण शिक्षणे निदर्शनस्य महत्त्वं स्पष्टं भवति। अस्य निदर्शनस्य प्रयोगस्तु 'ज्ञातात् अज्ञातं प्रति" स्थूलात् जटिलं प्रति" सरलात् काठिन्यं प्रति' इति त्रयाणां शिक्षणसूत्राणां अनुकूलता वर्द्धते। अतः आदर्श शिक्षकाणां कृते महत्त्वपूर्णोऽयं विधिः। निदर्शनानाम् उदाहरणानां वा माध्यमेन अध्यापकः नवीनं, जटिलम्, अमूर्तं च ज्ञानं सरलतया छात्रेषु प्रापयितुम् अर्हति।

## ( ङ ) ह्यूरिस्टिक्-विधि:
## Heuristic Method

शिक्षाक्षेत्रे दिनानुदिनं सामान्यो विशिष्टो वा विधि: अन्विष्ट:, आविष्कृतो वा भवति। नवपद्धतिरपि वातावरणानुगुणं स्वतन्त्ररूपेण आविष्कृता भवति। यथा–हरवर्टीयपञ्चपदी, माण्टेसरी–वालोद्यानपद्धतय:, आगमननिगमनविधि:, एवं आगमनसमस्याविधयो: संयोजनेना–विष्कृतोऽयं विधि: ह्यूरिस्टिक्विधिरिति नाम्ना प्रथते। शिक्षाक्षेत्रे अस्य विधे: असाधारणं स्थानं वर्तते।

### ( क ) अर्थ: परिभाषा च

**''मितं भाषेत, बहु कुर्वीत''** इति सिद्धान्तम्, ''अध्यापका: छात्रान् अत्यल्पमेव पाठ्येरन्, अत्यधिकं अन्वेषणे प्रोत्साह्येरन्'' इति। Herbert Spencer महोदयस्य हरवर्टीय सिद्धान्तं चाधारीकृत्य प्रो० एच. ई. आर्मस्ट्राँग [Prof.H.E.Armstrong] महोदय: नवदशशताब्द्यां विज्ञानविषय शिक्षणार्थम् अमुं विधिं पर्यकल्पयत्। प्रथमं यदा विद्यालयेषु विज्ञानविषय: अनिवार्यतया पाठ्यक्रमे संयोजित:, तदा प्रयोगशाला:, उपकरणानि च विना कथं शिक्षयेत् शिक्षक: इति समस्या समुदिता। आर्मस्ट्राँग महोदय: सरलतया उपकरणै: विना विज्ञानविषयशिक्षणार्थममुं विधिं समदर्शत्। तत: आरभ्याय स्वतन्त्रविधित्वेन प्रयुज्यमानो वर्तते। अद्य अस्योपयोग: न केवलं विज्ञानविषये, अपि च गणित–व्याकरण– दर्शन– प्राकृतिक–विज्ञानादिष्वपि विषयेषु वर्तते। ह्यूरिस्टिक् इति पदं ह्यूरिस्को [Heurisco] इति ग्रीक्शब्दस्य विकृतं वर्तते। तस्यार्थ:—**''अहमन्विष्यावगच्छामि''** इति। अत्र विधौ छात्रा: स्वयमेव तत्त्वमन्विष्य अवगच्छन्ति। अध्यापक: तदर्थं व्यवस्थापयति। स तु केवलं मार्गदर्शकत्वेन कर्मं करोति। न तु सर्वं शिक्षयति। छात्रेभ्य: तत्त्वानामवलोकनार्थं निरीक्षणार्थं चावसरं परिकल्पयति। छात्रा: तत्त्वानि स्वयं विविधोपकरणानां साहाय्येनावलोक्य नियमं, मूलभूतं तत्त्वं वा अवगच्छन्ति। छात्रेभ्य: तत्त्वानि न पाठ्यन्ते, किन्तु ते स्वयमेव अन्वेषका: भूत्वा तत्त्वानि आविष्कुर्वन्ति। आगमनविधे: तत्त्वान्यतिरिच्य अत्र विधौ किमपि नावीन्यं न वर्तते। अत्र छात्रा: स्वीयसमस्यायास्समाधानम् अन्येषां साहाय्येन विना स्वयमेव सपरिश्रमं सप्रयासं च प्राप्नुवन्ति। विधिरयं छात्रान् शोधकर्मणि प्रेरयति। छात्रा: स्वीयान् आक्षेपान् स्वयमेव समाधत्ते। अन्ते स्वयमेव तत्त्वज्ञानमन्विष्य प्राप्नुवन्ति। छात्रा: स्वानुभवै: ज्ञानं प्राप्नुवन्ति। एवञ्च ह्यूरिस्टिक् विधौ छात्रा: समस्यां श्रुत्वा स्वयमेव आवश्यको- पकरणान्येकीकृत्यान्विष्य परीक्ष्य तत्त्वज्ञानं प्राप्नुवन्तीति स्पष्टं प्रतीतं भवेत्। अत्र प्रक्रियाया एव महत्त्वं वर्तते। यत: इयं खलु प्रक्रिया छात्रेषु विविधकौशलानि संवर्धयति।

### ( ख ) ह्यूरिस्टिक् विधे: प्रमुखानि उद्देश्यानि

1. परिश्रम:, निरीक्षणं, चिन्तनमित्येषां महत्त्वप्रतिपादनम्।
2. अनुसन्धानतत्त्वानां परिचय:।

3. छात्रेषु वैज्ञानिकासक्तेः प्रवृत्तेश्च संवर्धनम्।
4. स्वाध्यायान्मा प्रमदितव्यमितिज्ञानोत्पादनम्।
5. स्वप्रयासैरधिगततत्त्वानां व्यवस्थापनाय नियमनाय च प्रशिक्षणम्।
6. स्वीयानुभवानां तर्कसङ्गतरीत्या व्यवहारे नयनम्।
7. तत्त्वज्ञानं कथं प्राप्नुयाच्छात्र इति विषये प्रशिक्षणम्। इत्येतानि ह्यूरिस्टिक् विधेः प्रमुखान्युद्देश्यानि भवन्ति।

## (ग) आधारभूताः सिद्धान्ताः

आर्मस्ट्रॉग महोदयः स्व ह्यूरिस्टिक्विधिम् केषाञ्चित् सिद्धान्तानामाधारेण समकल्पयत्। सामान्यतया प्रचारे व्यवहारे वा यो विधिः वर्त्तते तत्र सिद्धान्ताः अन्विष्य ज्ञायन्ते। परन्तु अत्र विधिः वास्तविकरूपेण मनोवैज्ञानिकसिद्धान्तानामाधारेण कल्पितो वर्तते। वस्तुतः इमामेव औपचारिकतां नवविधीनामन्वेषणात् शिक्षाशास्त्रिणः उद्घोषयन्ति। तथाऽपि Armstrong महोदयः आवश्यकता अभिमुखीकृत्य, ताभिः प्रेरितस्सन् इमं विधिं प्रदर्शयिष्यते। अस्मिन् निहितास्सिद्धान्ताः केचन वर्तन्ते। यथा–

1. विधिः प्रामुख्येन क्रियाशीलता सिद्धान्तमनुसरति, यतः छात्रः स्वयमत्र सक्रियः भूत्वा शिक्षते।
2. कार्यमुखादधिगमः इति सिद्धान्तमाधारीकृत्य, छात्राः निरीक्षणं, तत्त्वानाम् संकलनं, नियमनिर्धारणं इति सर्वं कार्यं सम्पाद्याधिगमं प्राप्नुवन्ति।
3. रुचेः सिद्धान्तः।
4. प्रेरणसिद्धान्तः।
5. प्रयत्नसिद्धान्तः।
6. अनौपचारिकसिद्धान्तः।
7. विकासात्मकसिद्धान्तः। इति विविधसिद्धान्तान् पुरस्कृत्य विधिरयं प्रवर्तते।

## (घ) ह्यूरिस्टिक्विधौ शिक्षकस्य स्थानम्

अत्र विधौ छात्राः स्वयमेव सर्वं कृत्वाऽवगच्छन्ति, अतः अध्यापकः अनपेक्षितः इति न वाच्यम्। वस्तुतः अध्यापकस्य महत्यावश्यकता वर्तते। अत्र अध्यापकस्य कीदृशं स्थानं भवेत् इति विवरणं निम्नोक्तं वर्तते। यथा–

1. अध्यापकः विषयज्ञः प्रतिभावान् च स्यात्।
2. सः अल्पमेव बोधयेत्, छात्राः तस्मात् संसूचनं प्राप्य अग्रेसरेयुः।
3. अध्यापकः वैज्ञानिकविषयाणां ज्ञाता, निरीक्षकश्च भवेत्।
4. साधनानि विषयाश्च कुतो लभेरन्निति मार्गप्रदर्शकः भवेत्।
5. सः तत्त्वं जानन्नपि यावत् छात्राः स्वयं न अवगच्छन्ति, तावन्न वदेत्। ज्ञाने मौनं कष्टमेव, तथापि नियमं पालयेत्। यदि छात्राः सर्वथा न अवगच्छन्ति, तर्हि तान् सम्बोध्याग्रेसारयेत्।

6. प्रश्नकरणे कुशली स्यात्, यतोऽयं विधिः प्रश्नानामाधारेणैव तत्त्वमवगमयति। यथापेक्षमेव मार्गदर्शनं कुर्यात्।
7. छात्राणां समस्याः प्रतिपदमवगत्य समाधानं कुर्यात्।
8. सूक्ष्मनिरीक्षकः।
9. सामाजिकज्ञानयुक्तः।
10. सुमार्ग दर्शकः।
11. आदर्शवादीयगुणयुक्तः, विषयज्ञः, ज्ञानवान् च भवेत्।

**(च) ह्यूरिस्टिक्विधौ निम्नाङ्कित-पञ्चपदानि प्रयुज्यन्ते। ते यथा-**

**1. समस्यायाः प्रस्तावः**—अध्यापकः पाठ्यविषयसम्बद्धां कामपि समस्यां कक्षायां प्रस्तूयात्। समस्यां तथा उद्घोषयेत् यथा सर्वे छात्राः सावधाना भवेयुः। छात्रेषु तादृशी भावना उदीयात्, समस्या पाठसम्बद्धा, उपयोगिनी चेति। दर्शनशिक्षणे अस्योपयोगितामुदाहरणमाध्यमेन प्रदर्शयेत्। यथा छात्राणां समक्षमियं समस्या उदेति- वैदिक-अवैदिकयोर्मध्ये कः भेदः? कति पदार्था कानि च तेषां नामानि? द्रव्याणि कति कानि च तानि? कति गुणाः के च ते? इत्यादि समस्यात्मक प्रश्नाः प्रष्टव्याः। छात्राः अन्वेषणे तत्परा भवेयुः। "अर्जितंज्ञानं चिरं भवति" इत्यालोके अन्वेषणीयम्।

**2. तत्त्वानां निरीक्षणं, सारणीकरणम्**—अत्र छात्राः समस्यां समाधातुमावश्यक तत्त्वानि, उपकरणानि च स्वयमन्विष्य एकीकृत्य सारणीकरणं कुर्वन्ति। सारणीकरणेन विश्लेषणे सौलभ्यं जायते। यथा-प्रकृतोदाहरणे छात्राः वैदिक, अवैदिक, पदार्थ, द्रव्य, गुणांश्च विविधान् संकलयन्ति। एतदर्थं दर्शनग्रन्थान् संस्कृतकाव्यानि, नाटकानि, गद्यानि, पद्यानि, व्यावहारिक प्रयोगान् च अवलोक्य, संगृह्य सारणीं निर्मान्ति। पृथक्-पृथक् सारणीं निर्मीय निरीक्षन्ते।

**3. परिकल्पना**—अत्र बालकाः स्वसंकलितविषयाणां निरीक्षणपूर्वकं सन्तर्क्य कामपि परिकल्पनामुचितां स्वसमस्यायाः समाधानत्वेन निश्चिन्वन्ति। यथा- प्रस्तुतविषये छात्राः एवं परिकल्पनां विदधाति षड् वैदिकदर्शनानि, त्रीनि अवैदिक दर्शनानि, सप्त पदार्थाः, नव-द्रव्याणि, चतुर्विंशति गुणाः इति।

**4. परीक्षणम्**—स्वकृतां परिकल्पनां छात्राः विविधैः प्रमाणैः, अध्यापकस्य सहयोगेन परीक्षन्ते। यथा-प्रकृते वैदिक-अवैदिक दर्शनानि, पदार्थाः, द्रव्याणि, गुणाः इति परीक्षन्ते।

**5. नियमनिर्धारणम्**—परीक्षणानन्तरं छात्रैः कश्चन् नियमः निर्धार्यते। यदि परिकल्पना पूर्णा साध्वी तां नियमत्वेन स्वीकुर्वन्ति छात्राः। परीक्षणात्परं परिकल्पनायां परिवर्तनस्या-वश्यकता भवति चेत्, तदनुपरिवर्त्य नियमनिर्धारणं कुर्वन्ति। यथा अत्र उदाहरणे- "वैदिकदर्शनानि आस्तिक पदेन व्यवह्रियते। अवैदिकदर्शनानि नास्तिक पदेन व्यवह्रियते। द्रव्यगुणकर्मसामान्य-विशेषसमवायाभावाः सप्त पदार्थाः। पृथिवी-अप-तेज-वायु-आकाश- काल-दिक्-आत्मा-मन इतिनव द्रव्याणि। रूप-रस-गन्ध-स्पर्श-संख्या-परिणाम-पृथकत्व-संयोग-वियोग-

परत्व-अपरत्व-गुरुत्व-द्रव्य-स्नेह-शब्द- बुद्धि-सुख-दु:ख-इच्छा-द्वेष- प्रयत्न-धर्म-अधर्म-संस्काराश्चतुर्विंशति गुणा:। इति नियम्य प्रकृतसमस्यां समादधति। एतेन छात्रा: ह्यूरिस्टिक् विधौ स्वयं सक्रिया: सन्त: तत्त्वं संकलय्य, परीक्ष्य, नियमं निर्धार्य ज्ञानं प्राप्नुवन्ति।

## (छ) ह्यूरिस्टिक्विधे: मूल्याङ्कनम्

विद्यालयेषु विज्ञानविषयं सरलतया विहित रीत्या शिक्षयितुं [Armstrong] महोदय: विधिममुं आविष्कृत्योपकृतवान्। अद्य तु अस्य विविधविषयेषु प्रयोगो भवति। एतदर्थं सम्पूर्ण शिक्षाजगत् तं प्रति अघमर्ण: भवति। गणितं, ज्योतिषं, दर्शनं, व्याकरणमिति विषयेष्वस्याधिक्येन प्रयोग: शिक्षाविद्भि: विधीयते।

अयं विधि: न मौलिक:। समस्या-आगमनविधे: संयोजनायं प्राप्यते। विधि: समस्यां पुरस्कृत्य प्रवर्तते। समस्याविधिरपि इदमेव कर्म करोति। एवं लक्ष्यमवलोक्य लक्षणं परिकल्प्यते आगमनविधौ। तथैवात्रापि समस्यां समाधातुं लक्ष्यमवलोक्य लक्षणरूपेण समाधानं परिकल्प्यते। आगमनविध्यपेक्षया नायमतिरिक्त: विधि: इति प्रमाणयति। अर्थात् आगमनविधे:परिवर्तितं रूपमेव ह्यूरिस्टिक् विधिरिति। तत्र आंशिको भेदोऽपि वर्तते- आगमनविधौ समस्यामनुत्पाद्योदाहरणानि प्रस्तूयन्ते। अत्र समस्यामुत्पाद्य लक्ष्ये तत्त्वानां निरीक्षणमिति एकं पदमतिरिक्तं वर्तते। विधिरयं समस्याविधे: प्रतिरूपक: वर्तते। यथा समस्याविधौ समस्याया: समाधानान्वेषणार्थं यतन्ते छात्रा:, तथैवात्रापि विधौ। Smith and Harrison इमौ स्पष्टयत:यत्-" छात्रा: स्वीयसमस्यायास्समाधानमितरेषां साहाय्येन विना स्वयमेव सपरिश्रमं सप्रयासं च प्राप्नुवन्ति" इति। अर्थात् ह्यूरिस्टिक् विधि: समस्यां पुरस्कृत्यैव प्रवर्तते, समस्याविधिवत्। Bossing महोदय: समस्याविधे: पदानि इत्थं वर्गीकरोति।-1. समस्याया: स्वीकृति:। 2. समस्याया: स्पष्टीकरणम्। 3. तत्त्वानां सङ्ग्रह:। 4. तत्त्वानां सङ्घटनम्। 5. तत्त्वानां विश्लेषणम्। 6. निष्कर्ष: /प्रयोग:।

"Hamby" महोदयेन शिक्षाचार्येण ह्यूरिस्टिक् विधे: इत्थं पदानि प्रतिपाद्यन्ते-1. समस्याया: कथनम्। 2. तत्त्वानां निरीक्षणं सारणीकरणम्। 3. परिकल्पना। 4. परीक्षणम्। 5. निष्कर्ष/ नियमनिर्धारणम्।

यदि अस्माभि: तटस्थबुद्ध्या तुलना क्रियते तर्हि अनयोर्मध्ये भेद एव नानुभूयेत्। अत: शिक्षाचार्याणां विचार एव प्रामाण्यम्। Prof.S.K.Kocchar निरूपयति-" अध्यापक: समस्यां समुपस्थाप्य विरमेत्। तत: प्रक्रियाया: केवलं निरीक्षणं कुर्यात्" इति। येन च सुस्पष्टं प्रतीयेत समस्याविधिमतिरिच्य न कश्चन नूतनोऽयमाविष्कार इति। Bhatia and Bhatia इमौ निरूपयत:यत्- " ह्यूरिस्टिक् विधि: समस्याया: समाधानमागमनेननिगमनेन च करोति" इति। एवं विचार्यमाणे स्पष्टं प्रतिभाति यत् ह्यूरिस्टिक् विधि: आगमन-समस्याविध्यो: संयुक्ताकारक एवेति।

**निष्कर्ष:**

अस्माभिरिदमेवोच्यते नायं समस्याविधिवत्, आगमनवत्, बालोद्यान पद्धति- वच्चस्वतन्त्र: इति। विधेस्तावत् काचन पृथगात्मा नूनमस्त्येव। नवविधि: कश्चनाविष्कृतो भवति चेत्, तत्रावश्यमेव कानिचन् प्रचलिततत्त्वानि दृश्येरन्। अत: द्वयो: विधय्यो: संयोजनेन प्रचलितस्य विधे: परिवर्धनेन वा नवविधिराविष्कृतो भवति, तत्र मौलिकताया: विवेचनापेक्षया प्रक्रियाया: एव महत्त्वं प्रदेयमस्माभि:। अत्र विधौ प्रक्रिया महत्त्वपूर्णा परिलक्ष्यते। सा च छात्रेषु सर्वाङ्गीण विकासं कारयति। प्रो० आर्मस्ट्रॉग महोदयस्य विधिरयं संश्लिष्टस्यास्य विधे: दर्शनशिक्षणे महत्त्वं निर्विवादमेव।

**( ज ) ह्यूरिस्टिक्विधे: गुणा:**

1. वैज्ञानिकभावनामुत्पाद्य, अन्वेषणे प्रयोगे चासक्तिं वर्धयति।
2. छात्रेषु अध्यापकेषु च परिश्रमं प्रयासं चोत्तेजयति।
3. आत्मविश्वासं, आत्मनिर्भरतां च प्रोत्साहयति।
4. अर्जितं ज्ञानं चिरं तिष्ठति, यत: छात्र: स्वयमन्विष्य तत्त्वमवगच्छति।
5. छात्र: सक्रियो भवति।
6. छात्रा: स्वयमेव सर्वं कुर्वन्ति, अध्यापक: मार्गमेव दर्शयत्ति।
7. छात्राध्यापकयो: सम्बन्ध: द्रढीयान् भवति।
8. छात्राणां मानसिकक्षमता विकासं प्राप्नोति।
9. मनोवैज्ञानिकोऽयं विधि:।
10. पूर्वानुभवानां स्थानान्तरीकरणे सक्षमा: भवन्ति छात्रा:।
11. अत्र बहवो गुणा: प्रशंसनीया वर्तन्ते, यै: व्याकरणशिक्षणं हितकरं भवति।

**( झ ) ह्यूरिस्टिक् विधे:न्यूनता:**

1. कक्षाऽध्यापने सर्वदा अस्योपयोग: न सम्भवति।
2. महान् समयोऽपेक्षितो भवति।
3. प्रक्रियेयं बालानां क्षमतामातिरिच्य वर्तते।
4. अन्वेषणशीलता, तत्त्वसंकलनं, निरीक्षणं, सारणीकरणम् इति प्रौढैरप्यतिकष्टेन साध्यते।
5. सामान्यशिक्षकै : व्यवस्थापितुं न शक्यते।
6. रुच्युत्पादनं, समस्याया: चयनं, निरीक्षणं, सर्वं श्रमेण साध्यं भवति।

**( ञ ) उपसंहार**

विधे: गुणदोषाणां विवेचनेन गुणानामेवाधिक्यमवलोक्यते। किन्तु परीक्षाकेन्द्रितेऽस्मिन् वातावरणे विधे प्रयोग: यथावत् न सम्भवति। अपि च विशिष्टोपकरणानां शिक्षकाणां च आवश्यकता महती वर्तते। तथाऽपि अस्य विधे: लाभान् विचिन्त्य बालानां, शिक्षका-

उपकरणानां, वातावरणस्य च स्थितिमवलोक्य तदनुगुणं यथाशक्ति विधिः अयं प्रयोगे आनेतव्यः। दर्शन-गणित-व्याकरण-विज्ञानादिषु विषयेषु अवश्यमेवायं प्रयोज्यः। विशिष्टमाध्यमिकविद्यालयेषु संस्कृतदर्शनं यद्यनेन विधिनाऽध्याप्येत तर्हि शिक्षणं सार्थकं हितकरं च भवेत्।

卐 卐 卐

# 27

# निरीक्षणाधीनः स्वाध्यायः

# Self Study and Guidance

## (क) स्वरूपम्

कक्षायां जायमानानां घटनानाम् अवबोधःवास्तविककक्षायाः परिस्थिति-निरीक्षणेन सम्भवति। क्रमबद्धनिरीक्षणं तादृशी काचित् प्रक्रिया, यया कक्षा- व्यवहाराणां निरीक्षणं वस्तुनिष्ठरूपेण कर्तुं शक्यते। एतस्य निरीक्षणाधीन- स्वाध्यायस्य-सहयोगेन कक्षायां छात्राध्याकयोः अन्तः क्रिया अध्येतुं शक्यते। अनेन छात्र-व्यवहार-क्रियाः संवेगात्मक-बौद्धिकपरिपक्वताः, सामाजिक-व्यवस्थापनानि च निरीक्ष्यन्ते। प्रविधिरयं कौशलानां विकासनिरीक्षणार्थं संस्कृते दर्शनशास्त्रेऽपि प्रयोक्तुं शक्यते। एतस्य निरीक्षणाधीन-स्वाध्यायस्य साहाय्येन क्षणाभ्यन्तरे जायमानायाः घटनायाः निरीक्षणं क्रमवद्धरूपेण कर्तुं शक्यते। एषः प्रविधिः कश्चन वस्तुनिष्ठः वैज्ञानिकश्च दर्शनाध्यापनार्थं निरीक्षणविधिरिति मन्यते।

''स्वाध्यायोऽध्येतव्यः'' ''स्वाध्यायान्माप्रमदः'' ''स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमिति'' उपनिषत् प्रमाण-वाक्यम्। स्वाध्यायः पठनस्य अन्तिमं रूपम्। स्वाध्यायेन मनोविनोदः, आनन्दश्च जायते। छात्राः संस्कृत-भाषायाः पर्याप्त-ज्ञानप्राप्तेः अनन्तरं संस्कृत-साहित्य-स्वाध्यायेन निरन्तरं मनोविनोदम्, आनन्दानुभूतिं च लभेरन्। स्वाध्यायो नाम ''अधीतविषयाणाम् पुनरावर्तनम्''। ब्रह्मचर्यदशायां ये अंशाः अधीताः तान् गृहस्थाश्रमे विविधकार्यभारैः स्मर्तुमवकाशो न भवेत्। अधीताः अंशाः वारं वारं न पठिताश्चेत् ते अंशाः क्रमशः विस्मृतिं गच्छेयुः। अतः ब्रह्मचर्याश्रमेऽधीता अंशाः गृहस्थाश्रमे वारं वारम् आवर्त्तनीयाः। नोचेत् कालक्रमेण अधीता-अंशाः विस्मृताः भवेयुः। एतत्तु सर्वेषां-विषये समानतयान्वेति।

परन्तु अद्यतनेषु दिनेषु केऽप्यस्मिन् विषये स्वीयीयमवधानं न प्रयच्छन्ति। इतराध्यापकानां स्थितिः अन्या, परन्तु संस्कृताध्यापकानां स्थितिः भिन्ना। संस्कृतभाषायां व्याकरण, न्याय, मीमांसा, साहित्यादयो विषयाः भवन्ति। ते सर्वे विस्तरतया सन्ति संस्कृत वाङ्मये। तत्रापि विषयाधिक्यं, विषयकाठिन्यं, नूतनपदानि, विभक्तयः, वचनानि, लिङ्गानि, लकाराः, कारकाः

बहवस्सन्ति। एतेपु अनेको संशया: वारं-वारम् आगच्छन्ति। पूर्वम् अधीता: एते विपया: स्मृतौ नोपतिष्ठन्ति। अत: अध्यापक: झटिति कक्षायां वक्तुं न समर्थो भवति। यदा वक्तुम् असमर्थो भवति तदा छात्रा: अपि तादृश: अध्यापकस्य गौरवं न प्रदर्शयन्ति। अत: अधीता:विपया: वारं-वारम् आवर्त्तनीया:। एवं वारं-वारम् आवर्त्तनं स्वाध्याय इत्युच्यते। एप: स्वाध्याय आजीवनं करणीय:। "अनभ्यासे विषं विद्या" "यावज्जीवमधीते विप्र:" इति वचनमपि इदमेव दृढ़ीकरोति।

**( ख ) निरीक्षणाधीन-स्वाध्यायस्य मूलधारणा**

(1) बालकेषु शिक्षकस्य प्रभाव: अधिक: सञ्जायते इति हेतो: बालकस्य व्यवहार: अध्यापकस्य व्यवहारेण प्रभावितो भवति।
(2) अध्यापकस्य कक्षागतव्यवहार: विशेषतया छात्रान् बहु प्रभावयति।
(3) अध्यापनप्रक्रियायां छात्रशिक्षकयोर्मध्ये जायमानसम्वन्ध: एकं महत्त्वपूर्णतत्वम्।
(4) अध्यापकस्य कक्षागतशाब्दिकव्यवहारस्य निरीक्षणं वस्तुनिष्ठरूपेण कर्तुं शक्यते।
(5) निरीक्षणाधीनस्वाध्यायेन मनोविनोद:, आनन्दश्च जायेते।

**( ग ) निरीक्षणाधीन-स्वाध्यायस्योद्देश्यानि**

(1) छात्राणां स्वाध्यायात्मकं कार्यस्य निरीक्षणम्।
(2) सक्रियतापूर्वकम् अनुवाचनस्य निरीक्षणम्।
(3) छात्राणां दुर्वलताया:स्वध्यायदशायां निरीक्षणम्।
(4) छात्राणां अभिरुच्यात्मक-भावस्य निरीक्षणम्।
(5) प्रशिक्षणप्रभावस्य सदुपयोगक्रमस्य निरीक्षणम्।
(6) छात्राणां व्यक्तित्वस्य निरीक्षणम्।
(7) गतिविधीनां कक्षायां गृहकार्यस्य च निरीक्षणम्।

**( घ ) निरीक्षणाधीन-स्वाध्यायस्य गुणा:**

(1) निरीक्षणेण छात्रेपु स्वाध्यायं प्रति सक्रियता आगच्छन्ति।
(2) उच्चारणगतदोपनिवारणाय निरीक्षणमावश्यकम्।
(3) पदार्थविवेचने निरीक्षणात्मकस्वाध्याय: महत्त्वपूर्ण: अस्ति।
(4) विभिन्नदर्शनानां विवेचने निरीक्षणात्मकस्वाध्यायस्य भूमिका आवश्यकी।
(5) दर्शनशास्त्रस्य तर्कपूर्णविवेचने निरीक्षणात्मकस्वाध्यायस्य प्रयोग: करणीय:। (कुशलप्रशिक्षितशिक्षकस्यावश्यकता, विभिन्नसंसाधनानामावश्यकता)

**( ङ ) निरीक्षणाधीन-स्वाध्यायस्य वैशिष्ट्यानि**

(1) एप:विधि: शिक्षकव्यवहारं वस्तुनिष्ठरूपेण कक्षायां प्रभावयति।

(2) कक्षाशिक्षणार्थं मूल्याङ्कनस्य एषः वास्तविकःविश्वसनीयश्च विधिः।

(3) सूक्ष्मशिक्षणे एतस्य प्रयोगः सहायकविधिरूपेण क्रियते।

(4) अनेन छात्रमूल्याङ्कनेन सह अध्यापकः स्वमूल्याङ्कनं कृत्वा आत्मनः गुणदोषान् विविच्य, दोषान् परिष्कर्तुमर्हति।

(5) अध्यापकः स्वव्यवहारेषु परिवर्तनं सम्पाद्य शिक्षणं प्रभावशालि तां सम्पादयति।

(6) कृत्रिमवातावरणेऽपि एतस्य प्रयोगः सफलतया कर्तुं शक्यते।

(7) शिक्षणाभ्याससमये अनेन विधिना छात्राध्यापकेषु अपेक्षितशिक्षणव्यवहाराणां ज्ञानं प्रदातुं शक्यते।

**( च ) निरीक्षणाधीन-स्वाध्यायस्य दर्शनशास्त्रे प्रयोगक्रमः**

यथा दर्शनशिक्षणे-दर्शनेन-श्रवणेन-घ्राणेन-स्पर्शेन च किं किं ज्ञानं प्राप्यते?

''इन्द्रियार्थ सन्निकर्ष जन्यज्ञानं प्रत्यक्षम्'' एतेन प्रत्यक्षज्ञानं प्राप्यन्ते छात्राः।

1. किं ब्रह्म?
2. तस्य किं स्वरूपम्?
3. कः ईश्वरः?
4. के तस्य प्राप्तेरुपायाः?
5. अस्मिन् जगति किं शाश्वतं तत्त्वम्?
6. इयं सृष्टिः कुतः आविर्बभूव?
7. जीवात्मनः किं स्वरूपम्?
8. कः पुनर्जायते? एते समस्यात्मक प्रश्नाः शिक्षकैः उपस्थाप्यन्ते। समस्याः उत्पाद्य प्रामाण्यप्रदर्शनपूर्वकं समाधीयन्ते च।

**( छ ) उपसंहार**

निरीक्षणात्मकस्वाध्यायस्य शिक्षणप्रक्रियायां अधिकं महत्त्वपूर्णं स्थानम् आवहति। कक्षायां छात्रशिक्षकयोर्मध्ये या अन्तःक्रिया जायते, सा शाब्दिकरूपेण एव सञ्जायते। अस्याम् अन्तःक्रियायां कदाचित् शिक्षकः, कदाचित् छात्रश्च शाब्दिकव्यवहारं कुरुते। सामान्यतः कक्षायां शिक्षकः प्रश्नान् पृच्छति, छात्रः उत्तरं प्रयच्छति। अत्र तु अध्यापकः उपक्रमकर्ता छात्रः अनुक्रियाकर्ता भवति। यदा छात्रः प्रश्नं पृच्छति, अध्यापकः उत्तरं ददाति। तादृशस्थले छात्रः उपक्रमकर्ता अध्यापकः अनुक्रियाकर्ता च भवति। कक्षायां छात्रशिक्षकयोर्मध्ये या अन्तःक्रिया सञ्जायते, तस्याः निरीक्षणम् अध्ययनं मूल्याङ्कनञ्च क्रियते।

卐 卐 卐

# 28

# प्रशिक्षणस्य स्थानान्तरणम्

# Transfer of Learning

**( क ) स्वरूपम्**

प्रक्रिष्टं शिक्षणं प्रशिक्षणम् Training इति कथ्यते। शिक्षणमेव शिक्षा, अर्थात् शिक्षणं प्रक्रिष्ट रूपेण स्यात् इति प्रशिक्षणम्। शिक्षणं विद्या ग्रहणम् शिक्ष् ल्युट् विद्योपदानम्। शिक्षणमेका कला वर्तते। शिक्षितीकरणं प्रशिक्षणदानम्। शिक्षणम् आङ्ग्लभाषायां Teaching इत्यस्य एव संस्कृत पर्यायपदम्। आधुनिकैः शिक्षाविद्भिः ''शिक्षा त्रिध्रुवीया प्रक्रिया''इति उच्यते। अस्यां प्रक्रियायां शिक्षकः, छात्रः, पाठ्यक्रमः त्रयोऽपि मिलित्वा शिक्षारूपं मन्दिरं निर्मान्ति। शिक्षायाः शाब्दिकार्थे शिक्ष् विद्योपादाने इति धातोः 'गुरोश्च हलः' इति सूत्रात् टापि शिक्षा इति निष्पद्यते। यस्यार्थः भवति शिक्षणम् अध्ययनं वा। एवमेव 'विद्या 'इति शब्दः 'विदलृ उपादाने 'इति धातोः निष्पन्नोऽस्ति। सोऽपि पूर्वोक्तार्थमेवाभिप्रैति। आङ्ग्लभाषायां शिक्षा इति शब्दः Education नाम्नाभिधीयते। लेटिन भाषायाः Educatum, Educare तथा Educere इति पदत्रयस्याधारेण उत्पन्नः इति शिक्षाशास्त्रिणामभिमतम्। आन्तरिकशक्तेः बहिरानयनम् अथवा अन्तस्थशक्तीनां वहिर्निष्क्रमणमित्यर्थः। अर्थात् लालनम् अथवा पालनम् इति। शिक्षापदस्य निर्देशः(Instruction) शिक्षणम् (Teaching) प्रशिक्षणम्(Training), अनुशासनम् (Discipline) पालन-पोषणम् (Breeding) संस्कृतिः (culture) च इत्याद्यर्थाः प्रतीयन्ते। Education इत्यस्य शब्दस्य अक्षरशः अवलोकनेन निम्नार्थः प्रतिभाति। तद्यथा-E>Effective प्रभावोत्पादकः। D>Duty कार्यदक्षता। U>Utilization उपयोगः। C>Character/ Culture चरित्रम्/संस्कृतिः।

A>Sctive क्रियाशीलः। T>Trained प्रशिक्षितः। I>Instruction निर्देशः। O> Outlook दूरदर्शी/दूरद्रष्टा। N> Narrowless संकुचित-चिन्तनरहितः। शिक्षायाः व्यापकार्थे 'शिक्षा नाम आजीवनं प्रचाल्यमाना काचित् गतिशीला प्रक्रिया', अर्थात् 'शिक्षायाः व्यापकार्थे ते प्रभावाः अन्तर्भवन्ति ये व्यक्तिं जन्मनः आरम्भ मृत्युपर्यन्तं प्रभावयन्ति' इति स्वीकर्त्तव्यम्।

शिक्षा बालकाय नवनवाननुभवान् प्रदाय तं सुयोग्यं निर्माति। एतेन सः स्वीयवातावरणेन सह सामञ्जस्यं स्थापयन्, स्वस्मिन् निहितशक्ती: योग्यताश्च पूर्णतया विकासयति। परिणामतः स स्वयोग्यतानुसारं स्वपरिवारस्य समाजस्य राष्ट्रस्य च विशिष्टक्षेत्रे योगदानं कर्त्तुं शक्नोति।

### (ख) अधिगमः (Learning)

मानवस्य अधिगमप्रक्रिया जन्मतः एव आरभ्यते। अतः सः आजीवनम् अधिगच्छन् भवति। मनुष्यस्य अधिगमार्थं न कोऽपि समयः न किञ्चित् सुनिश्चितं स्थानं भवति। सः सर्वदा सर्वत्र यत्किमपि अधिगन्तुं प्रभवति। न केवलं शिक्षासंस्थाभ्यः, अपि तु परिवारात् समाजात् मित्र-समुदायात् चलचित्रात् परिचितापरिचिता व्यक्तिभ्यःयत्किमपि शिक्षमाणः भवति। अधिगमस्य अर्थः, शिक्षणम् अथवा व्यवहार-परिवर्तनम्। व्यवहार- परिवर्तनम् अनुभवेन प्रशिक्षणमाध्यमेन च सञ्जायते। उदाहरणार्थं-केचन लघुबालः ज्वलन्तं दीपं स्पृशति। ज्वलतः दीपस्य स्पर्शेण तस्य हस्तः दग्धो भवति। तेन सः पीडाम् अनुभवति। भविष्ये सः बालः कदापि तथा न समाचरिष्यति। अयमेव अनुभवः अधिगमः इति उच्यते। एषः अधिगमः प्रशिक्षणेण प्राप्यते इति उच्यते। दैनन्दिनजीवने अस्माभिः अधिगमस्य अनेकानि उदाहरणानि दृश्यन्ते। यथा- पाठस्य स्मरणं, गणितादि-प्रश्नानां समाधानं, विविधयानानां चालनं, टङ्कणम् इत्यादीनि कार्याणि अधिगमत्वेन उच्यन्ते।।

(1) गेट्स मते-अनुभवेन प्रशिक्षणेन च जायमानं व्यवहारपरिवर्तनम्' अधिगमः' इति उच्यते।

(2) वुडवर्थ मते-नवीनज्ञानम् अनुक्रियां च प्राप्तुं क्रियमाणाप्रक्रिया अधिगमप्रक्रियाइत्युच्यते।

(3) स्किनर मते-व्यवहारे उत्तरोत्तरसामञ्जस्य प्रक्रिया एव अधिगमः इति कथ्यते।

(4) क्रॉनबेक मते-अनुभवस्य परिणामरूपेण व्यवहारपरिवर्तनेन अधिगमः प्रदर्शितो भवति।

### अधिगमस्य प्रकृतिः (Nature of learning)

(1) व्यवहारपरिवर्तनमेव अधिगमः।

(2) अधिगमः मानसिकक्षमतानां विकासस्य काचित प्रक्रिया ज्ञानात्मक-भावात्मक-क्रियात्मकपक्षाणां विकासः अधिगमप्रक्रिया जायते।

(3) अधिगमः काचित् आविष्कारात्मिका प्रक्रिया।

(4) अधिगमः काचित् शाप्वती प्रक्रिया भवति।

(5) अधिगमः समायोजनस्य काचन प्रक्रिया।

(6) अधिगमः काचन अभिबृद्ध्यात्मिका प्रक्रिया।

(7) अधिगमः काचित् सक्रियप्रक्रिया भवति।

### अधिगमस्य सिद्धान्ताः (Principles of learning.)

(1) अधिगमे उद्दीपनस्य अनुक्रियायाश्च विकासः सञ्जायते।

(2) अधिगमे पुनर्बलम् अत्यन्तं महत्त्वपूर्णं भवति।

(3) अभ्यासस्य सिद्धान्तः।

(4) अधिगमस्य क्रियाशीलसिद्धान्तः।

(5) संघठित-ज्ञानस्य सिद्धान्तः।

(6) अभिरूच्यात्मकसिद्धान्तः।

(7) अधिगमे छात्राणां योग्यतात्मकसिद्धान्तः।

(8) छात्राणां विकासार्थं वंशानुक्रमस्य सिद्धान्तः।

(9) अधिगमः सांस्कृतिकदृष्ट्या सापेक्षिकत्वेन प्रत्यक्षीकरणस्य सिद्धान्तः।

(10) अधिगमः बोधगम्यः स्थायी च भवति।

(11) अधिगमप्रक्रियायाःकारणात् छात्राणाम् उत्सुकतायाः स्तरः निर्धार्यते।

**(ग) शिक्षणाधिगमप्रक्रिया**

शिक्षणस्य प्रमुखं कार्यं तावत् अधिगमक्षेत्रे प्रभावशीलता-सम्पादनम्। अतः शिक्षणम् अधिगमश्च उभावपि अन्योन्याश्रितौ भवतः। पारस्परिकानाम् उद्देश्यानां पूर्तये प्रत्यक्षाप्रत्यक्षरूपेण एकः अन्येन सह सम्बन्धः भवत्येव। शिक्षणाधिगमयोः प्रक्रियां ज्ञातुं शिक्षणप्रक्रियायाः कानिचन सोपानानि अवलोकनीयानि।

(1) **उद्देश्यनिर्धारणम्**-छात्राणां व्यवहारेषु किं परिवर्तनं सम्पादनीयमिति शिक्षकः स्पष्टं ज्ञातुमर्हति।

(2) **परिस्थितेःनिर्माणम्**-अध्यापकः ज्ञानात्मिका-भावनात्मिकां-क्रियात्मिकामिति त्रितयाम् उद्देश्यानुसारं शिक्षापरिस्थितिं निर्माति। कदाचित् प्रश्नमाध्यमेन-प्रदर्शन-माध्यमेन-विवरण- माध्यमेन-विचारमाध्यमेन च शिक्षणपरिस्थितिं निर्माति।

(3) **छात्राणां अन्तःक्रिया अधिगमप्राप्तिश्च**- छात्रःस्वज्ञानेद्रियैः अन्तःक्रियां करोति। तदर्थं ज्ञानेन्द्रियाणां क्रियाशीलता अधिगमदृष्ट्या अत्यावश्यकी भवति। अन्तः क्रियायाः कारणतः छात्रः अनुभवं प्राप्नोति, यश्च अनुभवःअधिगमस्य अधारो भवति।

(4) **मूल्यांकनम्**-मूल्यांकनम् अस्याः प्रक्रियायाःअन्तिमं पदम्। निर्धारितोद्देश्य- प्राप्तिः जातम् न वेति एतेनैव ज्ञायते। एतन्माध्यमेन शिक्षणपरिस्थितेः प्रभावः ज्ञातुं शक्यते।

**प्रशिक्षणाधिगमप्रक्रियायाः स्थानान्तरणम्**

अधिगमे प्रभावोत्पादकं शिक्षणस्य मुख्योद्देश्यं भवति। यदा शिक्षणविषये चर्चा क्रियते तदा अधिगमं विना शिक्षणम् अपूर्णमिति शिक्षणं विना अधिगमः अपूर्णश्चेति प्रतीयते। शिक्षणप्रक्रिया अधिगमप्रक्रिया इति द्वयम् अपि शिक्षणाधिगम प्रक्रिया(Process of Teaching and Learning) इति एकेन नाम्ना उच्यते। सर्वस्यापि विषयस्य एकमेव उद्देश्यं भवति- 'प्रभाव्यधिगमोत्पादनम्' इति। प्रभाविशिक्षणक्षेत्रस्य सर्वेष्वपि अध्ययनेषु अधिगमस्य प्रभावशीलता प्राधान्येन अङ्गीक्रियते। प्रशिक्षणसिद्धान्ते अध्यापकः स्वतन्त्रचरः छात्रः

परतन्त्रचरश्च भवति। कविकुलगुरुकालिदासः स्वकीये मालविकाऽग्निमित्रे आदर्श भूताध्यापकस्य समुचितं निर्वचनं सूचयामास-

**शिष्टाक्रिया कस्यचिदात्मसंस्था, संक्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणां, धुरि प्रतिष्टापयितव्य एव।।**

अस्य च अयं भावः—केचन विद्याग्रहणे प्रवीणाः अपरे छात्राणां कृते बोधने कुशलाः, प्रायः अध्यापकाः विद्याग्रहणे, गृहीत विद्यायाः संक्रमणे च कुशलाः न भवन्ति। यस्मिन् अध्यापके एतद् उभयमपि भवति स एव अध्यापकः उत्तमाध्यापक-रूपेण अस्माभिः प्रतिष्ठापयितव्यः। स्वतन्त्रचरः अध्यापकः प्रशिक्षणस्य स्थानान्तरणं कुशलतापूर्वकं कुरुते। संस्कृताध्यापकः प्रशिक्षण महाविद्यालयात् संस्कृतशिक्षणस्य विधिवत् प्रशिक्षणं प्राप्नुयात् शनैः— शनैः सः स्वनवीनानुभावानामाधारेण ज्ञानस्य स्थानान्तरणं सुगमतापूर्वकं करोति।

**( 1 ) समस्यासमाधानार्थं प्रशिक्षणस्य स्थानान्तरणम्-**

व्यवहारपरिवर्तनमेवप्रशिक्षणस्य उद्देश्यं भवति। सर्वेऽपि अध्यापकाः शिक्षणस्य परिणामरूपं स्वच्छात्रेपु सम्पादयितुं चेष्टन्ते। एतानि उद्देश्यानि केवलं विन्दुरूपेण भवन्ति। शिक्षणस्य सम्पूर्णप्रक्रिया अस्यां दिशि भवति। यस्य स्थानान्तरणं छात्राणां मध्ये भवति।

**( 2 ) वैयक्तिकभिन्नतापरिपेक्षे प्रशिक्षणस्य स्थानान्तरणम्-**

एकैकस्यापि छात्रस्य व्यक्तित्वं भिन्नं भवति। अयं भेदः शारीरिक-मानसिक-चारित्रिक प्रभृति-विभिन्नताकारणात् एव भवति। एतेन भेदकारणेन एव अन्तःक्रियां कर्त्तुं प्रत्येकं छात्रस्य शिक्षणपरिस्थितिः विशिष्या। एतस्याः वैयक्तिकभिन्नतायाः कारणादेव कक्षायां सर्वेषां कृते समानशिक्षणपरिस्थितौ सत्यामपि केचन तीव्रगत्या, केचन सामान्यगत्या, केचन मन्दगत्या च अधिगमं प्राप्नुवन्ति। अतः कश्चन कुशलाध्यापकः एव एतादृशैः विभिन्नैः छात्रैः सह अन्तः क्रियां कर्त्तुं शक्नोति। तथैव प्रशिक्षणस्य उचित स्थानान्तरणं भविष्यन्ति।

**( 3 ) कार्यनियोजनात्मकप्रशिक्षणस्य स्थानान्तरणम्-**

समुचितपरिणामप्राप्तये शिक्षणकार्यं सुनियोजितरूपेण करणीयम्। नियोजित कार्यस्य अनियोजितकार्यस्य च परिणामे यःभेदःजायते, तदनुकूल प्रशिक्षणस्य स्थानान्तरणं करणीयम्।

**( 4 ) कक्षायां संवेगात्मकस्थितिः स्थापनाय प्रशिक्षणस्य स्थानान्तरणम्-**

अधिगमप्राप्तौ कक्षायाः सुखदसंवेगात्मकपरिस्थितेः अनुकूलप्रभावः भवत्येव। अतः शिक्षकः शिक्षणसमये अनुकूलसंवेगात्मकपरिस्थितिं सृजेत्। येन छात्रः अधिकाधिकानुभवं प्राप्तुं शक्नुयात्। दुःखसंवेगात्मकपरिस्थितौ शिक्षार्थिनां शिक्षणं, प्रतिकूलताम् उत्पादयति।

**( 5 ) परिणामस्य आशुज्ञानाय प्रशिक्षणस्य स्थानान्तरणम्-**

छात्रैः स्वप्रयत्नस्य शीघ्रपरिणामज्ञानेन छात्राणामधिगमगतिः संवर्धते इति अनुसन्धानेन ज्ञातमस्ति। परिणामः शीघ्रं न लभते चेत् अभिप्रेरणं न्यूनम्, अधिगमगतिः च मन्दा भवति।

अत: मूल्याङ्कनं शिक्षणप्रक्रियाया: अभिन्नमङ्गमिति मन्यते। अनया दृष्ट्या शिक्षार्थिन: स्वन्यूनतां, सफलतां च स्पष्टतया ज्ञातुं प्रभवेयु:। तत्तत्काले एव स्वस्तरोन्नते:प्रेरणा तेभ्य: लभ्यते।

**( 6 ) भौतिकसाधनं शैक्षिकसामग्रीं च प्रयोगार्थं प्रशिक्षणस्यस्थानान्तरणम्-**

भौतिकसाधनेषु प्रथमत: विद्यालयस्था: कक्षाप्रकोष्ठा: समुचितस्थले भवेयु:। येन प्रकाश:, स्वच्छवायु: च पर्याप्ततया छात्रै: प्राप्तुं शक्येत। विषये रुचिमुत्पादयितुं शैक्षिकसामग्रीणामपि यथावकाशम् उपयोग: भवेत्। तथा च तेषां स्थानान्तरणं करणीयम्।

**( 7 ) अध्यापकस्य व्यक्तित्वं कौशलञ्च स्थानान्तरणम्-**

शिक्षणप्रक्रियां प्रभावयितुं अध्यापक: एव सर्वात्मना मूर्धन्यं स्थानं भजते। वस्तुत: कक्षाया: संवेगात्मकस्थिति:, शिक्षार्थिव्यवहारस्य विकास:, तदर्थं निष्पत्ति स्वीकारणञ्च अध्यापकस्य कर्त्तव्यं भवति। अत: अध्यापकस्य स्वविषये पूर्णाधिकार: भवेत्। स छात्राणां काठिन्यम् अवगच्छन् विषये रोचकताम् उत्पादयेत्। अत: स: चरित्रवान्, छात्राणां श्रेष्ठमित्रं, विषयविशेषज्ञ:, पथप्रदर्शकश्च भवेत्। एतद् ज्ञानस्य स्थानान्तरणं भवति।

**( 8 ) नैतिक-आध्यात्मिकमूल्यस्य स्थानान्तरणम्-**

''सत्यंवद, धर्मंचर, स्वाध्यायान्मा प्रमद:, सत्यान्नप्रमदितव्यम्, धर्मान्नप्रमदितव्यम्, मातृदेवोभव, पितृदेवोभव:, आचार्यदेवोभव, अतिथिदेवोभव, श्रद्धयादेयं, आत्मनियंत्रणं कार्यम् अहिंसापरमोधर्म:, परोपकारार्थमिदं शरीरम्'' इत्यादीनां नैतिक-आध्यात्मिकमूल्यानां च छात्राध्यापकद्वारा छात्राणां चेतसि स्थानान्तरणम्।

**( 9 ) समाजिकमूल्यस्य स्थानान्तरणम्-**

आर्थिकसमानता, समाजसेवा, अयं निज:परोवेतिगणनालघुचेतसाम उदारचरितानां तु वसुधैव कुटुम्बकम्, सर्वेभवन्तु सुखिन: सर्वे सन्तु निरामया: सर्वे भद्राणि पश्यन्तु मा कश्चिद् दु:खभाग् भवेत्। समाजिकसंवेदनशीलता, राष्ट्रीयैक्यता, इत्यादीनां विचाराणां स्थानान्तरणं करणीयम्।

**( 10 ) राष्ट्रियमूल्यस्य स्थानान्तरणम्-**

शिक्षाया: राष्ट्रीयमूल्यानि, राष्ट्रसेवाभावना, राष्ट्रस्य उन्नत्यर्थं, राष्ट्रस्य अखण्डता, एकता इत्यादीनां भावानां स्थानान्तरणम्।

**( 11 ) संस्कृतशिक्षणस्य विधेश्च स्थानान्तरणम्-**

संस्कृतशिक्षणे गद्य-पद्य-रूपक-अनुवाद-रचना इत्यादीनां पाठानां अध्यापनशैली, विविध-विधीनां प्रयोगक्रम:, परिवर्त्यमानं मूल्यम्, आन्तरिकमूल्यम्, सौन्दर्यात्मक-विवेचनशैली इत्यादीनां प्रशिक्षणस्य स्थानान्तरणं करणीयम्।

**( घ ) निष्कर्ष: (Conclusion)**

मानवस्य युक्तायुक्तविवेचनं ज्ञानम् आवश्यकम्। तेन ज्ञानेन साकं स: युक्तकर्माचरण-

शीलः स्यात्। संस्कृताध्यापकाः दैवीगुणाविशिष्यः भवन्ति। संस्कृताध्यापकानां कृते वर्णित लक्षणानां गुणानां च भाविनः संस्कृताध्यापकान् प्रति स्थानान्तरणम् आवश्यकं भवति। छात्राणां व्यवहारे समुचितपरिवर्तनसम्पादनं हि उत्तम शिक्षणस्य उद्देश्यं भवति। शिक्षणेन अधिगमः, अधिगमेन व्यवहारपरिवर्तनम् ''प्रवर्त्तनायां परिवर्तनानयनम्'' [Change in behaviour] (आचरण-परिवर्तनम्) इत्यादीनां स्थानान्तरणं क्रियते। ज्ञानोत्पादनार्थं निरन्तरं शिक्षणप्रक्रिया प्रत्यक्षाप्रत्यक्षरूपेण सर्वेषु मानवेषु जायते एव। एतस्या प्रक्रियायाः स्तराः, कार्यप्रवर्तनं, कार्यसम्पादनं, उद्देश्यप्राप्तिः इत्यादीनि अनेकानि तत्त्वानि अत्र छात्रेषु स्थानान्तरणं करणीयम्।

卐 卐 卐

# 29

# दर्शनज्ञानस्य अन्यविद्यासु उपयोगः

# Utility of the Knowledge of Darshana in the Other Fields of Education

"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्या-प्रत्यगात्म-साक्षात्कारस्यैव मोक्षहेतुत्वं समर्थितं, तादृशसाक्षात्कारसाधकानि वेदान्तादीनि शास्त्राण्येव दर्शनशास्त्रपदव्यपदेश्यानि भवितुमर्हन्ति। आध्यात्मिकमूल्यानि मानवस्य जीवनस्य च महत्त्वपूर्णानि तथ्यानि भवन्ति। येषु येषु शास्त्रपदवाच्येषु-प्राधान्येनाध्यात्मविषयाः प्रतिपादिताः सन्ति, तत्र प्रसङ्गोपात्तानां लौकिकानामपि विषयाणां विश्लेषणस्य-तात्पर्यं यदि आध्यात्मविषय एव पर्यवस्यति, तदा तान्येव-दर्शनशास्त्रपदव्यवहार्यता समुपयान्तीति पण्डितमण्डलीषु प्रवहन्ती काचन परम्परा जागर्ति। प्रमुखषड्दर्शनशास्त्राणि-

गौतमस्य कणादस्य कपिलस्य पतञ्जले।
व्यासस्य जैमिनेश्चैव दर्शनानि षडेव हि।।

संस्कृतवाङ्मये वेदानां रक्षणार्थं षट्शास्त्राणि अङ्गभूतानि सन्ति-

शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा।
कल्पश्चेति षडङ्गानि वेदास्याहुर्मनीषिणः।।

**(क) अष्टादशविद्यासु दर्शनज्ञानस्य उपयोगः**

विष्णुपुराणे वर्णिताः—अष्टादशविद्या-

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश।।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्।
अर्थशास्त्रं परं तस्मात् विद्याह्यष्टादश स्मृताः।।

ऋग्यजुस्सामाथर्वण वेदाः, शिक्षा व्याकरणम् छन्दः निरुक्तम् ज्योतिषम् कल्प इति षडङ्गानि,

मीमांसा, न्यायः, पुराणम्, धर्मशास्त्रम् इति चतुर्दश विद्याः निर्दिष्टाः। आयुर्वेदः, धनुर्वेदः, गान्धर्ववेदः, अर्थशास्त्रम् इति अष्टादशविद्याः सञ्जाताः। "श्रोतव्यः श्रुतिवाक्येभ्यो-मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येयम् एते दर्शनहेतवः।" दर्शनज्ञानस्य अष्टादशविद्यासु उपयोगः इति विषये वृहद्विवेचनमत्र प्रस्तूयते। यथा-

(1) ऋग्वेदः— The first of the four Vedas.

(2) यजुर्वेदः— The second of the four Vedas.

(3) सामवेदः—The third of the four Vedas.

(4) अथर्ववेदः—The last of four Scriptures(Vedas)

(5) व्याकरणशास्त्रम्-The Science of Grammar.

(6) साहित्यशास्त्रम्(छन्दशास्त्रम्) The Science of Poetic/Rhetoric.

(7) ज्योतिषशास्त्रम्- The Science of Uranography/Astronomy.

(8) निरुक्तशास्त्रम्- The Science of Explanation of difficult word occurring in the vedas.

(9) कल्पशास्त्रम्- The Science of detailing of religious ceremonies.

(10) शिक्षाशास्त्रम्- The Science of rules for correct pronunciation of Vedic Mantras.

(11) मीमांसाशास्त्रम्- The Science of Hindu Philosophy.

(12) न्यायशास्त्रम्- The Science of Logic.

(13) पुराणशास्त्रम्- The Science of Archaeology.

(14) धर्मशास्त्रम्- The Science of Jurisprudence.

(15) आयुर्वेदशास्त्रम्- The Science of Medicine in Sanskrit.

(16) धनुर्वेदशास्त्रम्- The Science & Art of Arched.

(17) गान्धर्वेदशास्त्रम्- The Science of Music.

(18) अर्थशास्त्रम्- The Science of Economics.

**(1) वेदाः**—विद्यन्ते धर्मादयःपुरुषार्था यैस्ते वेदाः।

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते। वेदो धर्मनिरुपणे स्वतन्त्रभावेन प्रमाणम्, प्राचीनानि धर्मसमाजव्यवहार-प्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्च। मन्त्र समुदाय एव संहिता शब्देन व्यवहृतः। ब्राह्मणरूपो वेदभागस्तु संहिताभागस्यव्याख्यारूप एव। ब्राह्मण-ग्रन्थोऽपि-ब्राह्मणम्, आरण्यकम्, उपनिषदश्च, यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः, आरण्ये पठिताः यज्ञस्य आध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि। उपनिषदो ब्रह्मबोधिका मोक्षसाधनीभूता अयमेवभा

वेदान्तस्य अन्ततया वेदान्त इत्युच्यते। ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषदश्च सन्न्यासिनामुपयोगीत्यपि कथयितुं शक्यते। यथा-

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।

सेयं वेदस्त्रयीतिपदेनापि व्यवह्रियते, सा खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रागानमयी-रचना सा सामेति कथ्यते। ऋग्वेदेऽपि अथर्ववेदाना-मुल्लेखदर्शनात्।

**( 1 ) ऋग्वेद**-The first of the four Vedas

ऋच्यते स्तूयते यया सा ऋक्, तादृशीनामृचां समूह एव ऋग्वेदः। ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः—गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवशिष्ठादयः सन्ति। एते सर्वे ऋषयः—ऋषिसूक्तदेवतासूक्तछन्दःसूक्तार्थसूक्तभेदात् पृथक् पृथक् विवेचितव्याः। तेषामवलोकनेन इदं स्पष्टं भवति यत् दर्शनशास्त्रस्योपयोगः ऋग्वेदे दृश्यते।

**( 2 ) यजुर्वेद**- The second of the four Vedas.

यजूंपिगद्यानि, अध्वर्युणा यज्ञे उपयुज्यमाना मन्त्रा एवात्र यजुर्वेदे संकलिता। कृष्णयजुः शुक्लयजुः इति द्विप्रकारकः यजुर्वेदः, तेषु 1957 मन्त्राः सन्ति। येषु अग्नि चयनम्, उखाभरणम्, चितयः, रूद्रहः, शतरुद्रियम्, सोमसम्पादनविधिः इत्यादीनि विषयवस्तूनि दार्शनिकविचारधारायाः सम्बद्धानि सन्ति। दर्शनशास्त्रस्योपयोगःअत्र वर्तते।

**( 3 ) सामवेद**-The third of the four Vedas.

यज्ञे चत्वारो ऋत्विजो भवन्ति। होता-अध्वर्युः—उद्गाता-ब्रह्मा। होता-आह्वानकर्ता, स हि यज्ञावसरे प्रक्रान्त-देवतानां प्रशंसायां रचितान् मन्त्रान् उच्चारणयन् देवता आह्वयति। उच्चस्वरेण गानकर्ता, स हि स्वरबद्धान् मन्त्रानुच्चैर्गायति, तदपेक्षितो मन्त्रसंग्रहः सामवेदः। सामवेदस्य गानप्रचुरता प्रार्थिता, सामवेदे-1549 मन्त्राः सन्ति। सामवेदगत मन्त्राणां सप्तस्वराः यतस्ते गीयन्ते। पूर्वार्चिकमेव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामाभिरभिधीयते। उत्तरार्चिकन्तु अनुष्ठान निर्देशकम्। छन्दादिविवेचने एवंच अनुष्ठाननिर्देशने च दर्शनशास्त्रस्योपयोगः दृश्यते।

**( 4 ) अथर्ववेद**-The last of four Scriptures (Vedas)

अभिचार क्रियायाः प्राधान्येन प्रतिपादकोऽयं वेदः अथर्वनामकर्षिणा दृष्टत्वात् अथर्ववेद इत्युच्यते। अस्मिन् वेदे 5987 मन्त्राः विद्यन्ते। अथर्ववेदस्य नवशाखा आसन्, परं सम्प्रति शौनकपिप्पलाद समाख्ये द्वे एव शाखे प्राप्येते। अत्र दर्शनशास्त्रस्योपयोगः शौनकादि दार्शनिकविचारधारायां दृश्यते।

**( 5 ) व्याकरणशास्त्रम्**-The Science of Grammar.

मानवविचाराणाम् अभिव्यक्तिं, शुद्धां, परिष्कृतां, परिमार्जितां च कर्तुं भाषा विश्लेषणाय

व्याकरणम् आवश्यकम्। व्याकरणं वेदपुरूषस्य मुखमिति, येन प्रकारेण शरीरे मुखस्य स्थानं प्रधानं भवति तेनैव प्रकारेण वेदाङ्गेषु व्याकरणस्य स्थानं प्रधानं विद्यते। रक्ष-ऊह-आगम-लघुः— असंदेहः इति पञ्च प्रयोजनानि व्याकरणस्य वररूचिना वर्णितानि। व्याकरणविद्यायां दर्शनशास्त्रस्योपयोगाः अत्यधिकाः सन्ति। मनोरमायां प्रौढानां मनोरमयतीत्यर्थिकायाम् किं प्रौढत्वम्? ''सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् प्रौढत्वम्''महाभाष्यविचार-समये सकलदर्शनार्थस्य तत्र तत्र ध्वननात्। शब्दस्यैव प्रत्यगात्मस्वरूपत्वेन व्याकरणस्याप्यध्यात्मज्ञानोपायभूतत्वात् दर्शनशास्त्रत्वे नास्ति शङ्कापङ्कावकाशः।

अयमाशयः—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म' ब्रह्मैवेदं सर्वम्' आत्मैवेदंसर्वम्' इत्यादिभिः श्रुतिभिः जगत्कारणस्य सत्यत्वमेकत्वं ब्रह्मत्वम् आत्मत्वञ्च यथा प्रतिपाद्यते तथा ''वागेवार्थं पश्यति वागेवार्थं ब्रवीति वागेवार्थं निहितं सन्तनोति। ''ओमित्येतदक्षरमिदं सर्वम्''ओमितिब्रह्म'' इत्यादिभिः शब्द-स्वरूपतापि प्रतिपाद्यत इति शब्दब्रह्मेव जगत्कारणम्। शब्दब्रह्मप्राप्त्युपायत्वं च वाक्यपदीये भणितं भर्तृहरि महोदयाः— **''तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः, तस्य प्रवृत्ति तत्त्वज्ञो ब्रह्मामृतमश्नुते।''** इति कारिकया शब्दसंस्कार-द्वारा व्याकरणस्यावगम्यते। शब्दसंस्कारस्य सिद्धत्वं सिद्ध्युपायत्वात्। एवञ्च व्याकरणं दर्शनमिति कर्मधारये सर्वं व्याकरणं दर्शनमेव भविष्यति। भावसाधनत्वे-षष्ठी समासे व्याकरणस्य दर्शनमित्यर्थः। शास्त्रेन यद् यद् दृश्यते तत् सर्वमपिदर्शनमेव भवेत्। अस्यां स्थितौ पञ्चानां वृत्तीनामन्येषां वा प्रकृति-प्रत्यय-सन्धि-समास-कारकादीनां सर्वेषां दर्शनत्वे-न काचित् बाधाऽऽपतिष्यति। तथा च इदं शास्त्रं व्याकरणदर्शनं कथयितुं शक्यत इत्याहुः। अनेन सिद्ध्यति यत् दर्शनशास्त्रस्योपयोगः व्याकरणशास्त्रमिति सिद्ध्यति।

**( 6 ) साहित्यशास्त्रम्**- The Science of Poetic/Rhetoric.

''हितेन सह सहितः सहितस्यभावः साहित्यम्, '' अथवा ''सहितयोः भावः साहित्यम्।'' शब्दार्थयोः संयोगःसहित द्वावर्थौ स्तः। श्लोक लेखकाः कवयः इति गद्यलेखकाः रचयितारः इति परिगण्यते। यथार्थतः कवितायाः कृते भावनाशक्तिः प्रधानास्ति। लेखकः यदा भावाविष्टः भवति तदा तस्य मुखात् निस्सृतायां भाषायां कश्चन लयः स्यात्, सः लयः एव छन्दः इति व्यवह्रियते। 'गद्यं कवीनां निकषं वदन्ति' इति उक्तवन्तः आलङ्कारिकाः। सामान्य-वस्तूनां सन्निवेशाः दृश्यानि च कविभावनायां यदा भावितानि भवन्ति तदा रमणीयतया गोचरीभूतानि काव्यानि भवन्ति। गद्यशिक्षणस्य लक्ष्यमस्ति यत् भाषाज्ञान-सम्पादनम्, भाषासामर्थ्य-सम्पादनञ्चेति। किन्तु काव्य शिक्षणे प्रधानं लक्ष्यं रसास्वादनमेव। अस्मिन् शास्त्रे काव्य-दर्शन-व्याकरण-अलंकार-रस-उपमा- उपमेय-नीति-पुराण-इतिहासादीनां सर्वे विषयाः सन्निहिताः भवन्ति। अतः तस्य नाम साहित्यम्। 'कवेरिदं कर्मभावो वा काव्यम्।' काव्यस्य प्रयोजनं तु-

**धर्मार्थकाममोक्षाणां वैचक्षण्यं कलासु च।**
**करोति क्रीर्तिं प्रीतिञ्च साधुकाव्य निषेवणम्।।**

काव्यस्य प्रयोजनं यशप्राप्तिः, धनप्राप्तिः, सद्व्यवहारज्ञानम्, शिवेतरस्य च अपाकरणम्, सद्यःपरमानन्दस्यानुभूतिः तथा कान्ता सम्मतोपदेशश्च विद्यते।

रसो वै सः इति श्रुतेः? वाक्यं रसात्मकं काव्यम्? चतुर्वर्गफलप्राप्तिः? रीतिरात्मा काव्यस्य? काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते इत्यादीनां समस्यायाः समाधाने दर्शनशास्त्रस्योपयोगः सिद्ध्यति। एतानि विविधानि प्रश्नोत्तराणि दार्शनिक-विचारधारायाः परिप्रेक्षे जीवनसम्बद्ध-समस्तविषयाणाम् अध्ययनं क्रियते। अतःब्रह्माण्डस्य, जगतः, जीवनस्य, ईश्वरस्य च विशिष्टस्वरूप-विज्ञान-विषयेषु साधारणस्वरूपाणि च दर्शनमध्ये समायान्ति।

**( 7 ) ज्योतिषशास्त्रम्**-The Science of Uranography/ Astronomy.

इदं काल-विज्ञापकं शास्त्रम्। वेदानां पृथक् पृथक् ज्योतिषशास्त्रमासीत्।

**'सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।**
**वेदस्यनिर्मलं चक्षुर्ज्योतिश्शास्त्रमनुत्तमम्।।'**

आस्तिकाः ज्योतिषशास्त्रस्य समर्थकाः नास्तिकाश्च आलोचकाः भवन्ति। आस्तिक्य भावोद्भव ज्योतिषशास्त्रं दर्शनपदवाच्यं भवति। ज्योतिषशास्त्रे ग्रह-नक्षत्र-ईश्वरः—पक्ष-मुहूर्त-यात्रा-अर्द्धप्रहर-आध्यात्मिकादि विवेचनावसरे दर्शनशास्त्रस्योपयोगः भवतीति निर्विवादः। अष्टादशज्योतिषशास्त्र प्रवर्त्तकाः सर्वे आध्यात्मसमर्थकाःभवन्ति स्म। तेषां विवेचित शास्त्राणि दर्शनपदवाच्यानि सन्ति।

**( 8 ) निरुक्तशास्त्रम्**

The Science of Explanation of difficult word occurring in the vedas.

निरुच्यते निःशेषेणोपदिश्यते निर्वचनविधया तत्तदर्थबोधनाय पदजालं यत्र तन्निरुक्तम्। शिक्षाया वर्णोच्चारणप्रकारे व्याकरणेन च पदसाधुत्वज्ञाने सञ्जाते मन्त्रघटक-पदानाम् अर्थज्ञानाकांक्षायां मन्त्रघटकार्थज्ञानाय भगवता यास्केन निरुक्तं प्रणीतम्। निरुक्तस्य पञ्चविधयः भर्तृहरिणा कथिताः—

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौवर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।।**

वेदागतकठिनशब्दसंग्रहरूपो निघण्टुग्रन्थश्चिरादागच्छति स्म। तत्रैव यास्केन तद् व्याख्याभूतं निरुक्तं विरचितम्। निघण्टवोवेदा एव न वेदाङ्गानि तद् व्याख्या भूतं यास्कप्रणीतं निरुक्तमेव वेदाङ्गमिति सम्प्रदायः। पाणिनेःप्राचीनोऽयं यास्कः। अत्र यास्कनिरुक्ते चतुर्दशाध्यायः। वहवस्तु द्वादशाध्यायात्मकमेवेदं शास्त्रम्। अन्तिमौ द्वावध्यायौ तु प श्चाद्योजतावित्याहुः। आध्यात्म विवेचनकारणात् दर्शन- शास्त्रस्योपयोगः निरुक्तशास्त्रेऽपि भवति।

**( 9 ) कल्पशास्त्रम्**- The Science of detailing of religious ceremonies.

ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानाय पूर्णपरिचयप्रदायक-

ग्रन्थानामावश्यकताऽनुभूयते स्म। तामेवावश्यकतां स्वल्पेन शब्देन पूरयितुं कल्पसूत्राणि विरचितानि। कल्पसूत्राणि द्विविधानि-श्रौतसूत्राणि स्मार्त्तसूत्राणि च। श्रुत्युक्तयागविधिप्रकाशकानि श्रौतसूत्राणि, स्मार्त्तसूत्राणि अपि द्विधा-गृह्यसूत्राणि धर्मसूत्राणि च। धर्मसूत्रेषु धार्मिकनियमा, गृह्यसूत्रेषु षोडशसंस्काराणां विशिष्टं वर्णनं च वर्तते। वेदानां कल्पसूत्राणाम् आध्यात्मिक विचारधारायाः कारणात् दर्शनशास्त्रस्योपयोगः वर्तते।

**( 10 ) शिक्षाशास्त्रम्**

The Science of rules for correct pronunciation of Vedic Mantras.

तच्छास्त्रं शिक्षानाम येन वेदमन्त्राणामुच्चारणं शुद्धं सम्पाद्येत। वेदे स्वरस्य प्राधान्यं सर्वविदितम्। स्वरज्ञानं च शिक्षाऽऽयत्तम्। अतएवेदं शिक्षाशास्त्रं वेदाङ्गम्। वर्णः, स्वरः, मात्रा, बलम, साम, सन्तानइत्युक्तः शिक्षाऽध्यायः। एतदवबोधनमेव शिक्षायाः प्रयोजनम्। तेषु याज्ञवल्क्यशिक्षा, वाशिष्ठीशिक्षा, माण्डूकीशिक्षा, पाराशरीशिक्षा, अमोधानन्दिनीशिक्षा, नारदीयशिक्षा, शौनकीयशिक्षा, गौतमीशिक्षा, पाणिनीयशिक्षा च मुख्या। वेदभेदेन शिक्षाभेदो भवति। यथा-शुक्लयजुर्वेदस्य याज्ञवल्क्यशिक्षा, सामवेदस्य नारदीयशिक्षा इत्यादि। आध्यात्मिक ज्ञानचर्चिते सति दर्शनशास्त्रस्योपयोगः शिक्षाशास्त्रेऽपि भवति।

**( 11 ) मीमांसाशास्त्रम्**- The Science of Hindu Philosophy.

मीमांसायाश्चर्चा वेदस्य संहितायामुपनिषदि ब्राह्मणग्रन्थेषु च प्राप्यते। सोऽयं वेदे प्रयुज्यमानो मीमांसाशब्दो विचारार्थः इति। धर्माख्यं विषयं वक्तुं मीमांसायाःप्रयोजनम्, ईश्वरानङ्गीकार इति शास्त्रस्यास्य वैशिष्ट्यम्। आध्यात्मिक चर्चा कारणात् मीमांसाशास्त्रे दर्शनशास्त्रस्योपयोगः निर्विवादरूपेण भवति।

**( 12 ) न्यायशास्त्रम्**- The Science of Logic.

सूत्रकारगौतमस्य अतिप्रचीनं न्यायशास्त्रम। इदं शास्त्रं पदार्थमीमांसाशास्त्रम्। परमाणुकारणतावादोऽस्यविशिष्टाध्ययनमाकर्षति दार्शनिकानाम्। ईश्वरोऽनुमान- गम्यः, जीवन्मुक्तिःअपरनिःश्रेयस-शब्देन विदेहमुक्तिश्च परनिःश्रेयस शब्देन प्रतिपाद्यते। ईश्वरसम्बन्धिचर्चा, अध्यात्मिकचर्चा चेति उभयोः कारणात् न्यायशास्त्रेऽपि दर्शनशास्त्र-स्योपयोगः भवति इति मन्यते।

**( 13 ) पुराणशास्त्रम्**- The Science of Archaeology.

पुराणं पुरातनमाख्यानमुच्यते। संस्कृते पुराणशब्दः चिरन्तन पर्यायः। पुराणेषु भूत वर्तमान भविष्यश्चार्था वर्ण्यन्ते पुराणेषु। पुराणस्य लक्षणमित्थमुक्तम्-

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं चैव पुराणं पञ्च लक्षणम्॥**

पुराणसंख्याविषये मतभेदो नास्ति, सर्ववादिसिद्धं तेषां अष्टादशत्वम्-

मद्वयं भद्वयं चैव व्रत्रयं वचतुष्टयम्।
अनापलिङ्गकुस्कानि पुराणानि प्रचक्षते।।

पुराणानि अष्टादश सन्ति, उपपुराणानि अपि अष्टादश सन्ति, अनन्तरमष्टादश उपोपपुराणान्यपि सन्ति। अत: तेषां संख्या 18×3=54 सन्ति। एतान्यपि शास्त्रभागेऽन्तर्भवन्ति। ''पुराणं सर्वशास्त्राणां प्रमाणं ब्रह्मणास्मृतम्''इति मत्स्यपुराणवाक्यमत्र प्रमाणम्। अध्यात्मिक चर्चा कारणात् पुराणेऽपि दर्शनशास्त्रस्योपयोग: भवति।

**(14) धर्मशास्त्रम्-** The Science of Jurisprudence.

धर्मशास्त्राणि पुराणानि अपि शास्त्रकोटावन्तर्भूतानि भवन्ति। धर्मशास्त्राणि एव स्मृतय इति व्यवह्रियते। वेदे विद्यमाना: धर्मा: पुन: धर्मशास्त्रेषु स्मृता:। अतस्ता: स्मृतय: इति ख्याता:। मनुस्मृति:समाजशास्त्रस्य अद्वितीया कृतिरस्ति। मन्वत्रिविष्णुहारीतादि स्मृतय: विंशति सन्ति।, देवल-चन्द्रायण-कपिलादिभिश्च विरचिता: स्मृतय: पञ्चाशत् सन्ति। आहत्य-सप्तति स्मृतयस्सन्ति। मनुस्मृत्यादि ग्रन्थेषु धर्मविषयक चर्चा, आध्यात्मिक-चर्चा कारणात् धर्मशास्त्रमपि शास्त्ररूपेण गृहीतानि भवन्ति। अत: धर्मशास्त्रेऽपि दर्शनशास्त्रस्योपयोग: भवति।

**(15) आयुर्वेदशास्त्रम्-** The Science of Medicine in Sanskrit.

अस्माकं देशे ऋग्वेदकाले चिकित्साविज्ञानं प्रादुरभूत्। ऋग्वेदस्यायुर्व्वेद उपवेद: अस्ति। अस्य शास्त्रस्य प्रथमोपदेष्टा ब्रह्मा, एवं धन्वन्तरि, इन्द्र, भारद्वाजादि प्रभृतय: प्रवर्तका: सन्ति। ऋग्वैदिककाले जलचिकित्सा एवं सूर्यरश्मिचिकित्साया उल्लेख: समुपलभ्यते। धर्मार्थकाममोक्ष सिद्ध्यर्थ शल्य-शलाक्-काम-भूतादि चिकित्साभिहिता वर्तते। सांख्य-योगादि प्रभृतिदर्शनम् अस्मिन् शास्त्रेबौद्धिक् पक्षे प्रभावयति। यथा हि-

**अप्सस्वन्तरामृतमप्सु भेषजमपामुप प्रशस्यते।**
**अप्सु मे सोमो अब्रवीदन्दर्विवानि भेषजा:।।**
**अग्निं व विश्व सम्भवमापश्च विश्वभेषज:।**
**आप प्रणीत भेषजं वरुथं तन्वे मन।।**

चरकसंहिता आयुर्वेदशास्त्रस्य कृतिरस्ति। ग्रन्थोऽयं चिकित्सापद्धतिं यावदेव नास्ति परिसीमित:। अपितु ग्रन्थेऽस्मिन् सांख्यादीनां दर्शनतत्त्वानामपि ज्ञानं वर्तते। अत: अयुर्वेदशास्त्रेऽपि दर्शनशास्त्रस्योपयोग: भवति।

**(16) धनुर्वेदशास्त्रम्-** The Science & Art of Arched.

यजुर्वेदस्य उपवेद: धनुर्वेदोऽस्ति। संस्कृतसाहित्ये विभिन्नानां शस्त्राणां, यन्त्राणां च प्रयोगो समुपलभ्यते। अस्मिन् शास्त्रे युद्धविद्याया: कौशलं वर्णितमस्ति। यज्ञे उपद्रवकारिणां शमनाय अस्य वेदस्य उद्भव: जात:। एतस्मादेव शास्त्रात् विभिन्ना शस्त्रविद्या उत्पन्ना, धनुष: चालनाय अनेकानि प्रयोगाणि अस्मिन् वेदे निगदितानि। यथा-आलीढम्, प्राभालीढम् इत्यादीनि। अस्मिन् शास्त्रे वेदान्त दर्शनस्याध्यात्मबलप्रभाविते सति दर्शनशास्त्रस्योपयोग: भवति।

**( 17 ) गान्धर्ववेदशास्त्रम्-** The Science of Music.

वैदिकयुगे संगीतशास्त्रस्य प्रचार: प्रसारोऽपि बाहुल्येनाभवत्। एतस्मिन् युगे गायन-वादन-नर्तकेत्यादीनां त्रयाणां वर्णनं समुपलभ्यते। संगीतशास्त्रस्य सर्वप्रथम: ग्रन्थ: सामवेदरूपेण समुपलभ्यते। गान्धर्ववेद: सामवेदस्य उपवेदोऽस्ति। अस्य शास्त्रस्य प्रयोक्तार: वक्तारश्च देवयोनिविशेषा: गन्धर्वा: अभूवन्। ते देवतानां परिषदि गायका: आसन्। सामवेदस्य सप्तस्वरानुसारं गान्धर्ववेदे सप्तस्वरानां विवेचनं भवति। एतस्मादेव वेदात् संगीतशास्त्रं निष्पन्नं जातम्। गान्धर्वशास्त्रस्य प्रवर्तक: चित्ररथ:गन्धर्वराज: आसीत्। शास्त्रीयगायनं, स्वरस्य गाम्भीर्यम्, अध्यात्मिकचिन्तनञ्च दर्शनपदवाच्यं भवति। अत: अस्मिन् शास्त्रेऽपि दर्शनशास्त्रस्योपयोग: भवति।

**(18 ) अर्थशास्त्रम् ( अर्थवेद )** The Science of Economics.

अथर्ववेदस्य उपवेदोऽस्ति अर्थविज्ञानम्। अर्थस्य राजधर्मस्य च विशिष्ट-ज्ञानं अर्थविज्ञानम्। कौटिल्यस्य अर्थशास्त्रं राजनीते: प्रमुख: ग्रन्थो वर्तते। अस्मिन् ग्रन्थे राजानं राष्ट्रं च अर्थयुक्तं विधातुं प्रेरणा प्रदत्ता। एतस्य ग्रन्थस्यारम्भे उक्तं यत्-"**पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्तावितानि प्रशस्तानि तत् संहृत्यैक्यमिद-मर्थशास्त्रं कृतम्।**" एतस्य ग्रन्थस्य कतिपया: मुख्या: बिन्दव: सन्ति-

(क) विनयाविकारिक-अत्र राजवृत्ति:, वार्ता, राजर्षे:व्यवहार:, अमात्य:, गुप्तचर:, मंत्राधिकार: इत्यादीनां तार्किकं वर्णनमस्ति।

(ख) अध्यक्षप्रचार:-अत्र सुवर्णाध्यक्ष:, आयुधागाराध्यक्ष:, सूत्राध्यक्षश्चेत्यादीनां वर्णनमस्ति।

(ग) मण्डलानि-अत्र राजामन्त्रिणो: गुणानां वर्णनमस्ति।

अस्मिन् महाग्रन्थे समाजकल्याणवैयक्तिकत्यागस्य च भावनाया: योजना प्रस्तुता वर्तते। एतदतिरिक्तं राज्ञां राजनैतिक-नैतिकशिक्षायै पञ्चतन्त्रहितोपदेश सदृशानां ग्रन्थानां रचना सञ्जाता। नैतिक-आर्थिक-समाजिक-विश्लेषणकारणात् अर्थशास्त्रे दर्शनशास्त्रस्योपयोग: भवति।

卐 इति 卐

# सन्दर्भग्रन्थाः


| ग्रन्थाः | प्रणेतारः |
|---|---|
| 1. संस्कृत–शिक्षण | डॉ. रामशकल पाण्डेय |
| 2. संस्कृत–शिक्षण | डॉ. रघुनाथ सफाया |
| 3. संस्कृताध्यापनम् | डॉ. कानाल नल चक्रवर्ती |
| 4. शैक्षिकप्रविधिः | डॉ. रमाकान्त मिश्र |
| 5. भाषा विज्ञान | डॉ. भोला नाथ तिवारी |
| 6. भाषा शास्त्र एवं भाषाविज्ञान | डॉ. कपिलदेव द्विवेदी |
| 7. भाषाविज्ञान की भूमिका | डॉ. आचार्य देवेन्द्रनाथ शर्मा |
| 8. संस्कृत का भाषाशास्त्रीयअध्ययन | डॉ. भोला शंकर व्यास |
| 9. शिक्षाशास्त्रीय निबन्ध | डॉ. नाथूलाल गुप्त अग्रहरि |
| 10. संस्कृत शिक्षा समीक्षणम् | डॉ. इन्द्रा चरण पाण्डेय |
| 11. तर्कसंग्रह कौण्ड भट्ट, | आनन्द झा |
| 12. संस्कृत व्याकरणशास्त्र का इतिहास | डॉ. युधिष्ठिर मीमांसक |
| 13. सफल शिक्षण कला पाठक एवं त्यागी | |
| 14. व्याकरण महाभाष्य | पतञ्जलि |
| 15. संस्कृतशिक्षण सारणी | रामशास्त्री |
| 16. संस्कृतसाहित्यस्येतिहासः | डॉ. रामचन्द्र मिश्र |
| 17. भारतीय ज्योतिष शास्त्र | |
| 18. संस्कृत शिक्षण पद्धति | आचार्य सीताराम चतुर्वेदी |
| 19. प्राचीन भारतीय शिक्षण पद्धति | अनन्त सदाशिव अलतेकर |
| 20. साहित्य दर्पण | विश्वनाथ |

| | |
|---|---|
| 21. काव्यप्रकाश | मम्मटाचार्य |
| 22. अष्टाध्यायी | पाणिनि |
| 23. सिद्धान्तकौमुदी | भट्टोजिदीक्षित |
| 24. पाणिनीय शिक्षा | पाणिनि |
| 25. नाट्यशास्त्र | भरतमुनि |
| 26. संस्कृत साहित्य का इतिहास | बलदेव उपाध्याय |
| 27. शिक्षा के मूल सिद्धान्त | रामशकल पाण्डेय |
| 28. भारतीय दर्शन | डॉ. उमेश मिश्र |
| 29. संस्कृत शिक्षणम् | डॉ. च. ल. ना. शर्मा तथा फतेह सिंह |
| 30. व्याकरणशिक्षणविधि: | डॉ. रा. देवनाथ, डॉ. भुवनेश उपाध्याय |
| 31. शिशुबोध, शीघ्रबोध, वि. वि. पञ्चाङ्ग का०सिं०दरभंगा सं०वि०वि० | |
| 32. संस्कृतशिक्षणम् | सांवरमल भूषणा |
| 33. संस्कृत शिक्षणम् | डॉ. कम्मम्पाटि साम्बशिवमूर्ति: |
| 34. वाक्यपदीय | भर्तृहरि |
| 35. शिक्षा मनोविज्ञान | डॉ. एस. एस. माथुर |
| 36. संस्कृत शिक्षण | डॉ. प्रभाशंकर मिश्र |
| 37. पुरातनी शिक्षा | डॉ. लोकमान्य मिश्र |
| 38. शिक्षा दर्शन | डॉ. रामनाथ शर्मा |
| 39. शिक्षाया: दार्शनिकाधारा: | डॉ. सोमनाथ साहु |
| 40. अभिज्ञानशाकुन्तलम् | कालिदास |
| 41. उत्तररामचरितम् | भवभूति: |
| 42. किरातार्जुनीयम् | महाकविभारवी |


卐 卐 卐



डॉ. उदय शंकर झा, पुत्र-श्री स्व. जयकान्त झा का जन्म दिनांक 03.04.1957 को सीतापट्टी, मधुबनी (बिहार) में हुआ। इन्होंने आचार्य- द्वय (नव्य एवं प्राचीन व्याकरण), एम.ए. (संस्कृत), एवं श्रीलालबहादुर शास्त्री राष्ट्रीय संस्कृत विद्यापीठ-नई दिल्ली से शिक्षाशास्त्री (बी.एड.) तथा सन् 1994 में श्रीकामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालय-दरभंगा से विद्यावारिधि (पीएच.डी) की उपाधि प्राप्त की। वर्तमान में डॉ. झा कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालय-दरभंगा के शिक्षाशास्त्र (बी.एड.) विभाग में प्रध्यापक के पद पर कार्यरत है ।

## विषय वस्तु

- संस्कृतभाषायाः महत्त्वम्
- संस्कृतशिणस्योद्देश्यानि
- पाठ्यक्रमे संस्कृतस्य स्थानम्
- भाषाशिक्षणस्य कौशलानि
- भाषाशिक्षणस्य सामान्यसिद्धान्ताः शिक्षणसूत्राणि च सिद्धान्ताः
- संस्कृतशिक्षणविधिः
- अधोलिखितानां-शिक्षणम्
- पाठ्य-योजना
- संस्कृतशिक्षणे दृश्यश्रव्यापकरणानि
- विभिन्नसंस्थानानां प्रयोगात्मक-प्रयास
- प्राचीनार्वाचीन-मूल्यांकन-प्रविधयः
- व्याकरणशिक्षणस्य महत्त्वम्
- व्याकरणशिक्षणे प्रणाल्यः युक्तयश्च
- व्याकरणशिक्षणम्
- व्याकरणशिक्षणविधयः
- साहित्यशास्त्रस्य परिचयः
- साहित्यशिक्षणविधयः
- ज्योतिष-शास्त्र शिक्षणम्
- दर्शनशास्त्रशिक्षणम्




प्राप्ति स्थान

चौखाम्बा पब्लिशिंग हाऊस
4697/2, 21-ए, अंसारी रोड़,
दरियागंज नई दिल्ली - 110002
फोन न. 011-23286537, 32996391

चौखम्बा सुरभारती प्रकाशन
के - 37/117 गोपाल मंदिर लेन
वाराणसी-221001
फोन न. 0542-2335263, 2335264